ॐ



सनातनजैनग्रंथमाला।
५

आचार्यवर्य्य श्रीगुणनंदिविरचिता

# जैनेंद्रप्रक्रिया।

६—१२

संपादकः–
श्रीलालजैन व्याकरणशास्त्री।

प्रकाशकः–
पन्नालालजैनमंत्री भारतीयजैनसिद्धांतप्रकाशिनीसंस्था काशी

मुद्रकः–
घटोपीप्रसादः ई. जे. लाजर्समेडिकलहालयंत्रालयाध्यक्षः
गौरीशंकरलालचंद्रप्रभायंत्रालयस्य व्यवस्थापकश्च।

वीरनिर्वाण संवत् २४४१। ईस्वी सन् १९१४।

प्रथमावृत्तिः ] ॥श्रीः॥ [मूल्यं सार्द्धरूप्यकं।

# प्रस्ताव ।

सत्स्वपि नैकविधेषु व्याकरणशास्त्रेषु कथंचिच्छन्दसिद्धिमवधार्यत्सु पाणिनीयमुग्धबोधादिषु यदिदं प्रकाशपदमानीतन्तत्रास्यापरिशीलितमनीषिप्रवेष्टव्यत्वाखिलाङ्गसौंदर्यादिगुणगणं विहाय नो निमित्तान्तरं । तदेवेदं व्याकरणशिरोमणीयमानं व्याकरणं यद्विरचयितृविषये श्रीवोपदेवनिर्मितधातुपाठे दरीदृश्यते वाचोयुक्तिरियं —

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यामरजैनेन्द्रा जयंत्यष्टादिशाब्दिकाः ॥

अस्ति यथार्थनामास्य शब्दार्णवस्तथाप्येतन्निर्मातुर्देवनंदिपूज्यपाद जिनेंद्रबुद्ध्यादिनैकाभिधया प्रकाश्यमानतयैनज्जैनेंद्रमित्याचक्षते लोकाः ।

यदिदमायाति दृष्टिपथमधुना भवता मधरत्न, वर्तते तदस्यैन जैनेंद्राभिधयाभिधीयमानस्य शब्दार्णवव्याकरणस्य शाकटायनादिप्रक्रिया तत्पुरासनतमेय प्रक्रिया । संस्कृतप्रविविक्षूणामल्पमतीनामपि सुकरः प्रवेशोऽध्ययनेनास्या[1] । लघुरप्येयमावहति सामान्यकार्यकरमखिलसूत्रसंदोहभरं । केवलामपीमामधीयतामाशु भवति सुदुस्तरोपि संस्कृतमहोदधिरसुखेनैव क्षणैकतर. । प्रवेशयति चेयमखिलटीकासु यत्र तत्रोपलभ्यमानासु शब्दार्णवचंद्रिकाप्रभृतिषु सारल्येन । कृतश्चाप्यार्येणास्या प्रकरणविभागः संधिनामसमासतद्धितमिङ्तकृदतेति षोढा । तथा चोक्तं—

१ यो देवनंदिप्रथमाभिधानो बुद्ध्या महत्या स जिनेंद्रबुद्धि. ।
श्रीपूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं तदीयं ॥

संधेर्नाम्नः समासस्य तद्धितेर्मिङ्कृतोरपि ।
संक्षेपादज्ञसंज्ञप्त्यै प्रक्रियामवतारये ॥ १ ॥

विषयाणामेषामेतादृश्यवतारिता प्रक्रियाऽऽचार्यवरेण यथा सतसंप्रयुज्यमानानां तेषां न कस्यचिदवशेषो यो हि नोदाहृतोऽस्यां । उपलभ्यते चास्यां प्रक्रियांतरानुपलभ्यमाना सुसमीचीनानर्घा रीतिर्युदाहृताः सौगम्याय संधिषु पूर्वावस्थाः षड्लिंगे शब्दोत्पादका धातवश्चाजंतहलंताशेषशब्दाः समासे विग्रहास्तद्धिते सार्थप्रत्यया मिङ्कृते धातूनां सर्वरूपाणि कृदंते चार्थपुरस्सरमुख्यमुख्यविषयाः । नास्ति कश्चिदवशिष्टोऽजंतेषु हलंतेषु वा शब्दो यस्य नोदाहृता रूपनयनरीतिः । एवमतिहितकारिण्याः निखिलव्याकरणान्नसुशोभितायाश्चास्याः कर्ता सुगृहीतनामधेयो महनीयपादो श्रीमदाचार्यवरो गुणनदी कदा धारामंडलमिम मंडयामास स्वशरीरमंडनेनेति न पार्यते निर्णेतु जैनेतिहासप्राप्यमाणितयेति महद्दुःखेनावद्यते, पर तथापि नंदिसंघपट्टावल्लिलेखमनुसृत्य शक्यते वक्तुं यदनेनाचार्यवरेण जैनेंद्रसूत्रपाठनिर्मातुः पूज्यपादपूज्यपादाचार्यशिष्यशिष्येण भाव्यं । तदनुसारतोऽस्य समयोऽपि ३५४ तमे संवत्सरे संभाव्यते ।

नासीत्सत्तोत्तरखंडे भारतस्यास्याः सर्वोपकारिण्याः प्रक्रियायाः प्राक् प्रकाशनात् । अलाभ्यत्र संध्यादिपंचवस्तुसमन्वितान्विनार्थापंचवस्तु नाम्नी लघीयसी प्रक्रिया सा हि न व्याकरणसर्वस्वप्रदीपिका छात्रजनातिहितकारिणीत्यतो नाध्ययनाध्यापने प्राचरत् , नापि प्राचारयत प्रचारकैः । समवलोक्य चेमामेतादृशीमन्याञ्चाचार्यकृतामनुपलभ्यमानामुद्दिधीर्षुर्जैनेंद्रव्याकरणं लब्धवर्णसंदोहस्सांप्रतिकपंडितसाहाय्येनामितरां प्रक्रियामुदचिकीर्षत् । परं न तत्र सततं विघ्नव्यूहव्याहन्यमानतया साफल्यमुपेयिवान् । अत्रांतराल एवाश्रांतपरिश्रमेणोदिधीर्षवो

जैनांकितं पुरातनं वाङ्मयं तदुन्नयदत्तसर्वस्वाः पूज्यतम पं० **पन्नालाल बाकलीवालाः** दक्षिणप्रांतस्थविद्विच्छ्रेष्ठ के. कुमारैया महाशयसाहाय्येन तालपत्रस्थकार्णाटिकलिपिलिखितामिनां प्रक्रियामुपालभतातिश्रमेण। विलोक्य चैनामुपयोगिनीं तदभावाभावनिष्पादनसमर्थां प्रकाशयितुमनसो मां कर्णाटकलिपिमभ्येतुं प्रैरयन्। माननीयो गुरूणामनुग्रहः, इत्यवहितचेतसा मयापि विहितो यत्नो गरीयसायासेन, अवाप्नुवञ्चातिसाफल्यमराभि च नागरीलिपिप्रातिछ्यमानां तां कर्तुम्। समपादि च तेनैवैकपुस्तकेन बहुकालमतो नाशक्नुवमङ्कान्प्रदातुं सूत्रसंख्यासख्यापकान्, अवशिष्टा च शंकितस्थलबहुलताऽऽक्षरसाम्यान्नवलिपिसप्रवेशात्पुस्तकैक्याच्च। गते चानल्पसमये तैरेव पं० के. कुमारैयामहोदयैरनुग्रहवशतया प्रेषितं पुस्तकांतरं। परं नासीत्तच्छुद्धमासीच्चास्यैवानुकृतिरिति न साहाय्यमवाप्तं तेन। तदन्तरे **बाबूचंद्रसेन** जैनवैद्यमहोदयैः**शब्दार्णवचंद्रिका**स्यैवलघुवृत्तिरनुगृह्य प्रेषिता। सासीदतीव शुद्धा प्राचीनतमा चेति महत्साहाय्यमवत्तमिति चिरमनुगृहीतास्तेषां। समभीप्सितां विद्याभिवृद्धिमेतेषामुपरि विनिवेदितमहाशयानां नो विस्मरिष्यामो महदेतदुपकारभरम्। कालनिर्णयादिकं चाचार्यवरदेवनंदिपादानां प्रकाशयिष्यामो यथासाधनं शब्दार्णवचंद्रिकाप्रस्तावनोल्लेखसमये।

समुपलभ्यंते चास्य जैनेंद्र ( शब्दार्णव ) व्याकरणस्य निम्नलिखितानि व्याख्यानादीन्यधुना—

१ **पंचवस्तु**—( लघुजैनेंद्र )–लघुकौमुदीसदृशी लघीयसी प्रक्रियैषा।

२। **जैनेंद्रप्रक्रिया**—( लघुः ) आचार्यवरगुणनंदि विरचिता नातिलघ्वी संस्कृतपिपाठिषुमहद्धितकरी प्रक्रियातो मुद्रापितेयमखिलटीकातः प्राक्।

३ । जैनेंद्रप्रक्रिया—( गरीयसी ) श्रीमद्विद्वच्छिरोमणि पं० वंशीधरमहानुभावैर्विरचिता सिद्धांतकौमुदीसंपूहमाणातिमहती प्राक्रियेयमपि मुद्राप्यते तैरेव शोलापुरनगरे।

४ । शब्दार्णवचंद्रिका—( जैनेंद्रलघुवृत्तिः ) श्रीमदाचार्यवरश्रीसोमदेवसूरिविरचिता निखिलसूत्रार्थप्रकटनकरी नातिमहती वृत्तिरियमपि मुद्राप्यतेऽत्र ।

५ । जैनेंद्रमहावृत्तिः—श्रीमदाचार्य—अभयनंदिविरचिता पाणिनीयकाशिकावृत्तितोपि महद्व्याख्यानदीपिका। मुद्राप्यते कादयामन्यत्र ।

६ । न्यासः—श्रूयते समुपलब्धिर्दक्षिणप्रान्तेऽस्य । प्रयत्यते तदुपलब्धये ।

विरम्यते चांतेर्थयित्वाखिलमहाशयपुरस्तात् प्रमादविहिताशुद्धीरवक्षन्तुं नतिपुरस्सरमावेद्य चेदमिति शम् ।

गच्छतस्स्खलनं क्वापि भवत्येव प्रमादतः ।
हसति दुर्जनास्तत्र समादधति सज्जनाः ॥

विदुषामनुचरः
श्रीलालजैनः ।

परिशिष्ट नं. १

## ८० तमपृष्ठस्य च्युतपाठः ।

शुनः । शुना । श्वभ्या । श्वभिरित्यादि । तथा युवन् मघवन् शब्दयोरप्युशि कृते दीर्घेऽभवतः । यूनः । यूना । युवभ्यामित्यादि । मघोनः । मघोना । मघवभ्यामित्यादि नेयं । करिन्शब्दस्य भेदः । ततः स्यादयः । इन्हन्नित्यादौ वर्तमाने—

२८८(क) सौ । ४ । ४ । १० । इनादीनां किवर्जिते सौ दीर्घभवति । करी । करिणौ । करिणः । हे करिन् । हे करिणौ । हे करिणः । करिण । करिणौ । करिणः । इत्यादि । तथा हस्तिन् शिखिन् गामिनित्येवमादयः । पथिन् शब्दस्य भेदः "सावनडुह." इत्यधिकृत्य—

२८८ (ख) पथिमथ्यृभुक्षणामात् । ५ । १ । ६६ । पथिन् मथिन् ऋभुक्षिन् इत्येतेषामाकारादेशो भवति सौ परतः । सोरिरविसर्जनीयौ ।

२८८ (ग) एर्द्धे । ५ । १ । ६७ । पथ्यादीनामवयवस्येकारस्याकारादेशो भवति घे परतः ।

२८८ (घ) थो न्थः । ५ । १ । ६८ । पथ्यादीनां थकारस्य स्थाने न्थो भवति घे परतः । पन्थाः । पन्थानौ । पन्थानः । हे पन्थाः । हे पन्थानौ । हे पन्थानः । पन्थानं । पन्थानौ । शसादौ-

परिशिष्ट नं. २:

## ४२ तमस्यच्युतपाठः

६३ (क) श्यनेप्सुद्धं । १ । १ । ३१ । शिअनप्सुद् च घसञ्ज्ञ भवति ।

# शुध्यशुद्धिपत्रम्।



| पृष्ठाङ्काः | पंक्तयः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ६ | ७ | हकाराद्वर्जित | हकाराद्वर्जित |
| ८ | ८ | ” | ” |
| ११ | ६ | व्यंत्यादचः | व्यत्यायचः |
| १६ | ९ | झयः (वृत्तिः) | पदातादुत्तरस्य हकारस्य पूर्वस्य वा भवति |
| १७ | ८ | कुङ्कुशेते | कुङ्कुशेते |
| २१ | २१ | कण्टकिः | कण्डिकः |
| २४ | १ | जशः शी | जसः शी |
| २९ | ६ | च कृतेऽय- | चाकृतेऽय- |
| ” | १८ | सर्वशब्दवत् | धर्मशब्दवत् |
| ४३ | ३ | मुनीं | मुनिं |
| ४४ | १७ | मृदः परस्य | मृदः पदस्य |
| ४६ | १७ | क उप् | क इत् ? |
| ४७ | १६ | गिनाक् | गिनाक् |
| ५२ | १८ | एव मातृ | एव भ्रातृ |
| ५५ | १९ | गोशब्दः | ग्लौशब्दः |
| ५७ | १८ | हे जरमे | हे जरसी |
| ५८ | १२ | उत्तर— | अंतर— |
| ६१ | १३ | मोरव— | गौरव — |
| ६६ | १२ | चमूजमू | घमजन् |

| पृष्ठांकाः | पंक्तयः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ,, | १३ | भ्रमेश्चेड्— | भ्रमेश्च डुः |
| ,, | १५ | हे भ्रोरि— | हे भ्रूरि— |
| ६९ | ८ | अनेक— | नैक |
| ७१ | १० | दध्यक्षोऽनड् | दध्यक्ष्णोऽनड् |
| ७५ | ६ | मित्रद्रुक् | मित्रध्रुक् |
| ८२ | ७ | डकारातः प्राड्शब्द | ढकारातः प्रौढ् शब्दः। |
| ८३ | १ | सृग् | स्रग् |
| ८५ | १० | विकिड् | विक्रीड् |
| ,, | ,, | क्रिड् | क्रीड् |
| ८८ | २१ | उद उत्तरस्य | उद उत्तरस्य भस्य |
| ९० | १७ | नुम् भवति | नुम् अख च न भवति |
| ,, | २० | प्रैत्यादि | प्रत्यादि |
| ९१ | २० | स्महतौ | स्महतो |
| ९७ | १३ | लकारजकारा— | लकारमकारा— |
| १०१ | १ | गर्दप्। गर्दब् | गर्धप्। गर्धब् |
| १०५ | ४ | भ्यसोऽत् | भ्योऽसोऽत् |
| १०९ | १२ | कृतमित्यादिना शिनि- | कृकम्यादिना सिनिषेधः |
| ११२ | १२ | गुणोक्तोरु | गुणोक्तेरु |
| ,, | १४ | पृदु पृद्वी | पृथुः पृथ्वी |
| ११८ | ५ | द्विरुक्तैरघोऽभि | द्विरुक्तैरधोभिः |
| ११९ | १३ | गार्गः | गार्ग्य. |



# जैनेंद्रसंज्ञापरिचयः।

| जैनेंद्रसंज्ञा | पाणिनीयसंज्ञा | जैनेंद्रसंज्ञा | पाणिनीयसंज्ञा |
|---|---|---|---|
| अृगः | आर्द्धधातुकं | घिः | लघुः |
| अप् | चतुर्थीविभक्तिः | ङः | अनुनासिकं |
| इत् | इत | ङिः | भावकर्म |
| इप् | द्वितीयाविभक्तिः | चः | अभ्यासः |
| इन्ह् | पद् | झि। | अव्ययं |
| ईप् | सप्तमी विभक्तिः | व्यः | कर्मव्यतिहारः |
| उङ् | उपधा | टिः | टिः |
| उत् | प्लुतः | ता | षष्ठीविभक्तिः |
| उप् | लुप् | तिः | गतिः |
| उस् | लुक् | त्यः | प्रत्ययः |
| एप् | गुणः | थः | अभ्यस्तं |
| ऐप् | वृद्धिः | दः | आत्मनेपदं |
| फ। | पंचमी विभक्तिः | दिः | प्रगृह्यं |
| किः | संबुद्धिः | दीः | दीर्घं |
| खं | लोपः | दुः | वृद्धं |
| ग्रुः | संज्ञा | द्यु | उत्तरपदं |
| गः | सार्वधातुकं | घं | सर्वनामस्थानं |
| गिः | उपसर्गः | त्रिः | अकर्मकं |
| गुः | अंगं | नुः | [illegible] |

| जैनेंद्रसंज्ञा | पाणिनीयसंज्ञा | जैनेंद्रसंज्ञा | पाणिनीयसंज्ञा |
|---|---|---|---|
| निः | निपात | वा | प्रथमा विभक्ति |
| नप् | नपुंसकलिंग | वाक् | उपपद |
| न्यक् | उपसर्जन | वृद्ध | गोत्र |
| पः | प्लुत | व्यः | ह्रस्व |
| प्रः | ह्रस्व | वर्त्स्यत् | भविष्यत् |
| बं | बहुव्रीहि | षं | तत्पुरुष |
| बोध्यं | संबोधन | सः | समास |
| भा | तृतीयाविभक्ति | सत् | वर्त्तमान |
| घुः | घु | सु | घि |
| मं | परस्मैपद | स्फः | संयोग |
| मिङ् | तिङ् | स्वं | सवर्ण |
| मुः | नदी | स्तिः | सर्वनाम |
| मृत् | प्रातिपदिक | स्थि | सख्या |
| यः | कर्मधारय | हः | अव्ययीभाव |
| रः | द्विगु | हृत् | तद्धित |
| रुः | गुरु | ह्वादिः | जुहोत्यादि |





श्रीपूज्यपादाय नमः ।

सनातनजैनग्रंथमाला ।

५

आचार्यवर्य श्रीगुणनंदिविरचिता

# जैनेंद्रप्रक्रिया ।



सर्वज्ञाय नमस्तस्मै वीतक्लेशाय शंभवे ।
येन भव्या भवाम्भस्तमस्तोमाब्धिः किलेरितः ॥ १ ॥

अथ प्रत्याहारक्रमोऽनुवर्ण्यते—

अ इ उ ण् । ऋ ऌ क् । ए ओ ङ् । ऐ औ च् । ह य व र लण् । ञ म ङ ण न म् । झ भ ञ् । घ ढ ध ष् । ज ब ग ड द श् । ख फ छ ठ थ च ट त व् । क प य् । श ष स अं अः ᳵक ᳶप र् । हल् । इति प्रत्याहारसूत्राणि[1] । उक्तं च—

सुत्रयोदशसूत्राणि तावंतश्चानुबंधकाः ।
षट् चत्वारिंशतो वर्णाः प्रत्याहारस्य संग्रहे ॥

इति सर्वे वर्णा अलित्युच्यते । तत्कथं—

---

१ । महावृत्तिपंचवस्त्वादिषु पाणिनीयप्रत्याहारसूत्रवत्प्रत्याहारसूत्राणि वर्तन्ते ।

१ । सात्मेतादि[1] । १ । १ । इता सहोच्चार्यमाणो वर्णः समुदायो वा आदिभूतस्तन्मध्यपतितानां संज्ञा भवत्यात्मना सह । कथमित्संज्ञा—

२ । अप्रयोगीत्[2] । १ । २ । इह शास्त्रे संव्यवहारायोपदिश्यमानो वर्णः समुदायो वा यो लौकिकशब्दप्रयोगे न श्रूयते स इत्संज्ञो भवति । शास्त्रे कार्यार्थमापद्यमानो लोके चाश्रूयमाणो यः स इत्संज्ञो भवति इत्यर्थः । एवं अच् हल् वल् इत्यादयो योज्याः । यस्येत्संज्ञा तस्य लोपः । कथं पुनरिहानुपदिष्टा द्विमात्रत्रिमात्रा दीर्घप्लुता गृह्यंते । स्वग्रहणात् । कथं—

३ । स्वस्याभाव्योऽत्परोऽणुदित्[3] । १ । १ । अण् च उदिच्च गृह्यमाणः स्वस्य ग्राहको भवति आत्मना सह भाव्यं तपरं च वर्जयित्वा । इत्यणा द्वित्रिमात्राणां ग्रहणं भवति । कोऽयं भाव्यः—

आदेशः प्रत्ययश्चैव कटमितो हि लक्षणे ।
भाव्यशब्देन पंचैते कथ्यंते देवनंदिभिः ॥

तपरं किं नाम—

तात्परं च तत्पूर्वं च स्वं न गृह्णात्यणां कुलं ।
विग्रहद्वयसंकल्पाद्यथाऽदेडेचिति स्मृतौ ॥

---

१ । अस्य स्थाने महावृत्तौ अन्येनेतादिः । १ । १ । ७३ । इति सूत्रमुपलभ्यते । २ अस्य स्थाने महावृत्तौ कार्यार्थोऽप्रयोगीत् । १ । २ । ३ । इति सूत्रं वर्त्तते । ३ अस्य स्थाने महावृत्तौ-अणुदित्स्वस्यात्मनाऽभाव्योऽतपरः । १ । १ । ७० । इति सूत्र दृश्यते ।

किं पुनः स्वं नाम—

४ । सस्थानक्रियं स्वं । १ । १ । यस्य वर्णस्य स्थानं क्रिया च येन वर्णेन समानं भवति स तेन तुल्यस्थानक्रियत्वात्स्वसंज्ञो भवति । किं पुनः स्थानं—वर्णनामुत्पत्तेरधिकरणभावं बिभ्राणः शरीरावयवः स्थानं । तदष्टधा । तद्यथा-कंठताल्वोष्ठमूर्द्ध-दंतोरोजिह्वामूलनासिकमिति । आह च—

अष्टौ स्थानानि वर्णानामुरः कंठः शिरस्तथा ।
जिह्वामूलं च दंताश्च नासिकोष्ठौ च तालु च ॥

का वा क्रिया—तेषामेव वर्णानामुत्पादावात्मनः प्रयत्नविशेषपूर्वकः परिस्पंदरूपः कंठादीनां प्रवृत्तिविशेषः क्रिया । सा चतुर्धा--स्पृष्टता, ईषत्स्पृष्टता, विवृतता, ईषद्विवृतता चेति । कस्य पुनः किं स्थानं का वा क्रिया—अकुहविसर्जनीयजिह्वामूलीयाः कंठ्याः । कुर्जिह्वामूली । हविसर्जनीयौ उरस्यौ । जिह्वामूलीयो जिह्वयः । सर्वमुखस्थानमवर्णमित्येके । इ ए ऐ चु यशास्तालव्याः । ए ऐ कंठताल्व्यावित्येके । उ ओ औ पूपध्मानीया ओष्ठ्याः । ओ औ कंठौष्ठ्यावित्येके । ऋटुरषा मूर्धन्याः । रेफो दंतमूल इत्येके । लृतुलसा दंत्याः । वो दंत्योष्ठ्यः । सृक्वस्थानमित्येके । नासिक्योऽनुस्वारः । कंठ्यनासिक्य इत्येके । तथा स्पृष्टं करणं ककारादिमकारांतानां पंच पंच भूत्वा पंचवर्गसंज्ञानां । ईषत्स्पृष्टं यरलवानामंतःस्थसंज्ञकानां । विवृतमचां । ए ओ विवृततरौ । ताभ्यामै औ । ताभ्यामवर्णः । ईषद्विवृतं शषसहानामूष्मसंज्ञकानां । संवृतं नामकरणं पंचमवर्णस्येत्येके । तथाह—

> यर्गेषु स्पृष्टमंत:स्थेप्वीपच्च विवृतं त्वचि ।
> ईपच्चोप्मस्ववर्णे च संवृतं करणं विदुः ॥

इति स्वग्रहणविभागः। तत्र अ इति प्रसंज्ञाकारः । उदात्ता-नुदात्तस्वरितश्चेति त्रिप्रकारः । पुनरपि प्रत्येकं ङसंज्ञकोऽङ-संज्ञकश्चेति द्विप्रभेदः । इति षोढा । एवं दीरेवं पः । इत्येवमष्टा-दशात्मकमवर्णं ब्रुवते । आह च—

> प्रदीपाख्यप्रभेदाच्च त्रैस्वर्योपनयेन च ।
> ङसंज्ञेतरभेदादः संख्यातोऽष्टादशात्मकः ॥

स च परस्परस्य स्वो भवति। तथा इवर्णः। तथा उवर्णः। तथा ऋवर्णः। तथा ऌवर्णः। ऌवर्णस्यानुकरणादन्यत्र दीर्नास्ति। एचां प्रा न संति । ते द्वादशप्रभेदाः । यवला द्विप्रभेदाः । ङ संज्ञका अङसंज्ञकाश्चेति । रेफस्योप्मणां च स्वे न संति। वर्ग्यो वर्ग्येण स्वमेति । शास्त्रे संव्यवहारप्रसिद्धये संज्ञारूपाणि प्रदर्श्यंते । तत्र--अण् । अक् । इक् । उक् । एङ् । अच् । इच् । एच् । ऐच् । अण् । इण् । यण् । अम् । यम् । ङम् । यञ् । झष् । भष् । अश् । हश् । वश् । झश् । जश् । बश् । छव् । मय् । भय् । झय् । खय् । यर् । झर् । खर् । चर् । शर् । अल् । हल् । वल् । झल् । शल् । इत्येकोनचत्वारिंशत्प्रत्याहाराः। तथाह—

> णङमैश्चतसः पाद् द्वे संज्ञे कणमैर्नव ।
> चयाभ्यामष्ट शेनैता षड्लाभ्यां दशैव ताः ॥ क प्रादि:-

५ । ऊकालोऽच् प्रदीपः । १ । २ । एकमात्रकालोऽच् प्र इति संज्ञो भवति । द्विमात्रकालोऽच् दी इति संज्ञो भवति । त्रिमात्रकालोऽच् प इति संज्ञो भवति । तथाह—

एकमात्रः प्रसंज्ञः स्याद् द्विमात्रो दीरितीरितः ।
त्रिमात्रस्तु प इत्युक्तो हल्संज्ञं त्वर्द्धमात्रिकं ॥
वर्गेष्वाद्यो द्वितीयश्च शषसा अप्यघोषकाः ।
तृतीयतुर्यवर्णाः स्युर्महाप्राणा हसंयुताः ॥
इति प्रत्याहारानुप्रवेशः समाप्तः ॥ १ ॥



संधेर्नाम्नः समासस्य कृद्विधेर्मिङ्कृतोरपि ।
समासादक्रमं कृत्वा प्रक्रियामवतारये ॥ १ ॥

तत्र प्रथमं तावत्संधिमनुवर्णयिष्यामः । तद्यथा—कः संधिः-पूर्वोत्तरवर्णानां परस्परमव्यवधानेन संधानं संधिरविराम इत्यर्थः । दधि अशान । शमी अत्र । मधु अपनय । वधू आनन्दं । पितृ अर्थः । लृ आकृतिः इत्येवं व्यवस्थिते बुद्ध्या कार्यार्थमिकारादीन् अपकृष्य संधावित्यधिकृत्य—

६ । अचीको यण् । ४ । ३ । इक यणादेशो भवति अचि परतः । इत्यनियमेन यणमासे—

७ । [1]स्वासन्नः । १ । १ । इहाप्यासन्नस्यासन्नप्रसंगे स्थानार्थगुणप्रमाणैर्यास्वमासन्न एव विधिर्भवति । इति तालं-

१ । अस्य स्थाने महावृत्तौ-स्थानेऽन्तरतमः १ । १ । ४६ । इति पाणिनीयवत्सूत्रमुपलभ्यते ।

व्यस्य इवर्णस्य स्थाने स्थानतः स्वासन्नतालव्यो यकारो भवति । ओष्ठ्यस्य उवर्णस्य स्थाने दंत्योष्ठ्यो वकारो भवति । मूर्द्धन्यस्य ऋवर्णस्य स्थाने मूर्द्धन्यो रेफो भवति । दंत्यस्य लृवर्णस्य स्थाने दंत्यो लकारो भवति । इति नियमे कृते "यरो ङितो वा ङे" इति प्रस्तुत्य 'शरो द्वे' इति 'अचो ह्रोऽदृचः' इति चाधिकृत्य—

८ । [1]अयचः । ५ । ४ । अदीसंज्ञकादचः परस्य रेफहकाराद्वर्जितस्य वर्णस्य स्थाने द्वे रूपे वा भवतः । इति द्वित्वे कृते—

९ । [2]झलो जश् झशि । ५ । ४ । झलो वर्णस्य जश् भवति झशि परतः । इति पूर्वस्य धकारस्य दकारे कृते 'अनच्कं शब्दरूपं परं वर्णमाश्रयेदिति' सन्निकर्षे च कृते-दद्ध्यशान, दध्यशान । शम्म्यत्र, शम्यत्र । मद्ध्वपनय, मध्वपनय । वद्ध्वाननं, वध्वाननं । पितत्रर्थः, पित्रर्थः । लाकृतिः । इति च सिद्धं ॥ त्रि अंबक । गौरी आश्रयः । वायु अंबरं । भू आदि इति स्थिते "इको यणभ्यः व्यवधानमित्येके[3] । तेषां त्वाचार्याणां अचीको यणित्यत्र इक इति कानिर्देशस्ततोऽयमर्थः । इकः परो यण् भवति अस्वेऽचि परतः । इति इको मध्ये यणि सति त्रियंबकः । गौरीयाश्रयः । वायुवंबरं । भूवादिः । यणादेशे

---

१ अस्य स्थाने महावृत्तौ—अनचि । ५ । ४ । १३१ । इति सूत्रं वृत्तिरपि भिन्नैवोपलभ्यते । २ अस्य स्थाने महावृत्तौ-झलां जश् झशि । ५ । ४ । १२८ । इति सूत्रं वर्तते । ३ "भूवादीनां वकारोऽयं लक्षणार्थः प्रयुज्यते । इको यणभिर्व्यवधानमेकेषामिति संग्रह ॥" इति महावृत्तौ ।

च पूर्ववत् त्र्यंबकः इत्यादिः॥ ने अनं । लो अनं । रै औ । नौ औ इति स्थिते अचोऽज्ञो यणित्यतः अचीति वर्त्तते—

१० । [1]एचोऽयवायावः । ४ । ३ । एचः स्थाने अचि परतः अय् अव् आय् आव् इत्यत्त आदेशाः भवंति ।

११ । यथासंख्यं समाः । १ । २ । यदा उद्देशिनोऽनुदेशिनश्च समा भवंति तत्र संख्यामनुक्रम्य परिभाषा भवंति । इति प्रथमसंख्यस्य एकारस्य स्थाने प्रथमसंख्यो अय् भवति । एवं सर्वत्र । ओकारस्य अव् । ऐकारस्य आय् । औकारस्य आव् इति क्रमे—नयनं, लवनं, रायौ, नावौ । एच इति किं? त्वमत्र । अचीति किं गोकुलं ।

१२ । [2]गव्यूतिरध्वमाने । ४ । ३ । गोशब्दस्य एचो अवादेशो निपात्यते अध्वपरिमाणेऽर्थे । गवां यूतिः गव्यूतिः । अध्वपरिमाण इति किं? गोयूतिः ॥ देव इंद्रः । माला इयं । आ-इहि । गंध उदकं । बाला ऊढा । अर्द्ध ऋचः । आ ऋकारः । महा ऋषिः । परम ऋषिः । तव ऌकारः इति स्थिते—अचीत्यनुवर्त्तमाने—

१३ । आदेप् । ४ । ३ । अवर्णादचि परतः एप् भवति । क एप् ।

१४ । अदेङेप् । १ । १ । अकार एकार ओकारश्च प-

---

[1] । अस्य स्थाने महावृत्तौ—एचो ऽयवायावः । ४ । ३ । ६६ । इति सूत्रं वर्त्तते । [2] अस्य स्थाने महावृत्तौ—गोर्यूतावध्वपरिमाणे इति वार्त्तिकमुपलभ्यते ।

त्येकमेप् इति संज्ञो भवति। कस्येविति शंकायां–

१५। द्वयोरेकः। ४। ३। द्वयो पूर्वपरयोः स्थाने एक एव भवति। तदेडिः पर इत्यत्र परग्रहणस्य पूर्वापेक्षत्वात्परस्य स्वासन्न एव विधिर्भवति।

१६। रंतोऽणुः। १। १। उः स्थाने अण् शिष्यमाण एव रपरो भवति। 'शरो द्वे' इत्यधिकृत्य–

१७। [1]अचो ह्रोऽहृचः। ५। ४। अचः परौ यौ रेफहकारौ ताभ्यां परस्य रेफहकाराद्वर्जितस्य वर्णस्य द्वे रूपे वा भवतः। न स्फेऽचीत्यनुवर्तमाने–

१८। [2]शरः। ५। ४। शरोऽचि परे द्वे रूपे न भवतः। ऋवर्णऌवर्णयोरेकत्वप्रतिज्ञानात् ऌकारे शिष्यमाणस्य रंफस्य

१९। डश्चर्फिडादीनां[3]। ५। ३। ऋफिडादीनां डकारस्य रेफस्य च लत्वं भवति। इति लकारः। देवेंद्रः। मालेयं। एहि। गंधोदकं। वालोढा। अर्धर्च्चः, अर्द्धर्चः। अक्कारः, अकारः। परमर्षिः। महर्षिः। तवल्कारः। इति सिद्धं॥ तव एषः। महा ऐसवण्। दिव्या ओपधिः। परम औपगवः इति व्यव-

---

१। अस्य स्थाने-अचो रहाद् द्वे। ५। ४। १२६ इति सूत्रमस्ति। २। अस्य स्थाने-'शरोऽचि द्वित्वं न' इति वार्तिकमेवास्ति। ३ अस्य स्थाने नास्ति किमपि सूत्रं परं विभाषाचि। ४। ३। ३२। इति सूत्रस्थितेन "डलयोः समानविषयत्वं स्मर्यते" इति वार्तिकेन कार्य कृतं, एवं च "र अ" इति प्रत्याहारं रंताणुरित्यस्मिन् सूत्रे प्रविलिप्य लत्वं कृतं।

स्थिते—आदेनित्येतस्मादादित्यनुवर्तमाने—

२० । एच्यैप् । ४ । ३ । अवर्णादेचि परतो द्वयोः पूर्वपरयोः स्थाने एकः परस्य स्वासन्नः ऐप् भवति । कः ऐप्—

२१ । आदैगेप् । १ । १ । अकारैकारौकाराणां त्रयाणां ऐबित्येषा संज्ञा भवति । तवैषः । महैरावणः । दिव्यौषधिः । परमौपगवः । अक्ष ऊहिणी इति स्थिते—

२२ । अचादूहिण्यां[1] । ४ । ३ । अक्षशब्दादूहिण्यामैप् निपात्यते । अक्षाणामूहोऽस्यामस्तीति अक्षौहिणी सेना ॥ स्व ईरी । स्व ईरिणी । स्व ईरः । इति स्थिते—

२३ । [2]स्वादीरीरे । ४ । ३ । स्वशब्दात् ईरी ईर इत्येतयोरैप् भवति । स्वैरी । स्वैरिणी । स्वैरः ॥ प्र ऊहः । प्र ऊढः । प्र ऊढिः । प्र एषः । प्र एष्यः । इति स्थिते—

२४ । [3]प्रादूहोढोढ्येषैष्ये । ४ । ३ । प्रशब्दादैप् भवति ऊहादिषु परतः । प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः ॥ खट्वा ऋश्यः । महा ऋषिः । इति स्थिते—

२५ । ऋत्यकः । ४ । ३ । अकः ऋकारे लकारे च प्रादेशो वा भवति । खट्व ऋश्यः । खट्वर्श्यः । मह ऋषिः । महर्षिः । एवं सर्वत्रोदाहार्यं ॥ प्र ऋणं । दश ऋणं । ऋण ऋणं । कंवल ऋणं । वसन ऋणं । वत्सतर ऋणं । इति स्थिते—

---

१ अस्य स्थाने "अक्षादूहिण्यामैवृद्धवक्तव्य" इति वार्तिकं ।

२ अस्य स्थाने "स्वादीरेरिणोः" इति वार्तिकं ।

३ । अस्य स्थाने "प्रादूहोढोढ्येषैष्येषु" इति वार्तिकं ।

२६ । [1]प्रदशार्णकंबलवसनवत्सतरादृणे । ४ । ३ । प्रादेरैप् भवति ऋणपरे । द्वयोरेकः । प्रार्णं । दशार्णं । ऋणार्णं । कंबलार्णं । वसनार्णं । वत्सतरार्णं ॥ ऐपं बाधते पुनः प्रादेशः । तेन प्र ऋणं । दश ऋणं । इत्यादि ॥ सुख ऋतः । दुःख ऋतः । इति स्थिते—

२७ । [2]ऋते भासे । ४ । ३ । अवर्णांताद् ऋतशब्दे परतो द्वयोरेकः परस्य स्वासन्नः ऐप् भवति तौ चेन्निमित्तनैमित्तकौ भासे भवतः । सुखार्तः । दुःखार्तः । सुखार्तः । दुःखार्तः । भासे इति किम् ? सुखेनर्तः । दुःखेनर्तः ॥ इह एव तिष्ठ । अद्य एव दृश्यते इति स्थिते—'एङि परे' इति वर्तमाने—

२८ । [3]एवेऽनियोगे । ४ । ३ । अवर्णांतादेवशब्दे परतो द्वयोरेकः परोजादेशो भवत्यनियोगे । न चेत् स एव शब्दो नियोगविषयेऽवधारणे वर्तते । इहेव तिष्ठ । अद्येव दृश्यते । अनियोगे इति किं ? इहैवास्व । अत्रैव तिष्ठ माघ गाः ॥ बिंब ओष्ठी । स्थूल ओतुः ।

२९ । वौष्ठौती से[4] । ४ । ३ । अवर्णांतादोष्ठोत्वोः परयोः परोऽजादेशो वा भवति द्वयोरेकः । बिंबोष्ठी । बिंबौष्ठी । स्थूलोतुः । स्थूलौतुः । से इति किं ? पश्यौष्ठं देवदत्त । पश्यौतुं

१ अस्य स्थाने 'ऋणदशप्रवत्सतरकंबलवसनानामृणे" इति वार्तिकं । २ । अस्य स्थाने महावृत्तौ—एतादृशमेव वार्तिकं वर्तते न तु सूत्रं ॥ ३ अस्य स्थाने महावृत्तौ- 'एवे चानियोगे पररूपं" इति वार्तिकं । ४ अस्य स्थाने "ओत्वोष्ठयोः से वा पररूपं" इति वार्तिकं ।

विनृंभितं ।

३० । सीमंतः केशेषु[1] । ४ । ३ । सीमंत इति निपात्यते केशविषये । सीमंतः । सीमंतः । अन्यत्र सीमांतो-ग्रामः ॥ तव ओंकारः । अद्य आ ऋकारः । अद्य आ ऋश्यताम् । अप एहि । अद्य ओढा ।

३१ । ओमाङोः । ४ । ३ । अवर्णांतादोम्शब्दे आङादेशे ऽचि परे द्वयोरेकः परोऽजादेशो भवति । तवोंकारः । अद्यर्कारः । अद्यर्श्यात् । अपेहि । अद्योढा ॥ लोक अग्रं । विद्या अंतं । दधि इदं । नदी ईहते । मधु उदकं । वधू उदरं । पितृ ऋषमः । पितृ ॠकारः । पितृ लृकारः । इति स्थिते—

३२ । स्वेऽको दीः । ४ । ३ । स्वेऽचि परतः अकः स्थाने द्वयोरेको दीर्घभवति । लोकाग्रं । विद्यांतं । दधीदं । नदीहते । मधूदकं । वधूदरं । पितॄषभः । पितॄकारः ॥ मुने अत्र । साधो अत्र । मुने अनघ । साधो अनघ । पूर्वोऽमीत्यनुवर्तमाने—

३३ । पदेऽलेङः[2] । ४ । ३ । पदांतादेङोऽकारादौ पदे परतः परः पूर्वो भवति । द्वयोरेकः । मुनेऽत्र । साधोऽत्र । मुनेऽनघ । साधोऽनघ । तकारः किं ? तयाहुः । पटवास्व । पदे इति किं ? नयनं । लवनं ॥ गो अग्रं इति त्रिः स्थिते—

३३ । गोर्वेङ्[3] । ४ । ३ । गोरेङोऽति परतः एजादेशो

---

१ । अस्य स्थाने "सीमंतः केशवेशे" इति वार्तिकं । २ । अस्य स्थाने "एङोऽति पदांतात्" ४ । ३ । ९६ । इतिसूत्रं । ३ । ४ अनयोः स्थाने—विभाषाऽन्यत्र । ४ । ३ । १०२ । इतिसूत्रं ।

वा भवति । पक्षे अवोऽनक्षेचि, इति अवादेशो वा । गोऽग्रं । गवाग्रं । गो अग्रं । गो ईश्वरः । गो एषः । इति द्वि स्थिते-

३५ । अवोऽनक्षेऽचि[1] । ४ । ३ । गो शब्दस्य एङोऽक्षशब्दवर्जितेऽचि परतोऽवादेशो वा भवति । गवाग्रं । गोऽग्रं । गवेश्वरः । गवीश्वरः । गवैषः गवेषः ॥ गो इंद्रः । गो इंद्रदत्तः ।

३६ । [2]इंद्रे । ४ । ३ । गो शब्दस्य एङोऽव इत्ययमादेशो भवति इंद्रशब्दे परे । पृथक् सूत्रकरणात् नित्यं । गवेंद्रः । गवेंद्रदत्तः ॥ गो अक्षः ।

३७ । [3]वातायनेऽक्षे । ४ । ३ । गोशब्दस्य एङोऽक्षस्थेऽचि परतो नित्यमयादेशो भवति वातायनेऽर्थे । गवाक्षः । वातायन इति किं ? गोऽक्षः ।

इति स्वरसंधिः ॥ २ ॥

## अथ प्रकृतिसंधिः ।

एवं संधाविति प्रसक्ते प्रतिषेधोयमुच्यते--

३८ । [4]पाश्चानितौ । ४ । ३ । पसंज्ञकादितिशब्दवर्जितेऽचि परतो द्वयोरेको यो विधिः प्राप्नोति स न भवति । फस्य पः ।

---

१ अस्य स्थाने "गोरिंद्रेऽवङ्" ४ । ३ । १०१ । इति सूत्रं । २ अस्य स्थाने न किमपि सूत्रं परं, विभाषाऽन्यत्र । ४ । ३ । १०२ । सूत्रस्थव्यवस्थितविभाषामवलंब्य कार्यं कृतं । ३ अस्य स्थाने "प्रकृत्याचि द्विपः । ४ । ३ । १०३ इति सूत्रं ।

३९ । **वाक्यटेः पः** । ५ । ४ । वाक्यस्य टेः पो भवति । इत्यधिकृत्य–

४० । **भोश्च प्रत्यभिवादेऽस्त्रीशूद्रे वा**[1] । ५ । ३ । स्त्रीशूद्रविषयवर्जिते प्रत्यभिवादे वर्तमानस्य वाक्यस्य टेः पो वा भवति, भोशब्दस्य च । कः टिः ।

४१ । **स्वंत्यादचः**[2] । ५ । ३ । अचां मध्ये योऽन्त्योऽच् तदादि शब्दरूपं टिसंज्ञं भवति । अभिवादये देवदत्तोऽहं भोः । आयुष्मान् एधि देवदत्त ३ अतिचिरं । पक्षे संधिः ।

४२ । **दूराद्धूते** । ५ । ३ । दूराद् विप्रकृष्टाद्धूते आहूयमाने यद्वाक्यं वर्तते तस्य वाक्यस्य टेः पो वा भवति । आगच्छ भो माणवक देवदत्ता ३ अत्र । आव्रज विश्वभूते३ऽत्र । पात्रानिताविल्यतो नेति वर्तते ।

४३ । **दिः**[3] । ४ । ३ । दिसंज्ञकादचि परत यत्प्राप्नोति तन्न भवति । को दिः–

४४ । **ईदूदेद्द्विर्दिः** । १ । १ । ईकार ऊकार एकार इत्येतदंतो यो द्विः स दिसंज्ञो भवति । मुनी आसाते । पटू इह । अधीयेते आगमं ।

४५ । **मः** । १ । १ । अदसो दकारस्य स्थाने यः कृतो मकारस्तस्मात्परौ यौ ईदूतौ तौ दिसंज्ञौ भवतः । अमी अश्वाः । अमू इमौ ॥

---

१ । अस्य स्थाने 'प्रत्यभिवादेऽशूद्रस्त्रिसूयकं । ५ । ३ । ९१ । इति सूत्रं । २ अस्य स्थाने "अंत्यादृचाष्टिः । १ । १ । ६५ । इति सूत्रं । ३ । अस्य स्थाने-प्रकृत्याधि द्विपाः । ४ । ३ । १०३ इति सूत्रं ।

४६। न्यजनाङ्[1]।१।१। निसंज्ञको योऽच् आङ्-वर्जितः स दिसंज्ञको भवति। अ अपेहि। इ इंद्रं पश्य। उ उत्तिष्ठ। आ एवं किल तत्। आ एवमनुमन्यसे।

ईषदर्थे क्रियायोगे, मर्यादाभिविधौ च यः।

एतमाङं ङितं विद्यात् वाक्यस्मरणयोरङित्॥ १॥

ईषदर्थे–आ उष्णं। ओष्णं। क्रियायोगे–आ इहि। एहि। मर्यादायां–आ उदकांतात्। ओदकांतात्। अभिविधौ–आ आर्येभ्यः। आर्येभ्यः यशोगतं समंतभद्रीयं।

४७। ओत्।१।१। ओकारांतो यो निः स दिसंज्ञको भवति। अहो इति। उताहो इति। नौ इंद्रीयं।

४८। वेकोऽसेऽस्वे प्रः[2]।४।३। इकः स्थानेऽस्वेऽचि परतः प्रादेशो वा भवति, न चेत् तावेिगचौ एकत्र से भवतः। दधि अत्र। दध्यत्र। शमि अत्र। शम्यत्र। प्रादेश-सामर्थ्यादत्र यण् न भवति। असे इति किं? नद्युदकं। वध्वा-ननं। अस्वे इति किं? दधीदं। नदीयं।

इति प्रकृतिसंधिः॥ ३॥

---

अथ व्यंजनसंधिः।

पिति कृति तुगित्यनुवर्तमाने–

---

१ अस्य स्थाने "निरेकाजनाङ्" ।१।१।२२। इति सूत्रं।
२। अस्य स्थाने "विभाषेकोऽस्वे प्रदष्" । ४। ३ ।१०५ ।इति सूत्रं महावृत्तौ।

४९ । **छे च**[1] । ४ । ३ । छकारे परतोऽजंतस्य तुगागमो भवति । "स्तोः श्चुना श्चुः" इति तुकश्चुत्वं । देवच्छत्रं । इच्छति । म्लेच्छति ॥

५० । **घो वा पदस्य**[2] । ४ । ३ । पदसंबंधिनो घस्थे परतस्तुगागमो वा भवति । कन्याच्छत्रं । कन्याछत्रं । मुनीच्छाया । मुनीछाया । घ इति किं ? श्वेतच्छत्रं । पदस्येति किं ? ह्रीच्छति ॥ अच् आश्रितं । ककुप् अंतरं । सुवाक् आचार्यः । मधुलिट् भ्रमरः । तत्त्वविद् याति मोक्षं । इति स्थिते--पदस्येत्यधिकृत्य--

५१ । **झलो जश्**[3] । ५ । ४ । झलः पदांते वर्तमानस्य जश् भवति । अजाश्रितं । ककुबंतरं । सुवागाचार्यः । मधुलिड्भ्रमरः । तत्त्वविद्याति मोक्षं ॥ अच् मात्रं । ककुप मंडलं । वाक् मधुरा । पद् नयाः । तत् नयनं । इति द्विःस्थिते-पदस्येत्यधिकृत्य--

५२ । [4]**यरो ङ्गे वा ङे** । ५ । ४ । यरः पदांते वर्तमानस्य ङो भवति वा ङे परतः । स्वासन्नः । कः पुनर्ङः ।

५३ । **नासिक्यो ङः** । १ । १ । नासिकाकृतमनुरागमापद्यमाना वर्णाः जमङणनाः ङसंज्ञा भवंति । पक्षे-

---

१ अस्य स्थाने "छे । ४ । ३ । ६१ । इति सूत्रं । २ । अस्य स्थाने "घः । ४ । ३ । ६३ ।" "वा पदस्य । ४ । ३ । ६४ । इति सूत्रद्वयं । ४ । अस्य स्थाने 'यरो ङो विभाषा ङे । ५ । ४ । १२५ ।" इति सूत्रं ।

चरत्वं । अम्मात्रं । अज्मात्रं । ककुम्मंडलं । ककुव्मंडलं । वाङ् मधुरा । वाग्मधुरा । षण्नयाः । षड्नयाः । तन्नयनं । तद्नयनं ॥ वाङ् मयं । मधुलिट् मानं । इति स्थिते—

५४ । ङ्ये[१] । ५ । ४ । यरः पदांते वर्तमानस्य ङ्ये भवति ङसंज्ञादौ ले परतः । पुनर्वचनं नित्यार्थं । वाङ्मयं । मधुलिण्मानं ॥ अज् हलौ । त्रप्टुप् हुतं । वाक् हरति । षड् हलानि । तत् हितं । इति द्विः स्थिते यय्यं परस्वमित्यधिकृत्य- "स्थास्थंभोः पूर्वस्योदः" इति च प्रस्तुत्य—

५५ । झयो हः । ५ । ४ । अतीतसूत्रं चतुष्टयविधानं समंतभद्रस्याचार्यस्य मतेन विकल्पो भवति नान्येषां । स्वांसत्र इति महाप्राणस्योष्मणो हकारस्य स्थाने तादृश एव तद्गुणवर्गचतुर्थो भवति । अज्झलौ । अज्हलौ । त्रप्टुब्भुतं । त्रप्टुब् हुतं । वाग्घरति । वाग्हरति । षड्ढलानि । षड्हलानि । तद्धितं । तद्हितं ॥ सुवाक् शोभते । ककुप् श्रूयते । मधुलिड् श्यामः । तत्श्वेतं । तत्श्लोकः । तत् श्मशानं । इति द्विः स्थिते-झयः पदांतादित्यधिकृत्य -

५६ । शश्छोऽमि । ५ । ४ । झयः पदांतादुत्तरस्य शकारस्य छकारो भवति अमि परतः । चतुष्टयं समन्तभद्रस्य-

---

१ । अस्य स्थाने नास्ति किमपि सूत्रं परं 'यरो ङो विभाषा ङे । ५ । ४ । १२५ ।" इति सूत्रे विभाषापदग्रहणसामर्थ्यात् कार्यमस्य कृतं ।

स्येत्यनेन विकल्पो भवति । सुवाक्छोभते । सुवाक् शोभते । ककुभ्च्छ्रूयते । ककुभ् श्रूयते । मधुलिड्छ्यामः । मधुलिड् श्यामः । तच्छ्वेत । तद् श्वेतं । तच्छ्लोकः । तत् श्लोकः । तच्छ्मशानं । अमीति किं? वाक्श्च्योतति ॥ क्रुङ् शेते । सुगण् शेते । इति स्थिते-

५७ । ङ्णोः कुक् टुक् शरि वा[1] । ५ । ४ । ङकारणकारयोः पदांते वर्तमानयोः यथासंख्यं कुक् टुक् इत्येतावागमौ वा भवतः शरि परतः । उकार उच्चारणार्थः । ककार आदेशविध्यर्थः । तौ च किदंत इति अंते भवतः । क्रुङ्क्शेते । क्रुङ्क्छेते । क्रुङ् शेते । सुगण्ट्छेते । सुगण्ट्शेते । सुगण् शेते ॥ भवान् शूर इति स्थिते-

५८ । नश्शि तुक् । ५ । ४ । नकारस्य पदांते वर्तमानस्य शकारे परे वा तुगागमो भवति । पूर्ववदुकारककारौ । स्तोः श्चुना श्चुरिति तुकश्चुत्वं ।

५९ । [2]नश्चापदांते झलि । ५ । ४ । नकारस्य मकारस्य चापदांते वर्तमानस्य अं इति अनुस्वारो भवति झलि परतः । इति नकारस्यानुस्वारः । तस्य च-

६० । [3]ययं परस्वं । ५ । ४ । अं इति अनुस्वारो ययि परत परस्वं भवति । इति परस्वत्वं । भवाञ्च्छूरः । भवाञ्

---

१ अस्मिन् सूत्रे वा इति पदं महावृत्तौ न वर्तते ।

२ अस्य स्थाने-नश्चापदांतस्य झलि । ५ । ४ । ८ । इति सूत्रं ।

३ । अस्य स्थाने-ययनुस्वारस्य परस्वं । ५ । ४ । १३२ । इति सूत्रं महावृत्तौ ।

शूरः । भवान् शूरः ॥ भवान् छादयति । भवान् ठकारीयति । भवान् थुडति । भवान् चरति । भवान् टीकते । भवान् तरति । इति द्विः स्थिते-पुमः खय्यं परे सिसुगिति प्रस्तुत्य--

६१ । नश्छव्यप्रशान् । ५ । १ । प्रशान्वर्जितस्य नकारांतस्य पदस्य अम् परे छवि परतः सिगादेशः सुगागमः पर्यायेण भवतः । ककारोऽतविध्यर्थः । उकार उच्चारणार्थः । इकारो रिस्योरिति विशेषणार्थः ।

६२ । रिस्योः[1] । ५ । ४ । पदांते वर्तमानयोः रेफसकारयोरिदितोः परयोर्यः पूर्वस्तस्य स्वासन्नङादेशो भवति । नकारस्यान्यत्रानुस्वार. । सकारस्य श्चुत्वे शकारः । ष्टुत्वे षकारः । भवाँश्छादयति । भवांश्छादयति । भवाँष्ठकारीयति । भवांष्ठकारीयति । भवाँस्थुडति । भवांस्थुडति । भवाँश्चरति । भवांश्चरति । भवाँष्टीकते । भवांष्टीकते । भवाम्स्तँरति । भवांस्तरति ॥ अप्रशानिति किं ? प्रशान् चिनोति । नकारस्य श्चुत्वे ञकारः । प्रशाञ्चिनोति ॥ ङमो वोच्युन इत्यधिकृत्य--

६३ । ङमो ङमुट् तु प्रात्[2] । ५ । ४ । प्रात् परो यो ङम् तदंताद् पदात् परस्याचो यथासंख्यं ङमुडागमो भवति । उकार उच्चारणार्थः । टकारो देशविध्यर्थः । तु शब्दो नित्यार्थः । प्रत्यङ्ङास्ते । सुगण्णिह । पचन्नयं । प्रादिति किं ? प्राङास्ते ।

१ । अस्य स्थाने नास्ति पृथक् सूत्रं परं नकारस्य स्थाने ऽनुस्वारपूर्व एव सकारो विधीयते ।

२ । अस्य स्थाने ङमो नित्यं ङमुट् प्रात् । ५ । ४ । १६ इति ।

अचीति किं ? प्रत्यङ् शेते। अत्र पदाद्ग्रहणे नटखादि अनीश्वर इत्यादौ द्विर्भावो न स्यात्।। कुतः संज्ञापूर्वविधेरसत्यत्वात्। हलीति अधिकृत्य–

६४। **नुग्मोऽं**[1] । ५ ४ । नुको मकारस्य च पदांते वर्तमानस्य अं इति अनुस्वारो भवति हलि परतः । स चैको विंदुः ॥ अकार उच्चारणार्थः । रंरम्यते । पापं हंति । व्रतं रक्षति । घर्मं शृणोति । स्वर्गं साधयति ॥ हलीति किं ? इदमत्र । यय्यं परस्वमित्यधिकृत्य–

६५ । **वा ऽनुक् पदांतस्य** । ५ । ४ । नुकः पदांते वर्तमानस्य मकारस्य च अं इति अनुस्वारस्य वा परस्वं भवति ययि परतः । चङ्क्रम्यते । चक्रम्यते । दंद्रम्यते । दन्द्रम्यते । यंयम्यते । यँय्यम्यते । त्वङ्करोषि । त्वंकरोषि । त्वञ्चरसि । त्वं चरसि । त्वण्टीकसे । त्वंटीकसे । त्वन्तरति । त्व तरति । त्वम्पचसि । त्वंपचसि । त्वयासि । त्वँय्यासि । त्वँव्वहसि । त्वं वहसि ॥ यय्यं परस्वमित्यधिकृत्य–

---

१ । अस्य स्थाने मोऽनुस्वारः । ५ । ४ । ७ इति, एव च ततो नुट् । ५ । २ । १७० । अस्मिन् सूत्रे नुगिति पूर्वांतकरणे कृतदोत्वस्यानुवर्तमानस्य अस्य विशेषणे तन इति पदस्याभावेऽपि कार्यसिद्धौ नुडिति परादिकरणं ज्ञापयति "अस्मिन् प्रकरणे पूर्वांत. आगमः स्वनिमित्तमंतरेणापि विक्रियते" तेनाझलादावप्यनुस्वारः । ययम्यते रंरम्यते इति महावृत्तौ ॥

२ । महावृत्तौ-अस्मिन् सूत्रे नुक्ग्रहणं नास्ति ।

६६ । तोर्लि । ५ । ४ । तवर्गस्य पदांतस्य लकारे परतः परस्वं भवति । तडिल्लोला । विद्युल्लता । भवाँल्लिखति विद्वाँल्लोकेशः ॥ रोरीत्यधिकृत्य अंतेऽरिति वर्तमाने खरीति कुप्वोरिति च प्रस्तुत्य--

६७ । ≍ क ≍ पौ च । ५ । ४ । खरमूलयोः कवर्गपवर्गयोः परतो रेफस्य ≍ क ≍ प इत्येतावादेशौ भवतः अः इति विसर्जनीयश्च । क ≍ करोति । कः करोति । क ≍ खनति । कः खनति । क ≍ पठति । कः पठति । क ≍ फलति । कः फलति ॥ रोरीत्यधिकृत्य अंतेऽरिति च प्रस्तुत्य--

६८ । शरि सश्च । ५ ४ । रेफस्य सकारादेशो भवति शरि परतः अः इति विसर्जनीयश्च । कश्शेते । कः शेते । कष्षंढः । कःषंढः । कस्सरति । कः सरति ॥ रोरीत्यधिकृत्य--

६९ छवि । ५ । ४ । रेफस्य सकारादेशो भवति छवि परतः । कच्छादयति । कष्ठकारीयति । कस्थुडति । कश्चरति । कष्टीकते । कस्तरति ॥ कुप्वोस्तिभोस्सिरित्यधिकृत्य--

७० । [२]इसुसोऽपेक्षायां । ५ । ४ । इसंतस्य उसंतस्य च पदस्य संबंधिनो रेफस्य कुप्वोः परतः सिरित्ययमादेशो भवति वा स्थानिनिमित्तपदे चेदन्योऽन्यापेक्षाविषये भवतः । ईकारः क्विखोः ससेः य इति विशेषणार्थः । क्विखोः ससेः यः । नुम् शर् इति च प्रस्तुत्य--

---

२ । अस्य स्थाने-इसुसोऽसामर्थ्ये ।५।४।३२ इति सूत्रं महावृत्तौ ।

७१ । त्यादेशयोः । ५ । ४ । त्यसकारस्य आदेशसकारस्य च कवर्गादिरण्णंताच्च नुमःशरश्च परस्य षत्वं भवति । इति मेः षत्वं । सर्पि ≍ करोति । सर्पिः करोति । सर्पिष्करोति सर्पिष्पिबति । सर्पि ≍ पिबति । सर्पिः पिबति । धनुष्खंडयति । धनुः खंडयति । धनु ≍ खंडयति । धनुष्फलति । धनु ≍ फलति । धनुः फलति । अपेक्षायामिति किं ? तिष्ठतु सर्पिः≍ पिब त्वमुदकं । तिष्ठतु सर्पिः पिब त्वमुदकं ।

७२ । स्तोः श्चुना श्चुः । ५ । ४ । सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः । सकारस्य शकार चवर्गाभ्यां योगे शकारो भवति । तवर्गस्य शकारचवर्गाभ्यां योगे चवर्गो भवति । कश्शेते । कश्चिनाचे । मरुच्चरति । मरच्चिरति । धर्मविज्जयति । मज्जति । भृज्जति । बृहज्झषः । महाञ्झषः । तञ्शकारेण । तञ्जुनवे । स्तोःश्चुना श्चुरित्यनुवर्तमाने-

७३ । ष्टुना ष्टुः । ५ । ४ । स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ भवतः । सकारस्य षकारटवर्गाभ्यां योगे षकारो भवति । तवर्गस्य षकारटवर्गाभ्यां योगे टवर्गो भवति । कष्षण्डः । कष्टीकते । कष्ठकारीयति । तट्टीकते । तट्ठकारेण । तड्डीकते । तड्ढौकते । तण्णकारेण । पदस्येत्यधिकृत्य–

७४ । न तोःषि । ५ । ४ । पदांतस्य तवर्गस्य षकारे परतः ष्टुत्वं न भवति । तीर्थकृत् षोडशः । महान्षंढः । तोरिति किं ? कष्फडिकः । न तोरित्यधिकृत्य–

७५ । शात् । ५ । ४ । शकारात् परस्य तोश्चुत्वं न भवति । प्रश्नः । क्लिश्नाति ॥ यशस् भ्रमति । तेजस् दहति । इति स्थिते-पदस्येत्यधिकृत्य--

७६ । ससजुषो रिः । ५ । ४ । सकारस्य पदांतस्य सजुःशब्दस्य च रिर्भवति । इकारो हशि रेरिति विशेषणार्थः । "ऋत उः" स्यस्योऽतः,, इति चानुवर्त्तमाने--

७७ । [1]हशि रेः । ४ । ३ । अकारादुत्तरस्य रेफस्य उत्वं भवति हशि परतः । पूर्ववदेपि कृते यशो भ्रमति । तेजो दहति ॥ यशस् अत्र । तेजस् अत्र । पूर्ववद् रित्वे कृते-ऋत उः, स्यस्योऽतः, हशि रेरिति वर्तमाने--

७८ । [3]अति । ४ । ३ । अकारादुत्तरस्य रेरुत्वं भवति अति अकारे परतः । पदे स्ये इत्यकारस्य पूर्वत्वे यशोऽत्र । तेजोऽत्र ॥ हे भगोर् अत्र । हे भोर् अत्र । हे अघोर् अत्र । देवार् आसते । धार्मिकार् आयान्ति । इति स्थिते-भगवद्भव-त्वघवतो रिः कावव्यौ,, इत्यनुवर्तमाने--

७९ । ओदाद् योऽशि[3] ५ । ४ । ओकारादनंतादवर्णाच्च परस्य रेर्यकारादेशो भवति अशि परतः । हे भगोयत्र । हे भोयत्र । हे अघोयत्र । देवायासते । धार्मिकायायाति । ओदादिति किं ? मुनेरत्र । साधुरागतः । अशीति किं ? भोःकरोति ।

१ । २ । एतयोः स्थाने रेरुद्धशोः । ४ । ३ । १०० इति ।
३ । अस्य स्थाने ओदपूर्वस्य योऽशि । ५ । ४ । ४ । इति सूत्रे ।

कः सनति ॥ भगोय् अत्र । मोय् अत्र । पटव् उ । असाव् उ । तय् उ । तस्माय् उ । इति द्वि॰ स्थिते--

८० । [1]व्योऽस्पष्टः खं । ५ । ४ । मकृतादोकारादवर्णाच्च परस्य वकारस्य यकारस्य चास्पष्टोऽव्यक्तश्रुतिरीषत्स्पृष्टकरणः प्रशिथिलस्थानकरणः ख चादेशौ भवतोऽशि परतः । अशि हलि नित्यमुत्तरत्र खवचनादिहाचि विकल्पः । किं खं ।

८१ । नाशः ख । १ । १ । नाशशब्देन प्रतिपाद्यमानस्यार्थस्य खमित्येषा सञ्ज्ञा भवति । इति खे कृते--

८२ । पूर्वत्रासिद्धं । ५ । ३ । पूर्वस्मिन् शास्त्रे कर्तव्ये परं शास्त्रं असिद्धं भवति । इति यकारवकारयोरसिद्धत्वात् अयवादिर्न भवति । भगोयँत्र । भगो अत्र । मोयत्र । भो अत्र । पटवुँ । पट उ । असावुँ । असा उ । अर्थादचीति किं ? वृक्ष्-वृश्चमाचक्षाणो वृक्षव् हसति ॥ पटव् इह । असाव् इदुः । तय् आहु । तस्माय् आसनम् । इति त्रि स्थिते -

८३ । वाऽनुन्यात् । ५ । ४ । अवर्णात्परस्य वकारस्य यकारस्य चास्पष्ट ख चादेशौ वा भवतः उञि वर्जिते अशि परतः । पक्षे तदवस्थाता । पटविँह । पट इह । पटविह । असाविँदुः । असा इदुः । असाविदु॰ । तयाँहुः । त आहुः । तयाहु॰ । तस्मायाँसनं । तस्मायासनं । तस्मा आसनम् । अनुञीति किं ? पटवुँ । पटउ । द्विरूपमेव ॥ भगोय् हसति । मोय् देहि । देवाय् यांति । वाताय् वांति । इति स्थिते--

---

[1] । अस्य स्थाने व्योः ख वा । ५ । ४ । ५ । इति सूत्रं महावृत्तौ ।

८४ । हलि । ५ । ४ । अशि यो हल् तस्मिन् -हलि परतः व्योः खं भवति । नित्यार्थं वचनं । भगो हसति । भो देहि । देवा यांति । वाता वांति । अशीति विशेषणं हलः किं ? वृक्षव् करोति ॥ पुनर् रात्रः । पटुर् राजा । इति स्थिते-ढो ढि खमित्यनुवर्तमाने--

८५ । रो रि । ५ । ४ । रेफस्य रिपरतः खं भवति ।

८६ । ढ्रिलेऽणः[1] । ४ । ३ । ढकारस्य रेफस्य च खे सति पूर्वस्याणो दीर्घो भवति । इति दीर्घे कृते । पुना रात्रः । पटू राजा ॥ एषस् हसति । सस् जयति । इति स्थिते-दिवो हल्युदिति वर्तमाने-

८७ । तोऽनञ्से सात्सोः खं[2] । ४ । ३ । तकारस्य स्थाने सः कृतः सकारस्तस्मात् परस्य सोः खं भवति हलि परतः न चेत् स तकारस्थानिसकारो नञ्से वर्तमानः । एष हसति । स जयति जिनः । अनञ्से इति किं ? अनेषो हसति । असो जयति ।

इति व्यंजनसंधिः ।

इति जैनेंद्रप्रक्रियायां प्रथमः संधिः समाप्त ॥ १ ॥



१ । अस्य स्थाने ढ्रूखे पूर्वस्याणो दीः । ४ । ३ । २१६ । इति ।
२ । अस्य स्थाने-हल्येतत्तदोरनञ्सेऽकोः सुखं । ४।३ ।१०९ इति ।

## अथ नामनिर्णयमनुवर्णयिष्यामः ।

### तत्र अजंताः पुंलिंगाः ।

तद्यथा—संव्यवहारप्रसिद्ध्यर्थं पुरुषैः संकेतितः शब्दो नाम । तत् द्विविधं । अजंतं हलंतं चेति । तदष्टविधमपि संभवति । पुंल्लिंगं स्त्रीलिंगं नपुंसकलिंगं स्त्रीपुंसकलिंगं पुंनपुंसकलिंगं स्त्रीनपुंसकलिंगं स्त्रीपुंनपुंसकलिंगं अलिंगं चेति । तत्र अजंतेषु पुंलिंगेषु प्रथममकारांतः पुंलिंगो धर्म इत्येष शब्दः स्वभावादेकत्वादिधर्मवान् । अव्युत्पत्तिपक्षे—

८८ । अधु मृत् । १ । १ । धुवर्जितमर्थवच्छब्दरूपं मृत् संज्ञं भवति । इति मृत्संज्ञां लभते । व्युत्पत्तिपक्षे पुनः—

८९ । कृद्वृत्साः । १ । १ । कृदंतं वृदंतं ससंज्ञकं च मृत्संज्ञं भवति । इति लब्धमृत्संज्ञकादतः स्यः पर इत्यधिकृत्य-ङ्याम्मृद इति च प्रस्तुत्य—

९० । स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङस्ओसाम्ङ्योस्सुप् । ३ । १ । ङ्यंतादाबंतान्मृद्भ्यश्च परास्त्यसंज्ञामूला स्वादयो भवंति । इति विधानादविशेषेण सर्वस्वादिप्रसंगे प्राप्ते 'मिङ्कार्यं वाः' इत्येवमादिना लक्षणेन स्वादीनां नियमः क्रियते । कथं—मिङस्मिरोऽन्यद्रुप्यदन्या, इति सुपश्चेति चानुवर्तमाने—

९१ । [1]आप्परा विभक्तीहल्यः । १ । २ । अर्थ-

---

१ । अस्य स्थाने तान्तामाप्परास्तद्धलघः । १ । २ । १५७ इति

यशात् विभक्तीपरिणाम इति सुपश्चेत्येतच्चातं संपद्यते। सुपां त्रिशो मूत्वा स्थिताना विभक्तीशब्दस्य हलोऽन्त्यश्च यथासंख्यमाप्पराः थकारपराः पकारपराश्च सतः संज्ञा भवति। इति तासां सुपां सप्तविशेषसंज्ञाः क्रियते। सु औ जस् इति वाः। अम् औट् शस् इति इप्। टा भ्याम् भिस् इति भा। ङे भ्याम् भ्यस् इति अप्। ङसि भ्याम् भ्यस् इति का। ङस् ओस् आम् इति ता। ङि ओस् सुबिति ईप्।

९२। मिङैकार्थे वाः। १।४। मिङंतेन पदेनैकार्थे समानार्थे वर्तमानात् ङ्यंतादार्वतान्मृद्रूपाच्च वा विभक्ती भवति। तस्याश्चावयवानां त्रयाणामपि 'एको द्विर्बहुश्चैकशः' इत्यनुवर्तमाने-

९३। सुपश्च। १। २। सुपां त्रीणि त्रीणि वचनानि एकशः एको द्विर्बहुरित्येवं संज्ञकानि भवति। इत्येकद्विबहुसंज्ञका विधीयंते। तेषां चावयवानां त्रयाणामपि संकरेण प्राप्तौ सत्यां नियमः क्रियते।

९४। साधने स्वार्थे। १। २। एकार्थे साधने स्वार्थे एक सुर्भवति। द्वित्वविशिष्टेर्थे साधने द्विरौ भवति। बहुत्वविशिष्टेऽर्थे साधने बहुर्जस् भवति। एवं सर्वत्र। उकारजकारयोः "अप्रयोगीदिति' इत्संज्ञा। कार्यार्थमनयोरुपादानं, न प्रयोगे श्रवणार्थमिति निवृत्तिः। सकारादीनां प्रयोगे श्रवणार्थमुपादानमिति नेत्संज्ञा। उकारः 'सावनडुहः' इति विशेषणार्थः। जकारो जसीति विशेषणार्थः। धर्म स् इति स्थिते-

९५ । **सुप्मिङन्तं पदं** । १ । २ । सुबंतं मिङंतं च यच्छब्दरूपं तत्पदसंज्ञं भवति । इति पदसंज्ञायां पदस्येत्यधिकृत्य-'ससजुषो रिरिति रिरादेशः । इकारो 'हशि रेः, इति विशेषणार्थः । रीरोत्यधिकृत्य—

९६ । **अंतेऽः**[1] । ५ । ४ । अंते विरामे अवसाने वर्तमानस्य रेफस्य अः इति विसर्जनीयो भवति । इति विसर्जनीयः । अकार उच्चारणार्थः । धर्मः तिष्ठति इत्यादि मिङंतं पदमभिसंबंधनीयं । एवमुत्तरत्रापि । धर्म औ इति स्थिते आदेचिति वर्तमाने—

९७ । **एच्यैप्** । ४ । ३ । द्वयोरेकः परस्य स्वासन्न ऐप् भवति । धर्मौ । धर्म अस् इति स्थिते 'तदेचि परः, उस्यपदे' इति चाधिकृत्य—

९८ । **एप्यतः**[2] । ४ । ३ । अकारस्य द्वयोरेकः परो भवत्यपद एपि परतः । इति पररूपे प्राप्ते 'यञ्यतो दीः' इति अनुवर्तमाने—

९९ । [3]**जसि** । ५ । ३ गोरकारांतस्य दीर्भवति जसि परतः इति दीत्वं भवति । स्वेको दीरिति पुनर्दीत्वं । पूर्ववद् रित्वं विसर्जनीयश्च । धर्माः । तथा संबोधनार्थविवक्षायां मिङकार्ये याः इति याः भवति । तस्याः—

---

१ । अस्य स्थाने—विरामे विसर्जनीयः ५ । ४ । १८९ । इति सूत्रं वर्तते । २ । अस्मिन् सूत्रे 'अपदे' इति पदमधिकं महावृत्तौ

३ । अस्य स्थाने—सुटि पूर्वस्य । ४ । ३ । ८९ । नच्यात् । ४ । ३ । ९२ । इति सूत्रद्वय प्रक्रियाभेदश्च वर्तते ।

१०० । संबोधने बोध्यं । १ । ४ । संबोधनेऽर्थे विहितायाः वायाः बोध्यमिति संज्ञा । प्रसिद्धतत्संबंधस्य व्यापारांतर प्रत्यभिमुखीकरण आमंत्रण संबोधनं तत् द्योतनार्थं हे भोः प्रभृतयः शब्दाः प्रागुपादीयते । हे धर्म स् इति स्थिते--

१०१ । सुप्कि । १ । ४ । बोध्यसैकवचनं सुः किसंज्ञा भवति । इति किसंज्ञा । 'व्योः खं वल्कौ, हल् ङ्याप्धः सुसिप्त्यनच्' 'केरेङ' इति चानुवर्तमाने--

१०२ । प्रात् । ४ । ३ । प्रादुत्तरस्य केरनचः खं भवति । द्विबह्वो. पूर्ववत् । हे धर्म । हे धर्मौ । हे धर्माः । किं तिष्ठसि । किं तिष्ठथः । किं तिष्ठथ इति गम्यते । धर्म इति त्रि. स्थिते--

१०३ । कर्मणीप् । १ । ४ । कर्मणि कारके इप् भवति । किं कर्म?

१०४ । कर्त्राप्यम् । १ । २ । कर्त्रा यदाप्यत्वेन विवक्षितमीप्सितानीप्सितोदासीनविकल्पं तत् कर्मसंज्ञं भवति । इत्येवमादि लक्षणो विहित । तस्या एकोऽम् । द्विरौट् । बहु शस् । टकारशकारयोरित्संज्ञा । टकार सुडिति प्रत्याहारार्थः । शकारः शासीति विशेषणार्थः । सुटीदुतः प्राक् स्वमित्यधिकृत्य--

१०५ । पूर्वोऽमि । ४ । ३ । सुब्यमि परतः परः पूर्वो भवति द्वयोरेक । औटि पूर्ववत् । 'स्वेको दीः', सुटीदुतः प्राक् स्वं, इति चाधिकृत्य--

---

४ । अस्य स्थाने--एकः किः । १ । ४ । ५६ । इति सूत्रं वर्तते ।

१०६ । शसि । ४ । ३ । शसि परतः प्राचोऽकः स्वं दीर्भवति द्वयोरेकः । इति दीर्त्वे कृते–

१०७ ।[1]न्पुंसि । ४ । ३ । शसो नकारादेशो भवति पुंसि पुंलिंगे गम्यमाने ।

१०८ । पूो नो णोऽभिन्ने[2] । ५ ।४। पकाररेफाभ्यां परस्य नकारस्य णत्वं भवत्यभिन्ने । इति णत्वं प्राप्तं । नांवरोयनभोद्ये इति चाधिकृत्य–

१०९ । क्षुम्नाद्यंतेषु[3] । ५।४ । क्षुम्नादीनां पदस्यांत्ये च वर्तमानस्य नकारस्य णत्वं न भवति । इति निषिद्धं । धर्मम् । धर्मौ । धर्मान् । पश्येत्यादि क्रियासंबंधः । धर्म इति त्रिः स्थिते-संज्ञो भा धेरित्यनुवर्तमाने–

११० ।[4]कर्तृकरणे । १।४। कर्तरि करणे च कारके वर्तमानात् ङ्याम्मृदः परा भा विभक्ती भवति । कः कर्ता । किं वा करणं

१११ । स्वतंत्रः कर्ता ।१।२। इतरेषां कारकाणां साध्यसिद्धिं प्रति प्रवर्तमानानां स्वातंत्र्येण प्राधान्येन यत् कारकं विवक्षितं तत् कर्तृसंज्ञं भवति ।

११२ । साधकतमं करणं ।१।२। सिद्धेषु कारकेषु सत्स्वपि साध्यायाः क्रियायाः साधकत्वं प्रकर्षेण यद्विवक्षितं तत् कारकं

---

१ । अस्य स्थाने नश्च पुंसि । ४ । ३ । ९१ । इति । २ । अस्य स्थाने प्रो नो णः समाने । ५ ४ । ८५ । इति । ३ । अस्य स्थाने क्षुम्नादिषु । ५ । ४ । ११७ । अनन्त्य । ५ । ४ । ११५ । इति ।
४ । अस्मिन् अंते प्रदमाधिकं महावृत्तौ ।

करणसंज्ञं भवति । तस्याः भाया एकद्वा द्विभ्र्याम् वहुभिस् । टकार इत्संज्ञ. स्येनात् ङष्टाङसीति विशेषणार्थः । स्वेको दीरिति दीत्वे प्राप्ते गोरित्यधिकृत्य-भिसोऽत ऐसीति चानुवर्त्य--

११३ । **स्येनान्ङष्टाङसेः** ।५।१। अकारान्तस्य गोर्निमित्तभूतानां ङस् टा ङसि इत्येषां यथासंख्य स्य इन् आत् इत्येते आदेशा भवंति । इति टा इत्येतस्य इन इत्ययमादेशो भवति । फो गु. ?

११४ । **यत्त्ये तदादि गुः** । १।२। यस्य त्यः यत्त्यस्तस्मिन् यत्त्ये परत. तदादि शब्दरूपं गुसंज्ञं भवति । पूर्ववदेप् । पो नो गोऽभिन्ने इति णत्वं । भ्यामि-यञ्यतो दीरित्यधिकृत्य–

११५ । **सुपि** । ५ । २ । गोरकारांतस्य दीर्भवति यञादौ सुपि परतः ।

११६ । **भिसोऽत ऐस्** । ५ ।१ । अकारांतस्य गोर्निमित्तभूतस्य भिस ऐसित्ययमादेशो भवति । पूर्ववदेप् । रित्वविसर्जनीयौ च । धर्मेण । धर्माभ्यां । धर्मैः । कर्तरि प्रयोगे स्फीयते इत्यादिः करणे त्ववाप्य इत्यादिका क्रिया संबध्यते । धर्म इति त्रि. स्थिते--

११७ । **संप्रदानेऽप्** । १।४ । संप्रदाने कारके वर्तमानात् ङ्याप्मृदो अप् विभक्ती भवति । किं सम्प्रदानम् ।

११८ । **कर्मणोपेयं संप्रदानं** । १ ।२। कर्मणा करणभूतेन कर्त्राप्येन गवादिना पारिभाषिकेण लौकिकेन वा पारिस्पदात्मकेन यदुपेयत्वेन निवक्षितं तत्कारक संप्रदानसंज्ञं भवति । तस्या एको ङे ।

द्विर्भ्यां । बहुर्भ्यस् । ङकार इत्संज्ञो ङेयः । इति विशेषणार्थः । गोरिति भिसोऽत ऐसिति च प्रस्तुत्य—

११९ । ङेर्यः । ५।१ । अकारांतस्य गोर्निमित्तभूतस्य ङे इत्येतस्य य इत्ययमादेशो भवति । सान्निपातपरिभाषाया अनित्यत्वात्सुपीति दीर्घत्वं । भ्यामि पूर्ववद् । भ्यसि सुपीति दीर्घत्वं प्राप्तं ।

१२० । बहौ झल्येत् । ५।२ । गोरकारांतस्य झलादौ बहुवचने परत एकारादेशो भवति । इति एत्वं च प्राप्तं । सुपीति दीर्घत्वं प्राप्तं तयोरुभयोरन्यत्र सावकाशयोरेकत्र समुदितयोस्तुल्यबलयोः स्पर्द्धे सति परत्वविधिर्भवति । पूर्ववत् रित्वविसर्जनीयौ । धर्माय । धर्माभ्याम् । धर्मेभ्यः । दीयते इत्यादि क्रियाभिगमः । धर्म इति त्रिः स्थिते--

१२१ । काऽपादाने । १ । ४ । अपादाने कारके वर्तमानात् ङ्याम्मृदः का भवति । किमपादानं—

१२२ । ध्यपाये ध्रुवमपादानं । १ । २ । धियो बुद्धेरपायो विभागो ध्यपायः । तस्मिन् ध्यपाये सति यत् ध्रौव्येन विवक्षितं तत्कारकं अपादानसंज्ञं भवति । तस्या एको ङसिः । द्विर्भ्याम् । बहुर्भ्यस् । ङकारेकारावित्संज्ञौ । ङकारः सोऽस्तीति विशेषणार्थः । इकारो ङसेः सिस्मादिति विशेषणार्थः । टेनान्ङस्टाङ्सेरिति ङसेरदादेशो भवति । स्वेको दीरिति दीर्घत्वं । भ्यामि भ्यसि च पूर्ववत् । धर्मात् । धर्माभ्याम् । धर्मेभ्यः । अवरोहतीत्यादि क्रियाऽवसीयते । धर्म इति त्रिः स्थिते--

१२३ । ता शेषे । १ । ४ । शेषे विवक्षिते ड्याप्मृदः ता विभक्ती भवति । कर्मादीनामविवक्षा ततोऽन्यः स्वस्वाम्यादिः शेषः । तस्या एको ङस् । द्विरोस् । बहुराम् । ङकारो ङस्ङस्योरिति विशेषणार्थः । स्येनान् ङस्टाङसेरिति ङसः स्य इत्ययमादेशो भवति । बहौ झल्येदिति वर्तमाने--

१२४ । ओसि । ५ । २ । अकारांतस्य गोरेत्वं भवत्योसि परतः । इत्येत्वमयादेशो रित्वविसर्जनीयौ च । आम्यात्स्मैः सुडिति वर्तमाने--

१२५ । प्रेल्म्वाप्चतुरो नुट् । ५ । १ । प्र इल् म इत्येवं संज्ञेभ्यः आबताच्चतुःशब्दाच्च नुडागमो भवत्यामि परतः । ङकारटकारयोरित्संज्ञायामुकारउच्चारणार्थः । टकारः टिदादिरिति विशेषणार्थः । स्वचिह्नस्याविष्टाष्टपञ्चभिन्नाद्विभ्राड्द्रिश्रुवक्ष्यस्वास्तिकस्य दीरिति गोरिति च मस्तुत्य---

१२६ । नाम्यतिसृचतसृ ॥ गोरंतस्य दीर्भवति नामि परतः तिसृ चतसृ इत्येतौ शब्दौ वर्जयित्वा पूर्ववत् नकारस्य णत्वम् । धर्मस्य । धर्मयोः । धर्माणाम् । फलमित्यादिशब्दप्रयोगः धर्म इति त्रिः स्थिते—

१२७ । ईबाधारे च[1] । १ । ४ । आधारे च कारके वर्तमानात् ङ्याप्मृद ईप विभक्ती भवति । कः पुनराधारः ।

१२८ । आधारोऽधिकरणम् । १ । २ । आश्रिते क्रियाऽस्मि-

---

१ । अस्य स्थाने ईबधिकरणे च । १।४ । ४४ । इति ।

नित्याधारः । कर्तृसमवायिन्याः शयनादिक्रियायाः कर्मसमवायिन्याश्च पचनादिक्रियाया अधिकरणत्वेन योऽर्थो विवक्षितः स आधारसञ्ज्ञो भवति । तस्या एको ङि । द्वयोरोस् । बहु सुप् । ङकारपकारयोरित्सञ्ज्ञायां ङकारो "ङ्याम्नोर्ङेराम्" इति विशेषणार्थः । पकारः सुपिति प्रत्याहारार्थः । पूर्ववदेप् । ओसि च ओसीति एत्वम् । सुपि वहो झल्येदित्येत्वं । विसर्गः ससेप्य । नुम्शर इति च प्रस्तुत्य-

१२६ । स्यादेशयोः ।५।४।५३। स्यसकारस्यादेशसकारस्य च कवर्गादिणताच्च नुम्शर्परादुत्तरस्य षत्वं भवति । इति षत्वं । धर्मे । धर्मयोः । धर्मेषु । चित्तं निधेहि इत्यादि क्रियाभिसम्बन्धः कार्यः । एवमकारान्ताः पुल्लिंगाः शब्दाः सप्तविभक्तौ क्रियाभिसम्बन्धो योज्यः । परमस्ति प्रक्रियाविशेषः सर्वादिषु । तथाहि । सर्व । विश्व । उभ । उभयट् । अन्य । अन्यतर । इतर । डतर । डतम । त्व । त्वत् । नेम । सम । सिम । पूर्व । पर । अवर । दक्षिण । उत्तर । अपर । अधर । स्व । अन्तर । त्यत् । तत् । यत् । अदस् । इदम् । एतद् । एक । द्वि । युष्मद् । भवत् । अस्मद् । किम् । इति सर्वादयः । तेषां युष्मदस्मद्वर्जितानाम् अभिधेयवत् लिंगं भवति । तत्त्रिलिंगं । तत्र यदा पुल्लिंगास्तदा योज्यन्ते विशेष्यन्ते च जसिङस्मृङिङस्यामिस्वेव नान्यत्र धर्मादिभ्यः । सर्वे । सर्वौ । जसि सर्व अमिति स्थिते गौरिति भिसोऽत ऐसिति खे स्मै इति च वर्तमाने—

१३० । जशः शी । ५ । १ । १४ । खिसंज्ञकस्याकारस्य गोर्निमित्तभूतस्य जसः स्थाने शीत्ययमादेशो भवति । शकार इत्संज्ञः शित्सर्वस्येति विशेषणार्थः । कः खिः ।

१३१ । स्निः सर्वादिः[१] । १ । १ । ४० । सर्वादयः स्निसंज्ञा भवंति । इति स्निसंज्ञायां "आदेप्" सर्वे । सर्वादीनामपि संबोधनमस्तीत्येके । हे सर्व । हे सर्वौ । हे सर्वे । सर्वम् । सर्वौ । सर्वान् । सर्वेण । सर्वाभ्याम् । सर्वैः । सर्व ए इति स्थिते-"ङेर्य." इत्यधिकृत्य—

१३२ । स्नेः स्मैः[२] । ५ । १ । १२ । स्निसंज्ञकस्याकारांतस्य गोर्निमित्तभूतस्य ङे इत्यस्य स्मै इत्ययमादेशो भवति । सर्वस्मै । *सर्वाभ्यां । सर्वेभ्यः । ङसि–*

१३३ । ङ्यसेःस्मिन् स्मात्[३] । ५ । १ । १३ । स्नेरकारांतस्य गोर्निमित्तभूतयोः ङि ङसि इत्येतयोः यथासंख्यं स्मिन् स्मात् इत्येतावादेशौ भवतः । इति ङसेः स्मात् । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्य । सर्वयोः । आमि—

१३४ । आम्यात्स्नेः सुट्[४] । ५ । १ । ३४ । स्नेरवर्णांताद् गोरामि परतः सुट् भवति । पूर्ववदेत्वं षत्वं च । सर्वेषाम् । सर्वस्मिन् । सर्वयोः । सर्वेषु । एवं विश्वोभोभयडन्यान्यतरेतर-

१ । अस्य स्थाने सर्वादिः सर्वनाम । १ । १ । ३५ । इति सूत्रम् ।
२ । अस्य स्थाने-सर्वनाम्नः स्मै । ५ । १ । १२ । इति ।
३ । अस्य स्थाने ङसिङ्योः स्मात्स्मिनौ । ५ । १ । १३ । इति ।
४ । अस्य स्थाने आम्यात्सर्वनाम्नः सुट् । ५ । १ । ३४ । इति

शब्दाः । टकारः ङियां डचर्थः । डतरडतमौ त्यौ, तेन तदंतानां कतरयतरततरैकतरकतमप्रभृतीनां ग्रहणं । तेषां त्वनेमासिम शब्दानां च सर्ववद् प्रक्रिया ।

१३५ । [1]समं सर्वयुक्ते । १ । १ ।४१ । सर्वार्थे युक्तार्थे च समशब्दः सर्वादिर्भवति । स च सर्ववद् ।

१३६ । [2]पूर्वपरावरदक्षिणोत्तरापराधराण्यस्वौ व्यवस्थायां । १ । १ । ४२ । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । तत्रैतानि असंज्ञायां सर्वादीनि भवति ।

१३७ । [3]स्वमज्ञातिधनाख्यायां । १ । १ । ४३ । स्वशब्दः सर्वादिर्भवति, न चेत् ज्ञातिधनपर्यायः ।

१३८ । [4]बहिर्योगोपसंव्याने ऽपुर्यंतरं । १ । १ ।४४ । बहिर्भावेन बहिष्ठेन बाह्येन वा वस्तुना योगे उपसंव्याने ऽपसंविव्यमाने च वर्तमाने अंतरशब्दः सर्वादिर्भवति न पुरि बहिर्योगे ऽपि ।

१३९ । पूर्वादिरद् ङस्योर्वा[5] । १ । १ । ४५ । पूर्वादयो नवाकारांता ङिङस्योः परतः सर्वादयो वा भवंति ।

१४० । [6]जसि । १ । १ ।४६। जसि च विकल्पः । इति

---

१ । २ । ३ । ४ इमे योगाः गणपाठस्था, न तु सूत्रपाठस्थाः महावृत्तौ ।

५ । ङिङस्योर्वा । १ । १ । ४३ । इति सूत्रमस्य स्थाने ।

६ । अस्य स्थाने पूर्वादयो नव । १ । १ । ४२ इति ।

जसृङसीङिष्वेव विशेषोऽन्यत्र सर्वशब्दवत् । पूर्वे पूर्वाः । पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे । एवं परादयोऽपि नेयाः । त्यदादीनां सप्तानां अत्वस्य किमः कादेशस्य च विधानादकारांतत्वं । त्यद् इति स्थिते पूर्ववत्स्वादिः इतां च निवृत्ति. ।

"सुप्याप्वन:" इत्यधिकृत्य–

। १४१ । त्यदादेरः । ५ । १ । १७७ । त्यदादीनामकारांतादेशो भवति सुपि परतः । तास्थानेऽतेऽल इति दकारस्यात्वं । एप्यत इति पररूपं । त्यदादेर इति प्रस्तुत्य–

१४२ । तो:[१] सोऽनंते सौ । ५ । १ । १८० । त्यदादीनां तवर्गस्यानंते वर्तमानस्य सकारादेशो भवति सौ परतः । सर्वशब्दवदन्यत् । स्यः । त्यौ । त्ये । हे स्य । हे त्यौ । हे त्ये । त्य, त्यौ, त्यान् । त्येन, त्याभ्यां, त्यैः । त्यस्मै, त्याभ्यां, त्येभ्यः । त्यस्मात्, त्याभ्यां, त्येभ्यः । त्यस्य, त्ययोः त्येषां । त्यस्मिन्, त्ययोः, त्येषु । एवं तदादयोऽपि योज्याः । अदस् शब्दस्य तु विशेषः । अदस् इति स्थिते पूर्ववत् स्वादिरितां च निवृत्तिः । तोस्सोऽनंते साविति अधिकृत्य—

। १४३ । असौ । ५ । १ । १८१ । असावित्यदसः सकारस्य औकारादेशो भवति । अत्वापवादः । सोश्च खं निपात्यते । तोस्सोऽनते साविति दकारस्य च सकारः । एच्यैप् । असौ । अदस् औ इति स्थिते-त्यदाद्यत्वे पररूपे ऐपि च कृते–

---

१ । अस्य स्थाने तोः सः सावनन्ते । ५ । १ । १६४ इति सूत्रं

१४४ । दादुर्दोमोऽदसोऽसेः । ५ । ३ । ११६ । अदसोऽ-कारीभूतसकारांतस्य दकारात्परस्य वर्णमात्रस्य च उत्वं दकारस्य च मत्वमिति कर्तव्यं । स्वस्याभाव्योऽत्परः इति पृथक् नञ्निर्देशात् भाव्योऽपि स्वस्य ग्राहको भवतीति स्यासन्न इति द्विमात्रस्याकारस्य द्विमात्र ऊकारो भवति । अमू । जसि अदे इति स्थिते–

१४५ । बहुष्वेरीः[1] । ५ । ३ । ११८ । अदसो बहुत्वे निष्पन्नस्य एकारस्य ईकारो भवति । उत्वापवादो दस्य च मत्वं । अमी । संबोधनेऽप्यविशेषः । अमि पूर्ववदत्वमत्वमुत्वं च । अमुं । औटि पूर्ववद् । अमू । शसि दीर्घ न्पुंसीति नत्वं । पूर्ववदन्यत् । अमून् । टा सुपि-अमु आ इति स्थिते–

१४६ । टो नाऽस्त्रियां[2] । ५ । २ । १२६ । सोः परस्य अस्त्रियां विहितस्य टा इत्येतस्य ना इत्यादेशो भवति । इति नाभावे कर्तव्ये मुभावस्यासिद्धत्वादप्राप्ते मुलक्षणे नाभावे–

१४७ । न मु टाविधौ । ५ । ३ । ३७ । टा इत्येतस्य विधिष्टाविधिस्तस्मिन् कर्तव्ये न मुभावोऽसिद्धः । इति नाभावे कृते पुनर्मुत्वस्यासिद्धत्वात् सुपीति दीर्घे प्राप्ते टा इत्येतस्मिन् विधिस्तस्मिन्निति च विग्रहे मुभावस्य सिद्धत्वात् दीर्घं न भवति । अमुना । भ्यामि सुपीति दीर्घे सत्युत्वं मत्वं च । अमूभ्यां ।

---

१ । अस्य स्थाने–बहावेरेतः ५।३।८०। इति सूत्रं

२ । अस्य स्थाने–आङो नाऽस्त्रियां । ५ । २ । ११३ । इति सूत्रं ।

१४८ । नेदमदसोऽकः[1] । ५ । १।६। इदमदसित्येताभ्यामककाराभ्यां परस्य भिसो न ऐस् भवति । भिस ऐस्माबाभावादेत्वमीत्वं च । अमीभिः । कयि उत्वमत्वयोरसिद्धत्वात् स्मैभावः षत्वं च । अमुष्मै । अमूभ्यां । अमीभ्यः । अमुष्मात् । अमूभ्यां । अमीभ्यः । अमुष्य । ओसि एत्वे अयादेशे च कृते उत्वं मत्वं च, अमुयोः । अमीषां । अमुष्मिन् । अमुयोः । अमीषु । इदम् शब्दस्य तु भेदः । इदमिति स्थिते पूर्ववद् स्वादिविधिः । सौ--

१४६ । इदमो मः । ५ । १ । १८३ । इदमः सौ सुपि परतो मकारादेशो भवति । अत्वापवादः ।

१५० । पुंसीदोऽय् । ५ । १ । १८६ । पुंसि वर्तमानस्य इदम इदूरूपस्य अय् इत्ययमादेशो भवति । टा यत्वापवादः । हल्ङ्यादिना सोः खं । अयं । त्यदाद्यत्वमन्यत्र ।

१५१ । दः । ५ । १ । १८४ । इदमो दकारस्य मकारादेशो भवति सुपि परतः । इमौ । इमे । संबोधनेप्येवं । इमं । इमौ । इमान् । टायां--

१५२ । टौस्यनोऽकः[2] । ५ । १ । १८७ । इदमः ककारवर्जितस्य इदूरूपस्य अन इत्ययमादेशो भवति टा ओसि सुपि परतः । अनेन ।

१५३ । हलि खं । ५ । १ । १८७ । इदम इदूरूपस्य हलादौ सुपि परतः खं भवति । ततो दीत्वं । आभ्यां । भिसि पूर्ववद् ऐस्

---

१ । अस्य स्थाने--इदमदसाःसकोः । ५ । १ । ९ । इति ।

२ । अस्य स्थाने--अनाप्यकः । ५ । १ । १७० । इति सूत्रं ।

भावे निषिद्धे पुनरत्वे । णभि । अस्मै । आभ्या । एभ्य । अस्मात् । आभ्या । एभ्य । अस्य । अनयो । एषा। अस्मिन्। अनयो । एषु । इदम इत्यन्वादेशे इति चाधिकृत्य—

१५४ । टौसिष्येतदश्चैनत्[1] । ५ । १ । १६० । इदम एतदश्च टा ओस् इप् इत्येतेषु परत एनदित्ययमादेशो भवति अन्वादेशे कथितानुकथने । पूर्ववदत्वे पररूपत्वे च कृतेऽयमा देश । एनेन । एनयो । एनयो । एन । एनौ । एनान् । एतच्छब्दस्य एष । एतौ । एते । इत्यादि नेय । एकशब्दस्य एक , एकौ, एके इत्यादि सर्वशब्दवत् । यद्येकशब्द एकत्व सख्याया वर्तते तदैकवचनमेव सर्वासा । एक । एक । एकेन । इत्यादि । द्विशब्दस्य द्वित्ववाचित्वात् द्विवचनमेवात्व च । द्वौ । द्वौ । द्वाभ्या । द्वाभ्या । द्वाभ्या। द्वयो । द्वयो । किम् शब्दस्य—

१५५ । किमःक । ५। १ । १७८ । किम क इत्ययमादेशो भवति त्यदादिमवधिनि सुपि परत । क , कौ, के इत्यादि नेय । त्यद् युष्मद् भवद् अस्मद् शब्दाना अत्वाभावात् इतरत्र निश्चय । सर्वादीनि असज्ञाया सर्वादीनि भवति सज्ञाया तु न भवति । सर्वनामा कश्चित् तस्मै सर्वायेत्यादि भवति । प्रथमा दीना जसि विशेषोऽन्यत्र सर्वशब्दवत्—

१५६ । प्रथमचरमतयाल्पार्द्धकतिपयनेमाः । १ । १ । ४७ । प्रथमादीना तयानस्य च तत्मवधिनि जसि थि सज्ञा

---

१ । अस्य स्थाने—टौसिष्येनदेतदश्च । ४ । ३ । ११९ । इति सूत्र ।

वा भवति। यदा क्षिसंज्ञा तदा जसः शीभावः। प्रथमे प्रथमाः। चरमे चरमाः। द्वितये द्वितयाः। अल्पे अल्पाः। अर्द्धे अर्द्धाः। कतिपये कतिपयाः। नेमे नेमाः। नेमशब्दस्य सर्वादित्वादन्यत्र सर्वशब्दवत्। तीयत्यातस्य ङेङसिङिषु विशेषोऽन्यत्र धर्मशब्दवत्।

१५७। [1]तीयो ङिति। १। १। ५३। तीयत्यांतः शब्दो ङिति कार्ये कर्तव्ये क्षि संज्ञो वा भवति। इति विकल्पेन स्मायादिः। द्वितीयस्मै द्वितीयाय। द्वितीयस्मात् द्वितीयात्। द्वितीयस्मिन् द्वितीये। एव तृतीयशब्दः इति। आकारांतः क्षीरपाशब्दास्त्रिलिंगस्तत्र पुलिंगो नीयते। पा पाने। पा इत्येषा प्रकृतिः पानार्थे वर्तते। इत्युक्तार्थत्वात् पानशब्दस्य निवृत्तिः। पा इति स्थिते। तस्याः--

१५८। भूवादयो धुः। १। २। १। भू इत्येवमादीनां चुरादिपर्यंतानां पाठतोऽर्थतश्च परिच्छिन्नानां[2] धुसंज्ञा भवति। धुसज्ञायां सत्यां क्षीरमित्युपपदं। ततः कर्मण्यीत्यम्। क्षीरं पिबति इति विग्रहे--त्यः पर इति धोरिति कर्मणीति क्वचिदिति चानुवर्तमाने--

१५९। क्विप्। २। २। ७४। कर्मणि वाचि धोः क्वचित् क्विबित्ययं त्यः परो भवति। स च--

१६०। कृत्[3] कर्तर्यभिः। २। ४। ४७। भिवर्जितः

१। अस्य स्थाने तीयस्य ङिति। १। १। ४४। इति सूत्र।

२। अस्य स्थाने "परीतात्मनां" इति पाठः। (क) पुस्तके वर्तते।

३। अस्य स्थाने कर्तरि कृत्। २। ४। ५२। इति सूत्रं।

कृत्संज्ञस्य कर्तरि भवति । क्विप् पुनः कृत् ।

१६१ । कृदमिङ् । २ । १ । ६६ । मिङ्वर्जितो घोर्विहि तस्य कृत्संज्ञो भवति । इति कर्तरि भवति । स सर्वोऽप्रयोगीत् । ककार क्ङितीति विशेषणार्थः । वकार प्राक्कृद्वाऽसम इति सति साम्ये बाधनार्थः । इकार उच्चारणार्थः । पकार पिति इति तुगिति विशेषणार्थः । ततः कृदन्तस्य मृत्संज्ञाया स्वादि विधि प्राप्तः । क्षीर अम् पा इति स्थिते सुप् सुपेत्यधिकृत्य–

१६२ । वागमिङ् । १ । ३ । ८५ । मिङ्वर्जित वाक्संज्ञं कृदन्तेनोत्तरपदेन सह नित्यं षसो भवति । अमिङिति प्रतिषेधवचनं ज्ञापकं तिवाङ्गारकाणां कृद्भिः सह सुबुत्पत्तेः प्रागेव षसो भवतीति । किं वाक्संज्ञं ।

१६३ । ईपा वाक्[1] । २ । १ । ६७ । तत्र घोरधिकारे ईपा निर्दिष्टस्य वाक् संज्ञा भवति । इति वाक् संज्ञा ।

१६४ । सुपो घुमृदोः । १ । ४ । १६७ । घुमृदोरवयव भूतस्य सुप उप् भवति । इति सुप उप् ।

१६५ । [2]वोक्तं पूर्वं । १ । ३ । १०६ । साधिकारे यया विभक्त्योक्तं पूर्वं प्रयोक्तव्यं । इति क्षीरशब्दस्य पूर्वनिपातः । क्षीरपा इत्येतस्मात् स्वादिविधि सुटि नास्ति विशेषः । क्षीरपाः, क्षीरपौ, क्षीरपाः । सम्बोधनेप्येवं । क्षीरपाः, क्षीरपौ । शसादौ

---

१ । अस्य स्थाने-ईपात्र याक् । २ । १ । ७०, इति सूत्रं ।

२ । अस्य स्थाने यात्र न्याक् । १ । ३ । ९३ । इति सूत्रं ।

वजादौ । भस्येत्यनोऽल्लमंवस्फादित्यधिकृत्य—

१६६ । **आतो ऽनापः**[1] । ४ । ४ ।१३८। भसंज्ञकस्याकारांतस्य खं भवति आपं वर्जयित्वा । कः पुनर्भः—

१६७ । **यचि भः** । १ ।२ ।१२० । यकारादावजादौ च धवर्जिते स्वादौ परतः पूर्वं भसंज्ञं भवति । इति भसंज्ञायां क्षीरपः, क्षीरपा । हलादावविशेषः । क्षीरपाभ्यां, क्षीरपाभिः । क्षीरपे, क्षीरपाभ्यां, क्षीरपाभ्यः । क्षीरपः,क्षीरपाभ्यां,क्षीरपाभ्यः।क्षीरपः, क्षीरपोः, क्षीरपां । क्षीरपि, क्षीरपोः, क्षीरपासु । स्त्रियामप्येवं रूपं । तथा सोमपादयः । इकारांतः पुल्लिंगो मुनिशब्दः । मुनि इति स्थिते स्वादयः । सोरित्वविसर्जनीयौ । मुनिः। औकारयोः ।

१६८ । [2]**सुटीदुतः प्राक्स्वं** । ४ । ३ ।१०६ । प्राचः पूर्वस्येकारस्योकारस्य च स्वं दीर्भवति अजादौ सुटि परतः। द्वयोरेकः । इति दीत्वं । मुनी । जसि । प्रस्यैप् कावित्यधिकृत्य—

१६९ । **जसि** । ५ । २ । ११६ । प्रांतस्य गोरेप् भवति जसि परतः । मुनयः । संबोधने कौ ।

१७० । **प्रस्यैप् कौ** । ५ । २ । ११५ । प्रांतस्य गोरेप् भवति कौ परतः । "व्योः खं वल्कावितिं" "ह्रस्वड्याब्भ्यः सुसिप्त्यनच्" इति प्रस्तुत्य—

---

१ । अस्य स्थाने "आतो धोः" इति सूत्रं । २ । अत्र प्रक्रियाभेदस्तावत् स्थानिसूत्राणि तु 'सुटि पूर्वस्वं । ४ । ३ । ८९ । नेच्यात् ४ । ३ । ९२ । धो असि च । ४ । ३ । ९३ ।" इति महावृत्तौ

१७१ । केरेङः । ४ । ३ । ६५ । एङंतात्परस्य केरनचः स्वं भवति । इति सोः स्वं । द्विवह्वोः पूर्ववत् । हे मुने । हे मुनी । हे मुनयः । अमि पूर्ववत् । मुनीं । मुनी । शसि दीर्घत्वनत्वे-मुनीन् । टायां-टो नाऽस्त्रियामिति नाभावः । मुनिना । हलादावविशेषः । मुनिभ्यां । मुनिभिः । ङेङसिङस्सु भस्यैनित्यधिकृत्य—

१७२ । स्रोर्ङिति[1] । ५ । २ । ११८ । स्वन्तस्य गोरेब् भवति ङादौ सुपि परतः । किं नाम सु । "य्वौ स्व्यास्त्र्यौ सुः" "ङिति प्रश्वेति च प्रस्तुत्य--

१७३ । [2]स्वसम्विपति । १ । २ । ११० । य्वोर्यः मःम सुसंज्ञो भवति सखिपतिशब्दौ वर्जयित्वा । इति सुसंज्ञा । मुनये । मुनिभ्यां । मुनिभ्यः । "पदेत्येङः" इत्यधिकृत्य—

१७४ । [3]ङस्ङस्योः । ४ । ३ । १११ । एङः परयोः ङस् ङसीत्येतयोरति परतः परःपूर्वो भवति द्वयोरेकः । मुनेः । मुनिभ्यां । मुनिभ्यः । मुनेः । मुन्योः । मुनीनां । न्याप्मोर्ङेरामित्यनुवर्तमाने—

१७५ । [4]स्रोडौ । ५ । २ । १२५ स्वन्तात् गोः परस्य ङेर्डावित्ययमादेशो भवति । डकारष्टिखार्थः । भस्येति स्वमिति चानुवर्तमाने—

---

१ । 'स्रोर्ङि' इति पाठो मद्रासीयसूत्रपाठे शब्दार्णवचंद्रिकायां चवर्त्तते ।

२ । अस्य स्थाने "स्वमाखि । १ । २ । ९६ । पतिः से । १ । २ । ९७" इति सूत्रद्वयं ।

३ । अस्य स्थाने "ङसिङस्मोः । ४ । ३ । ९७ इति सूत्रं ।

४ । अस्य स्थाने 'औदच्च सेः । ५ । २ । ११२ । इति सूत्रं ।

१७६ । डिति टेः [1] । ४ । ४ । १३।६१ गोर्मस्य टेः खं भवति डिति परतः । इति टिखं । मुनौ । मुन्योः । मुनिषु । एवं रविकविकलिबलिकेलिवन्ह्यग्निवृष्टिकृमिध्वनिदधिकपिप्रभृतयः । सखिशब्दस्याभिधेयलिंगस्य विशेषः । सखि इति स्थिते स्वादिविधिः । सखितोऽकावित्यधिकृत्य—

१७७ । [2]ङन्सौ । ५ । १ ।७४। सखिशब्दस्य गोर्निमित्तभूते किवर्जिते सौ परतो ङन्नित्ययमादेशो भवति ।

१७८ । [3]तास्थानेऽन्तेलः । १ । १ । ५४। तायाः स्थाने विधिरुच्यमानोऽन्ते वर्तमानस्यालः स्थाने भवति । इति अंतेलः स्थाने विज्ञाते पुनरनेकवर्णः सर्वस्य इति सर्वस्य प्राप्ते—

१७९ । ङित् । १ । १ ।५५ । ङिदेवानेकाल् अंत्यस्यालः स्थाने भवत्यतोऽन्यः सर्वस्य । इति नियमेन अंत्यस्य इकारस्य स्थाने भवति । ङकारोऽप्रयोगीत्संज्ञायां ङिदिति विशेषणार्थः । हल्ङ्यादिना सोः खं । दीः इति गोः इति "नोङ" इति च प्रस्तुत्य—

१८० । धेऽकौ । ४ । ४ । ६। किवर्जिते धे परतो गोर्नोङो दीर्भवति । त्यखे त्याश्रयमिति सुबंतं पदं । पदस्येत्यधिकृत्य—

१८१ । [4] नो मृदंते खं । ५ । ३ । ४३ । मृदः परस्यांतेऽवयवे वर्तमानस्य नकारस्य खं भवति । सखा । सुटि "ओतो णित्" इत्यनुवर्तमाने—

---

१ । अस्य स्थाने "टेः । ४ । ४ । १२७ ।" इति सूत्रं ।
२ । अस्य स्थाने "अनङ् सौ । ५ । १ । ७० । इति सूत्रं ।
३ । अस्य स्थाने एतादृशमेव सूत्रद्वयं ।
४ । अस्य स्थाने नखं मृदंतस्याकौ । ५ । ३ । ३० इति सूत्रं ।

१८२ । [1]सखितोऽकौ । ५ । १ । ७३ । सखिशब्दात्परं घं किवर्जितं णित् भवति । मृजेरैबित्यधिकृत्य—

१८३ । ञ्णित्यचः । ५ । २ । ३ । गोरजंतस्य ञकारणकारानुबंधे त्ये परत ऐप् भवति । आयादेशः । सखायौ । सखायः । संबोधनेऽप्येवं । अकाविति प्रतिषेधात् ञ्णित्त्वं न भवति । ततः प्रस्यैप् कावित्येप् केश्च खं । द्विबह्वोः पूर्ववत् । हे सखे । हे सखायौ । हे सखायः । सखायं । सखायौ । शसि पूर्ववत् सखीन् । टायां स्वसखिपतीति सुसंज्ञाप्रतिषेधान्न नाभावः । सख्या । हलादावविशेषः । सखिभ्यां । सखिभिः । ङेऽपि सुसंज्ञाविरहात् एप् न भवति । सख्ये । सखिभ्यां । सखिभ्यः । ङसिङसोः "ङसङस्योरिति" "ऋत उत्" इति च प्रस्तुत्य—

१८४ । ख्यत्योऽतः[2] । ४ । ३ । ११३ । ख्य त्य इत्येताभ्यां अनञ्काभ्यां परस्य ङसङस्योरकारस्य उत् भवति । अत इति स्थानिनिर्देशात् द्वयोरेक इति निवृत्तः । सख्युः । सखिभ्यां । सखिभ्यः । सख्युः । सख्योः । सखीनां । ङौ "न्याम्मोर्ङेरामिति "इदुतः" इति च प्रस्तुत्य—

१८५ । औः[3] । ५ । २ । १२४ । इदुद्भ्यां परस्य ङेरौकारो भवति । सख्यौ । सख्योः । सखिषु । पति शब्दस्य सुटि मुनि

---

१ । अस्य स्थाने-"सख्युरकौ । ५ । १ । ७२ । इति सूत्रं ।
२ । अस्य स्थाने "ख्यत्यादुतः । ४ । ३ । ९९ । इति सूत्रं ।
३ । अस्यापि कार्यं "औदच्च सोः । ५ । २ । ११२ ।" इति योगेनैव कृतं ।

शब्दवदन्यत्र सखिशब्दवत् । पतिः । पती । पतयः । हे पते । हे पती । हे पतयः । पतिं । पती । पतीन् । पत्या । पतिभ्यां । पतिभ्यः । पत्युः । पतिभ्यां । पतिभ्यः । पत्युः । पत्योः । पतीनां । पत्यौ । पत्योः । पतिषु । त्रिशब्दोऽभिधेयलिङ्गः । अतो बहुवचनमेव आदशभ्यः संख्याबहुविषये त्यविधानात् । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । आमि--

१८६ । त्रेस्त्रयः । ५ । १ । ३५ । त्रिशब्दस्य त्रय इत्ययमादेशो भवति आमि परतः । पूर्ववद् नुट् दीर्घत्वं णत्वं च । त्रयाणां । त्रिषु । कतिशब्दस्याव्यक्तलिंगस्य विशेषः । किमस् इति स्थिते का संख्या मानमेषां इति विगृह्य--

१८७ । किमश्च स्येर्डतिश्च[1] । ३ । ४ । २१० । स्यिः संख्या यन्मान तद्वाचिनः किम् शब्दात् तदिति वासमर्थात् यद् तद्भ्यां च अस्येति सार्थे डतिस्त्यो भवति वतुश्च । डकारष्टिखार्थः । सुपो धुमृदोरिति सुप्लुप् । बहुविषयत्वाद्बहुवचनमेव भवति । जस्शसोः शिरिति वर्तमाने--

१८८ । उबिलः । ५ । १ । १६ । गोरिल्संज्ञकाद् परयोर्जस्शसोः उब्भवति । क उप् ।

१८९ । ष्णांता चेल्[2] । १ । १ । ३६ । षकारांता नकारांता च या संख्या डतित्यांताश्च इल् संज्ञा भवंति । इति इल् संज्ञा ।

---

१ । अस्य स्थाने "किमः । ३ । ४ । १६३ । संख्या परिमाणे डतिश्च । ३ । ४ । १६४ ' इति च सूत्रं ।

२ । अस्मिन् सूत्रे चेति पदं नास्ति महावृत्तौ

कति तिष्ठंति । कति पश्य । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनां । कतिषु । एवं यत्तदोर्यतिततिशब्दौ तज्ज्ञेयौ । ईकारांतोऽभिधेयलिंगो ग्रामणीशब्दः । णीञ् प्रापणे । इति णीञ् ञकारोऽप्रयोगीत् ञितः फलेशे इति विशेषणार्थः । पूर्ववद् धुसंज्ञायां—

१६० । ष्वादेः ष्णोऽष्ट्यादिवृष्वष्कः स्नं [1] ४।३। ६२ ष्ट्यादिवृष्वष्कवर्जितस्य धोरादिभूतस्य षकारस्य णकारस्य च यथासंख्यं सकारो नकारश्चादेशो भवति । ग्रामशब्दात्कर्मणीप् । ग्रामं नयतीति विगृह्य—"क्वचित् क्विबिति" क्विप् । स च प्रतिलब्धकृत्संज्ञः कर्तरि भवति । पूर्ववदप्रयोगीत् प्रयोजयति । वागमिङिति सविधिः । सुपो धुमृदोरिति सुबुप्, वोक्तं पूर्वमिति ग्रामशब्दस्य पूर्वनिपातश्च ।

१६१ । ग्रामाग्राज्जीः । ५ । ४ । १०५ । ग्राम अग्र शब्दाभ्यां परस्य नीनकारस्य णत्वं भवति । इति णत्वं । पूर्ववद् स्यादिविधिः सोरित्वविसर्जनीयौ । अजादौ-णीन् इत्यधिकृत्य—

१६२ । एर्गिवाक्वादुङोऽसुधियः । ४ । ४ । ८२ । गिनाक्वाद् परो यो उङ् तस्मात्परस्य इवर्णस्य यणादेशो भवति सुधिशब्दं वर्जयित्वा । हलादावविशेषः । ग्रामणीः । ग्रामण्यौ । ग्रामण्यः । संबोधनेऽप्येवं । ग्रामण्यं । ग्रामण्यौ । ग्रामण्यः । ग्रामण्या। ग्रामणीभ्यां । ग्रामणीभिः । ग्रामण्ये । ग्रामणीभ्यां । ग्रामणी-

---

१ । अस्य स्थाने "ष्वादेः षः सः । ४ । ५ । ३ । णो नः । ४ ३ । ५४। 'ष्ठीवतिष्वष्कतिष्ट्ययतीनां प्रतिषेधो वक्तव्यः" इति वार्तिकं च ।

भ्यः । ग्रामण्यः । ग्रामणीभ्यां । ग्रामणीभ्यः । ग्रामण्यः । ग्रामण्योः । ग्रामण्यां । ङौ —

१६३ । न्याम्मोर्ङेराम्[1] । ५ । २ । ११६ । नीइत्येतस्मात् आबंतात् मुसंज्ञकाच्च परस्य ङेः आमित्ययमादेशो भवति । ग्रामण्यां । ग्रामण्योः । ग्रामणीषु । एवं अग्रणी प्रभृतयोऽपि योज्याः । स्त्रीलिंगेप्येवमेव । उन्नीशब्दस्य भेदः । णीञ् इति स्थिते नत्वं तस्य गिना योगः । को गिः । प्रादिरिति वर्तमाने—

१६४ । क्रियायोगे गिः । १ । २ । १५७ । क्रियायां स्वर्थेन योगे संबंधे सति प्रादयो गिसंज्ञा भवंति । के पुनः प्रादयः । प्रपराऽपसमन्ववनिर्दुरव्याङ्न्यधयोऽप्यतिसूदभयश्च । प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ॥१॥ इति विंशति प्रादयः ।

१६५ । तिः । १ । २ । १५८ प्रादयः तिसंज्ञाश्च भवंति ।

१६६ । प्राग् धोस्ते । १ । २ । १७५ । ते गितिसंज्ञाः शब्दाः धोः प्राग् प्रयुज्यंते । इति पूर्वप्रयोगनियमः । ततस्सा-त्त्राशःकृत्यसुसुघ्नवद्धामुरकांतुमुम्भिकाभवितव्यन्यक्स्वरादयो क्षि-रित्युच्छब्दस्य क्षिसंज्ञायां सत्यां सुपो क्षिरित्युप्वचनसामर्थ्यात् सुः तत उप् । नयतीति विगृह्य-पूर्ववद् क्विबादिः । उत् स् नी इति स्थिते—

१६७ । तिक्वाङ्दुः[2] । १ । ३ । ८३ । तिसंज्ञाः कुः आङ् दुस् इत्येते च शब्दाः समस्यंते नित्यं पसो भवति । पूर्ववद्

१ । अस्य स्थाने "ङेराम् न्याम्नीभ्य. । ५ । २ । ११०" इति सूत्रं । २ । अस्य स्थाने "तिकुप्रादय । १ ।३।८१" इति महावृत्तौ

सुबुप् पूर्वनिपातश्च । यरो डो वा डे इति डकारस्य नत्व । उन्नी इत्यत पुन स्वादय । उन्नी । उन्न्यौ । उन्न्य । ग्रामणीशब्द वत् । स्त्रीलिंगेऽप्येव रूप । नीशब्दस्य भेदः । णीञ् इति पूर्ववन्नत्वे क्विविधि । नी इत्यत स्वादयो हलादावविशेष । अजादो तु—

१६८।[1] हल्श्नुधुभ्रुवोऽचीयुव्यो ।४।४।७५। हल पर श्नु धु भ्रु इत्येतेषा इवर्णोवर्णयोरचि परत इय् उव् इत्येतौ आदेशौ भवत । नी । नियौ । नियः । सबोधनेऽप्येव । निय । नियौ । नियः । निया । नीभ्या । नीभि । निये । नीभ्या । नीभ्य । निय । नीभ्या । नीभ्य । निय । नियो । निया । नियां । नियो । नीषु । स्त्रीलिंगेऽपि समान रूप । सुधी शब्दस्य विशेष । ध्यै स्मै चिंताया । डुधाञ् धारणे च । डुकारञकारयोरमयोगीत्वात् डुकारो द्वित क्त्रिरिति विशेष-णार्थ । ञकारो दविध्यर्थ । मारू सुशब्द प्रयुज्यते । सुध्या-यति सुदधातीति वा सुधीं । अत एवाऽसुधिय इति निपातनात् रूपसिद्धि । सुधी । सुधियौ । सुधिय । इत्यादि नीशब्दवत् । एव सुश्र्यादय ।

उकारात पुलिंग कारुशब्द स च मुनिशब्दवत् । कारु । कारू । कारव । इत्यादि । एव बाहुमानुकेतुक्रतुतन्तुपट्प्रभृतयो नेया । क्रोष्टुशब्दस्य विशेष । क्रोष्टु इति स्थिते स्वादय ।

---

१। अस्य स्थाने ' श्नुधुभ्रुवा य्वोरचीयुवौ ।४।४।७१। इति सूत्र ।

४

"एधें" इति "सासितोऽकाविति" चाधिकृत्य—

१९९। [1]तृज्वत्क्रोष्टुः। ५। १। ७६। क्रोष्टुशब्दः तृजंत इव भवति किवर्जिते घे परतः। इति तृज्वद्भावे सति "ङन्सौ" इत्यधिकृत्य—

२००। ऋदुशनस्पुरुदंशोऽनेहसां। ५। १। ७५। ऋकारांतानां उशनस् पुरुदंशस् अनेहस् इत्येतेषां च किवर्जिते सौ परतः ङनादेशो भवति। "तास्थानेऽतेलः" इति सिद्धे ङिदिति नियमेन अंत्यस्य भवति। पूर्ववद् ङकारस्य निवृत्तिः। सोश्च खं। घेऽकाविति दीत्वं। नो मृदंते खमिति नखं। क्रोष्टा। औटि। "भस्यैप् फौ" इत्यनुवर्तमाने—

२०१। ऋतो ङिघे। ५। २। ११४। ऋकारांतस्य गोरेब् भवति ङौ घे च परतः। रंतोऽणुरिति रपरत्वं। "दीर्गोन्ङिः" घेऽकाविति प्रस्तुत्य—

२०२। स्वसनप्तृनेतृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृत्रपां। ४। ४। ८। स्वस्रादीनां तृन् तृच् इत्येवमंतानां अप् शब्दस्य च किवर्जिते घे परतो गोरुङो दीर्भवति। क्रोष्टारौ। क्रोष्टारः। किसंबोधने तृज्वद्भावाभावात् भस्यैप् फा वित्येप्। हे क्रोष्टो। हे क्रोष्टारौ। हे क्रोष्टारः। क्रोष्टारं। क्रोष्टारौ। शसि न्पुंसीति दीत्वनत्वे। क्रोष्टून्। टादावजादौ—

१। अस्य स्थाने नास्ति सूत्रं, परं क्रोष्टुशब्दस्याभिधानवशात् किवर्जिते घे न भवंति रूपाणि, एवं च क्रोष्टृशब्दस्यापि किशस् भिस्भ्यामाम्सुप्सु नास्ति प्रयोगः। अन्यत्रतु द्वयोरपि भवति।

२०३ । वाऽन्यापि । ५ । १ । ७८ । क्रोष्टुशब्दस्य तृज्वद्भावो वा भवति टादावजादौ परतः । हलादावविशेषः । यदाऽतिदेशस्तदा यणादेशोऽन्यत्र कारुशब्दवत् । क्रोष्ट्रा । क्रोष्टुना । क्रोष्टुभ्यां । क्रोष्टुभ्यः । ङस्ङस्योरित्यधिकृत्य—

२०४ । ऋत उः[1] । ४ । ३ । १११ । ऋकारांतात् परयोः ङस्ङस्योरति परत उकारादेशो भवति । द्वयोरेकः । रंतोऽणुरेति रतत्वं ।

२०५ । रात्सः । ५ । ३ । ५५ । रेफात्परस्य सकारस्य खं भवति । इति सखं । क्रोष्टुः । क्रोष्टुभ्यां । क्रोष्टुभ्यः । क्रोष्टुः । क्रोष्ट्रोः । क्रोष्ट्वोः । नित्यत्वादामि नुटा तृज्वद्भावो वाध्यते । क्रोष्टूनां । क्रोष्टरि । क्रोष्टौ । क्रोष्ट्वोः । क्रोष्टुषु ॥ ऊकारांतः खलपूशब्दोऽभिधेयलिंगः । पूञ् पवने । पूञः ञकारो दाविच्यर्थः । धुसंज्ञायां सत्यां खलशब्दात् अम् । खलं पुनातीति विगृह्य क्विबादिविधिः । वागमिञीति सविधिः । सुप उप् । मृत्संज्ञायां स्वादयः । खलपूः । सुप्यजादौ । "यणिरणः" एगिंवाग्चादुडोऽसुधियः" इत्यनुवर्तमाने-

२०६ । सुप्योः । ४ । ४ । ६३ । गि वाग् चपूर्वादुडः परस्य उवर्णस्य यणादेशो भवति अजादौ सुपि परतः । खलप्वौ । खलप्वः । हे खलपूः । हे खलप्वौ । हे खलप्वः । खलप्वं । खलप्वौ । खलप्वः । खलप्वा । हलादावविशेषः । खलपूभ्यां । खलपूभिः । इत्यादि नीशब्दवन्नेयं । एवं यवोत्पूर्वस्य लूञ् छेदने इत्यस्य

१ । अस्मिन् सूत्रे तदिति पाठो महावृत्तौ ।

यवलूउल्लूशब्दौ । लूशब्दाचुवादेशः । लूः । लुवौ । लुवः । इत्यादि । प्रतिपूर्वाद् भू सत्तायामित्यस्मात् क्विबादिः स्वादयश्च । "दन्करपुनर्वर्षाभ्यो भुवः" इति नियमादजादौ सुपि यणादेशो न भवति । हलादावविशेषः । प्रतिभूः । प्रतिभुवौ । प्रतिभुवः । हे प्रतिभूः । हे प्रतिभुवौ । हे प्रतिभुवः इत्यादि । एवं स्वयंभूमित्रभूप्रभृतयो नेयाः । स्त्रीलिंगेप्येतेषामेवं रूपं ।

—— ऋकारांतः पुलिंगः पितृशब्दः । पितृ इति स्थिते पूर्ववद् स्वादयः । सौ ऋदुशनस्पुरुदंशोऽनेहसामिति ङन् । अन्यत् पूर्ववत् । स्वस्नप्तृ इत्यादिना नियमेन दीर्घत्वं न भवति । पिता । पितरौ । पितरः । संबोधने कौ ङन्न भवति । मस्यैप् काविति एप् । हे पितः । हे पितरौ । हे पितरः । पितरं । पितरौ । शसि दीर्घत्वनत्वे पितॄन् । टादौ यणादेशः । पित्रा । पितृभ्यां । पितृभिः । पित्रे । पितृभ्यां । पितृभ्यः । ङस्ङस्योः "ऋत उ" इत्युत्वं । पितुः । पितृभ्यां । पितृभ्यः । पितुः । पित्रोः । आमि नुण्णत्वदीर्घत्वानि । पितॄणां । कथमत्र णत्वं षकाररेफाभावादिति चेदुच्यते ऋवर्णे रेफभागोऽस्तीति प्रतिज्ञानात् । तच्च थिन्विकृण्व्योरिति निर्देशात् तृप्नातेः क्षुभ्नादिषु णत्वप्रतिषेधाच्च ज्ञायते । पितरि । पित्रोः । पितृषु । एवं मातृजामातृप्रभृतयः । नृशब्दस्य पुनरामि विशेषः । अन्यत्र पितृशब्दवत् । घेर्गोरित्यधिकृत्य–

२०७ । नुर्वा । ४ । ४ । ४ । नृशब्दस्य गोर्दीर्घश्चति वा नामि परतः । नृणां पतिः । नृणां पतिः । तृचत्यांतस्य मातृश-

व्दस्य भेदः । माङ् माने । ङकारो दविघ्यर्थः । मा इति स्थिते मिमीत इति विगृह्य—

२०८ । ण्वुतृचौ।३।१।१३३। धोः ण्वु तृच् इत्येतौ स्तौ भवतः । इति तृच् । स च "कृत् कर्त्तर्यशिरिति कर्तरि भवति । चकारः ण्वुतृज्भ्यामिति विशेषणार्थः । मातृ इत्यतः स्वादयः । क्रोष्टुशब्दवत् प्रक्रिया । माता । मातारौ । मातारः । हे मातः । हे मातारौ । हे मातारः । मातारं । मातारौ । मातॄन् । मात्रा । मातृभ्यां । मातृभिः । मात्रे । मातृभ्यां । मातृभ्यः । मातुः । मातृभ्यां । मातृभ्यः । मातुः । मात्रोः । मातॄणां । मातरि । मात्रोः । मातृषु । कर्तृशब्दस्य भेदः । डुकृञ् करणे । डुशब्द-ञकारावितौ पूर्ववद् प्रयोजनतः । कृ इत्येतस्य घुसंज्ञायां सत्यां करोतीति विगृह्य पूर्ववद् तृच्। यत्ये सदादि गुरिति पूर्वस्य गुसंज्ञायां—

२०९ । शेषोऽग एव । २।४।८६ । धोर्विहितो मिद्-शिद्भ्यामन्ये ये त्यान्ते अग संज्ञा एव भवति । इत्यगसंज्ञा "गो." मिंदेरेबिति च वर्तमाने—

२१० । गाऽगयोः । ५ । ३ । ६१ । गे चागे च परतो गेरेभवति । कस्य स्थाने—

२११। इकस्तौ । १ । १ । १७। तौ एबैपौ अनिर्दिष्टस्था-निनौ इक एव स्थाने भवतः । इति इकः स्थाने भवति । रंतत्वं

१ । ण्वुतृचौ । २ । १ । १५० ॥ इति सूत्रमस्य स्थाने ।

परस्य द्वित्वं । कर्तृ इत्यतः स्वादयः । कर्ता । कर्तारौ । कर्तारः । इत्यादि मातृशब्दवत्। एवं भर्तृहर्तृप्रभृतयस्तृजन्तांताः। ऋकारांतो वाच्यलिंगः प्रियगृ शब्दः । उभाभ्यां सुः । प्रियो गृरस्य इति विगृह्य-सुप्सुपा, अवान्यार्थेनेकं वमिति वर्तमाने —

। २१२ । एकार्थं । १ । ३ । ६० । एकः समानोर्थो द्रव्यमधिकरणं यस्य तदेकार्थं समानाधिकरणं अनेकं सुबंतं सुबंतेन सह समस्यते बसज्ञः सो भवति । सुवुप् ।

। २१३ । गुणस्त्रिनास्त्रियं बे । १ । ३ । १११ । गुणःविशेषणं स्त्रिः सर्वादिः स्त्रियः संख्या च बसे पूर्वं प्रयोक्तव्य । इति प्रियशब्दस्य पूर्वनिपातः। प्रियगृ इत्यतः स्वादय। ऋदुशनसित्यत्र ऋतो ङिभे इत्यत्र च तकाराच्च ङनृएपौ भवतः । प्रियगृः । प्रियग्रौ । प्रियग्रः । हे प्रियगृः । हे प्रियग्रौ । हे प्रियग्रः । इत्यादि । लृकारलृकारौ चाप्रसिद्धौ । एकारांतोऽभिधेयलिंगोऽतिहेशब्दः । अतिशब्दात्सुः । हे शब्दादम् । कथमत्र अम् । अनुकरणशब्दोऽनुकार्ये हेशब्दे वर्तयति । अतिक्रमणक्रियाया हेशब्दः कर्म भवति इति अतिक्रांतो हेशब्दं इति विगृह्य-मात्यव परिनिःप्रत्यादयो गतक्रांतक्रुष्टगोवक्तान्तस्थितादिषु वेप्भाप्कैप्भ्यरिति अतिशब्दः क्रातेर्थे वर्तमानो वांतो हेशब्देनेयतेन सह पसो भवति । सुवुप् । अतिहे इत्यतः स्वादयः । अतिहेः । अतिहयौ । अतिहयः । हे अतिहेः । हे अतिहयौ । हे अतिहयः । अतिहयं । अतिहयौ । अतिहयः । अतिहया । अतिहेभ्यां । अतिहेभिः । अतिहये । अतिहेभ्यां । अतिहेभ्य. ।

अतिहे. । अतिहेभ्यां । अतिहेभ्यः । अतिहेः । अतिहयोः । अतिहयां । अतिहयि । अतिहयोः । अतिहेषु । एवं सेपरमसेशब्दौ। ओकारांतः उभयलिंगो गोशब्दः । ततः स्वादयः । एधे इत्यधिकृत्य--

२१४ । ओतो णित्[1] । ५ । १ । ७१ । ओकारात्परं घं णिद्वद् भवति । णिद्वद्भावस्य प्रयोजनं ञ्णित्यच इत्यैप् । गौः । गावौ । गावः । हे गौः । हे गावौ । हेगावः । वाम्शसोरिति च प्रस्तुत्य---

२१५ । ओतः । ४ । ४ । ७९ । ओकारांतस्य गोराकारांतादेशो भवति अम्शसोः परतः । गां । गावौ । गाः । गवा । गोभ्यां । गोभिः । गवे । गोभ्यां । गोभ्यः । गोः । गोभ्यां । गोभ्यः । गोः । गवोः । गवां । गवि । गवोः । गोषु । एवं घोशब्दः। ऐकारांतः पुंलिंगो रैशब्दः । ततः स्वादयः। "सुप्याद्भ्न" इत्यधिकृत्य---

२१६ । रायः स्मि[2] । ५ । १ । ५६ । रैशब्दस्य गोराकारो भवति सकारादौ भकारादौ च सुपि परतः । राः। रायौ । रायः। रायं । रायौ । रायः । राया । राभ्यां । राभिः । राये । राभ्यां । राभ्यः । रायः । राभ्यां । राभ्यः । रायः। रायोः । रायां। रायि । रायोः । रासु । औकारांतः पुंलिंगो ग्लौशब्दः । ततः स्वादयः ।

---

१ । अस्य स्थाने-गोर्णित् । ५ । १ । ६७ । इति सूत्रं ।

२ । अस्य स्थाने "रायो हलि । ५ । १ । १४४ । इति सूत्रं ।

हलादावविशेषोऽजादाववादेशः । ग्गौः । ग्गावौ । ग्गावः । इत्यादि नेयं ।

इत्यजंताः पुंलिंगाः ॥

अथाजंताः स्त्रीलिंगा उच्यंते । तत्राकारांतोऽप्रसिद्धः । तत्राकारांतस्तु दयाशब्दः । ङ्याप्मृदः स्त्रियामित्यधिकृत्य-

२१७ । [1]अजाद्यतां टाप् ।३।१।४। अज इत्येवमादिना-मकारांतानां च स्त्रियामभिधेयायां ये मृदस्ततष्टाप् भवति । इति दय इत्यतष्टाप् । टपकारयोरित्संज्ञा । टकारष्टाप्डापोः सामान्यग्रहणाविघातार्थः । पकारः सामान्यग्रहणार्थः । स्वेऽको दीः । द्वयोरेकः । दयां इति स्थिते स्वादयः ।

२१८ । [2]हल्ङ्याब्भ्यः सुसिप्त्यनच् । ४ । ३ । ६२ । हलंताद् डी चाप् च यो दीस्तदंताच्च परेषां सुसिप्तीनां अनचां खं भवति । दया । औकारयोः "जस.शी" इति वर्तमाने-

२१९ ।आप औतः[3] । ५ । १ । १५ । गोराबताद् उत्तरस्य औकारस्य शीत्ययमादेशो भवति । शकारः शीस्योरिति विशेषणार्थः । आदेप् । दये । जसि स्वेको दीः । दयाः । किसंबोधने-"एहो।झल्येत्" "टि चापः" इति च प्रस्तुत्य-

२२० । कौ । ५।२ । १०८ । आबंतस्य गोरेप् भवति कौ

१ । अस्य स्थाने 'अजाद्यतष्टाप् । ३ । १ । ४ । इति सूत्रं ।
२ अस्मिन् सूत्रे "हल्ङ्यापो" इति पाठो महावृत्तौ ।
३ । अत्र "ओत. स्थाने औडो वर्तते महावृत्तौ

परतः । केरङः इति केश्च स्वं । हे दये । हे दये । हे दयाः । पूर्वोऽमीति पूर्वत्वं । दयां । दये । शसीति दीत्वं । दयाः । '

२२१ । टि चापः । ५ । २ । १०७ । टा सुपि ओसि च परतः गोराबंतस्य एत्वं भवति । इति एत्वमयादेशः । दयया । हलादावविशेषः । दयाभ्यां । दयाभिः । ङित्सु वचनेषु सोर्डोति वर्तमाने-

२२२ । याडापः । ५ । २ । ११७ । आबंतस्य गोर्निमित्तभूतस्य ङितः सुपो याडागमो भवति स च टिदादिरिति परस्यादौ भवति । टकार आदेशविध्यर्थः । एच्यैप् । दयायै । दयाभ्यां । दयाभ्यः । दयायाः । दयाभ्यां । दयाभ्यः । दयायाः । "टि चापः" इति एत्वमयादेशः । दययोः । आमि म्रेल्भ्यामित्यादिना नुट् । दयानां । दयायां । दययोः । दयासु । एव शालामालाशुक्लादयो नेयाः । जराशब्दस्याजादौ विशेषः । अन्यत्र दयाशब्दवत् । "रोच्चुः" "वास्येङ्र्योटीति" च वर्तमाने-

२२३ । जराया ङस्१ । ५ । १ । १७३ । जराशब्दस्य गोर्निमित्तभूतेऽजादौ सुपि परतो वा ङसादेशो भवति । ङकारोऽत्यविध्यर्थः । जरा । जरसौ, जरे । जरसः, जराः । हे जरे । हे जरे, हे जरसे । हे जराः, हे जरसः । जरसं, जरां । जरसौ, जरे । जरसः, जराः । जरसा, जरया । जराभ्यां । जराभिः । जरसे, जरायै । जराभ्यां । जराभ्यः । जरसः,

---

१ । अस्य स्थाने "जराया वाऽसङ् । ५ । १ । १६० । इति सूत्रं

जरायाः । जराभ्यां । जराभ्यः । जरसः, जरायाः । जरसोः, जरयोः । जरसां, जराणां । जरसि, जरायां । जरसोः, जरयोः । जरासु । सर्वादेरपि टापि कृते दयाशब्दवदन्यत्राम्ङितः । सर्वा । सर्वे । सर्वाः । हे सर्वे । हे सर्वे । हे सर्वाः । सर्वाम् । सर्वे । सर्वाः । सर्वया । सर्वाभ्यां । सर्वाभिः । ङित्सु—"सोर्ङि" "याडाप." इति च प्रस्तुत्य—

२२४ । [1]स्नेः स्याट् प्रश्च । ५ । २ । ११८ । स्निसंज्ञकादाबंतात् उत्तरस्य ङितः स्याडागमो भवति प्रादेशश्च पूर्वस्यापः । सर्वस्यै । सर्वाभ्यां । सर्वाभ्यः । सर्वस्याः । सर्वाभ्यां । सर्वाभ्यः । सर्वस्याः । सर्वयोः । आमि । "आम्यास्नेः सुडिति सुट् । सर्वासां । सर्वस्यां । सर्वयोः । सर्वासु । एवं विश्वादीनामुभयशब्दवर्जितानां उत्तरशब्दपर्यंतानां रूपं नेयं । त्यदादीनां तु स्यादौ त्यदाद्यत्वे पररूपत्वे टापि च कृते सर्वाशब्दवत् योज्यं । स्या । स्ये । स्याः । इत्यादि । सा । ते । ताः । इत्यादि । अदसः पूर्ववदौत्वादिनिपातनं । असौ । अन्यत्र त्यदादित्वादत्वे कृते सर्वाशब्दवत् । अमू । अमूः । हे असौ । हे अमू । हे अमूः । अमूं । अमू । अमूः । अमुया । अमूभ्यां । अमूभिः । अमुष्यै । अमूभ्यां । अमूभ्यः । अमुष्याः । अमूभ्यां । अमूभ्यः । अमुष्याः । अमुयोः । अमूषां । अमुष्यां । अमुयोः । अमूषु । इदमः स्यादयः । सौ— "इदमो मः" इति मकारस्य मकारादेशः ।

---

[1] । अत्र स्नेः स्थाने सर्वनाम्नः इति । तुल्यमन्यत् ।

२२५। यः सौ । ५ । १ । १८४। इदमो दकारस्य यकारादेशो भवति सौ परतः । इयम् । एवमन्यत्र त्यदाद्यत्वे मत्वे च कृते टाप् । इमे । इमाः । हे इयं । हे इमे । हे इमाः। इमां । इमे । इमाः । अनया । आभ्यां । आभिः । अस्यै । आभ्यां । आभ्यः । अस्याः । आभ्यां । आभ्यः । अस्याः । अनयोः । आसां । अस्यां । अनयोः । आसु । एतदः । एषा । एते । एताः । हे एषे । हे एते । हे एताः इत्यादि । एकस्य-एका । एके । एकाः । इत्यादि । द्विशब्दस्य-द्वे । द्वे । द्वाभ्याम् । द्वाभ्यां । द्वाभ्यां । द्वयोः । द्वयोः । किमः कादेशे कृते टाप् । का । के । काः । हे के । इत्यादि । प्रथमादीनां दयाशब्दवत् रूपसिद्धिः । प्रथमा । प्रथमे । प्रथमाः । इत्यादि । तीयत्यांतस्य विशु "तीयो ङितीति विकल्पेन सर्वादित्वाद् तत्रैव भेदोऽन्यत्र दयाशब्दवत् । द्वितीयस्यै, द्वितीयायै । द्वितीयस्याः, द्वितीयायाः । द्वितीयस्याः, द्वितीयायाः । द्वितीयस्यां, द्वितीयायां । एवं तृतीय शब्दः । इकारांतः स्त्रीलिंगो मतिशब्दः । ततः स्वादयः । सुटि मुनिशब्दवत् । मतिः । मती । मतयः । हे मते । हे मती। हे मतयः । मतिं । मती । मतीः । अस्त्रियामिति प्रतिषेधान्न नाभावः । मत्या । मतिभ्यां । मतिभिः । "य्वौ स्त्र्याख्यौ मुः" । वेति च प्रस्तुत्य—

२२६। ङिति प्रश्च ।१।२। १०८। य्वोर्यः प्रः स्त्र्याख्यः इयुवोश्च स्थानिनौ यौ य्वौ स्त्र्याख्यौ तेषां मुसंज्ञा वा भवति ङिति परतः । "सोर्ङीति" च प्रस्तुत्य—

२२७। अरमोः। ५।२।११६। म्वंतात्परस्य ङितः सुपो अडागमो भवति स च टिदादिः। अटश्चेति एच्यैप् यणादेशश्च। मत्यै। मुसंज्ञाविरहपक्षे सुसंज्ञायां मुनिशब्दवत्। मतये। मतिभ्यां। मतिभ्यः। मत्याः, मतेः। मतिभ्यां। मतिभ्यः। मत्याः, मतेः। मत्योः। मतीनां। मत्यां, मतौ। मत्योः। मतिषु। एवं शुचिरुचिकृतियुवतिहानिप्रभृतयः। विंशत्यादयः संख्यायामेवोपाददते संख्येयेषु च स्वलिंगं स्त्रीत्वमेकत्वे चोपादायैव वर्तंते तस्मादेकवचनांता एव। विंशतिः। विंशतिं। विंशत्या। विंशत्यै, विंशतये। विंशत्याः, विंशतेः। विंशत्यां, विंशतौ। विंशतेर्द्वित्वबहुत्वाभिधित्सायां द्विवचनबहुवचनेऽपि भवतः। एवं षष्टिसप्तत्यशीतिनवतयोऽपि शब्दाः। त्रिशब्दस्य विशेषः।

२२८। त्रिचतुरः स्त्रियां तिसृचतसृ। ५। १। १७। त्रिचतुरित्येतयोः स्त्रीलिंगेऽर्थे वर्तमानयोः यथासंख्यं तिसृ चतसृ इत्येतावादेशौ भवतः सुपि परतः।

२२९। रोऽचि। ५१। १७२। तिसृ चतसृ इत्येतयोः ऋकारस्य रेफादेशो भवति अजादौ सुपि परतः। तिस्रः तिष्ठंति। तिस्रः पश्य। तिसृभिः। तिसृभ्यः। तिसृभ्यः। "नाम्यतिसृचतसृ" इति प्रतिषेधाद्दीत्वं न भवति। तिसृणां। तिसृषु॥ ईकारांतः स्त्रीलिंगो लक्ष्मीशब्दः लक्षन् दर्शनांकनयोः। ततो "लक्षेर्मुट् चेति ईकारस्त्यो मुट् चागमः। ततः स्वादयः। नायं ईकारो ङीत्य इति सुखं न भवति। लक्ष्मीः। लक्ष्म्यौ। लक्ष्म्यः।

२३०।य्वौ स्त्र्याख्यौ नुः।१।२।१०४। यौ ईकारोकारौ स्त्रियमाचक्षाणौ तौ नुसंज्ञौ भवतः । इति नुसंज्ञायां-"कौ" प्रोऽम्बार्थयचः इति प्रस्तुत्य—

२३१।[1]न्मोः।५।२।११०।न्वंतस्य प्रादेशो भवति कौ परतः। मादिति केः सम्। हे लक्ष्मि। हे लक्ष्म्यौ। हे लक्ष्म्यः। लक्ष्मी। लक्ष्म्यौ। लक्ष्मीः। लक्ष्म्या। लक्ष्मीभ्यां। लक्ष्मीभिः। ङित्सु नुसंज्ञायां-लक्ष्म्यै। लक्ष्मीभ्यां। लक्ष्मीभ्यः। लक्ष्म्याः। लक्ष्मीभ्यां। लक्ष्मीभ्यः। लक्ष्म्याः। लक्ष्म्योः। प्रेल्म्यादिना नुट्। लक्ष्मीणां। लक्ष्म्यां। लक्ष्म्योः। लक्ष्मीषु। एवं तंत्रीप्रभृतयः। उभयट् टकारः स्त्रियां ङ्यर्थः। उभय इति स्थितेङ्नूटिड्ढाणञठणूठ इति टित्त्वादतो ङीः। ङकारो हलृङ्याब्भ्यः इति विशेषणार्थः। टित्वं। ऐरिति चानुवर्तमाने—

२३२।[2]ङ्याम्।४।४।१५१। मोरवर्णांतस्य इवर्णांतस्य भस्य खं भवति ङीत्ये परतः। ततः स्वादयः। उभयी। उभय्यौ। उभय्यः। हे उभयि। हे उभय्यौ। हे उभय्यः। उभयीं। उभय्यौ। उभयीः। उभय्या। उभयीभ्यां। उभयीभिः। उभय्यै। उभयीभ्यां। उभयीभ्यः। उभय्याः। उभयीभ्यां। उभयीभ्यः। उभय्याः। उभय्योः। उभयीनां। उभय्यां। उभय्योः। उभयीषु। कर्तृशब्दस्य भेदः। "ङ्याम्भृदः" स्त्रियामिति चाधिकृत्य—

---

१। अस्य स्थाने-"प्रोम्बार्थम्बोः।५।२।१०२। इति।
२। अस्य स्थाने-यस्य ङ्यां च"।४।४।१३४। इति।

२३३। [1]ङ्युगिदृन्नञ्चोः। ३। १। ५। उगिदंताद् ऋकारांतान्नकारांतादंचुत्यांताच्च मृदः स्त्रियां वर्तमानाद् ङीत्यो भवति। यणादेशः। ततः स्वादयः। कर्त्री। कर्त्र्यौ। कर्त्र्यः। हे कर्त्रि। इत्यादि उभयीशब्दवन्नेयं। एवं मातृप्रभृतयः। भवतु इति स्थिते उकार उगित्कार्यार्थः। ङ्युगिदृन्नञ्चोरिति ङीः। ततः स्वादयः। भवती। भवत्यौ। भवत्यः इत्यादि उभयीशब्दवत्। या प्रापणे। या इति स्थिते धुसंज्ञायां "त्यः" "परः" धोः" लडिति च प्रस्तुत्य–

२३४। [2]सति। २।२।११६। सति भवति वर्तमाने काले धोः परो लडित्ययं त्यो भवति। टकारः "टिद्टेरेः"इति विशेषणार्थः। अकार उच्चारणार्थः। "लटोऽवानितौ शतृशानाविति वर्तमाने–

२३५। [3]सल्लटः। २।२।११७। सति काले यो लट् तस्य स्थाने शतृशानावित्येतावादेशौ भवतः। शकारो मिङ्शिद्व इति विशेषणार्थः। ऋकार उगिद्कार्यार्थः। गे यगित्यनुवर्तमाने–

२३६। कर्तरि शप्। २। १। ८१। कर्तृवाचिनि गे परतः शबित्ययं त्यो भवति। विकरणत्वान्मध्ये भवति। शकारः "एचोऽश्या"इति विशेषणार्थः। पकारो गोऽपिदिति विशेषणार्थः।

---

१। अस्य स्थाने उगिदृन्नान्ङीः। ३। १। ६ इति

२। अस्य स्थाने "संप्रति। २। २। १०१। इति सूत्रं।

३। अस्य स्थाने "तस्य शतृशानाववैकार्थे। २।२। १०२॥ इति।

२३७ । ह्वादेरुजुप्[1] । ह्वादिभ्योऽदादिभ्यश्च परस्य कर्तरि यथासंख्यं उज् उप् इत्येतावादेशौ भवतः । इति शप उप् । यात् इत्यस्मादुगित्वान्ङीः । "इद्धोर्नुम्" "विदेः शतुर्वसुः" "वा नपः" इति च वर्तमाने—

२३८। शीम्वोरात् । ५।१।६२ । गोरवर्णान्तात्परस्य शतुर्वा नुमागमो भवति शीम्वो परतः । मकार आदेशविपर्ययः । उकार उच्चारणार्थः । नुम्कोऽमित्यनुवर्तमाने नश्चापदान्ते झलीत्यनुस्वारः । "यय्यं परस्वमिति परस्वं । ततः स्वादयः । यांती । यांत्यौ । यांत्यः । हे यांति । हे यांत्यौ । हे यांत्यः । इत्यादि । नुमभावपक्षे-याती । यात्यौ । यात्यः । हे याति । हे यात्यौ । हे यात्यः । इत्यादि । भू सत्तायां । धुसंज्ञायां पूर्ववच्छटः शत्रादेशे शपि च शिति गागयोरिति पबादेशः । पररूपं । भवदित्येतस्मादुगित्वान्ङीः ।

२३९ । शप्श्यात्[2] । ५ । १ । ६३ । शबंताद् गोः श्यांताच्च परस्य शतुर्नित्यं नुम् भवति शीम्वोः परतः । पूर्ववदितो निवृत्तिः । ततः स्वादयः । भवंती । भवंत्यौ । भवंत्यः । हे भवंति । इत्यादि । दिवु क्रीडाजयेच्छापणद्युतिगतिषु । दिव् उकारो बोदित इति विशेषणार्थः । धुत्वे लटः शत्रादेशे च सति—

---

१ । अस्य स्थाने "शनोऽद्यादिभ्य । १ । ४ । १८३ । "ह्नुङ्-दो यादिभ्यः । १ । ४ । १८४ । इति सूत्रे ।

२ । अस्य स्थाने "श्यशपः । ५ । १ । ५३ । इति सूत्रं ।

२४०। दिवादेः श्यः । २ । १ । ८३ । दिवादिभ्यो धुभ्यः कर्तृवाचिनि गे परतः श्य इत्ययं त्यो मध्ये भवति । दीवोरिगुडः इति च वर्तमाने—

२४१।हल्यमकुर्छुरः । ५।३। ११४ । हलि परौ यौ रेफव कारौ तदंतस्य भ कुर् छुर् वर्जितस्य धोरिगुडो दीर्भवति । इति दीत्वे दीव्यदिस्युगित्त्वात् ङीः । शप्श्यादिति नुम् । ततः स्वादयः । दीव्यंती । दीव्यंत्यौ । दीव्यंत्यः । हे दीव्यंति । इत्यादि नेयं । स्त्रीशब्दस्य स्त्रिणातेरिः । स्त्यायतेर्वा ड्रिप् । ङीश्चेति उणादिषु निष्पन्नस्य विशेषः । ततः स्वादयः । स्त्रीतिनिर्देशात्सोःखं । स्त्री । "हल्श्नुधुभ्रुवो ऽचीयुव्योः" इति वर्तमाने—

२४२ । स्त्रियाः । ४ । ४ ।७७ । स्त्रीशब्दसंबंधिन. इवर्णस्य गोनिमित्तभूते ऽजादौ इयादेशो भवति । स्त्रियौ । स्त्रियः । संबोधने स्त्रीति मुसंज्ञायां मोः प्रादेशः । प्रादिति केः खं । हे स्त्रि । हे स्त्रियौ । हे स्त्रियः ।

२४३ । वाऽम्शसोः । ४ । ४ । ७८ । स्त्रीशब्दस्येवर्णस्य अम्शसोरियादेशो वा भवति । स्त्रीं । स्त्रियं । स्त्रियौ । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रीभ्यां । स्त्रीभिः । स्त्रियै । स्त्रीभ्यां । स्त्रीभ्यः । स्त्रियाः । स्त्रीभ्यां । स्त्रीभ्य. । स्त्रियाः । स्त्रियो. । आमीयुवोः वेति च नियमे विकल्पे च प्राप्ते सति स्त्रीति मुसंज्ञायां प्रेम्वादिना नुट् । स्त्रीणां । स्त्रिया । स्त्रियोः । स्त्रीषु । अनड्वाह् ।

अनडुह् इति गौरादिषु उभयथा पाठात् ङीप्यः । ततः स्वादयः । अनड्वाही । अनड्वाह्यौ । अनड्वाह्यः । हे अनड्वाहि । इत्यादि। तथा-अनडुही । अनडुह्यौ । अनडुह्यः । हे अनडुहि । इत्यादि ज्ञेयं । श्रीशब्दस्य भेदः । श्रिञ् सेवायां । श्रिञ् ञकारो दर्शिवर्थः। घुसंज्ञायां-क्वचिदिति वर्तमाने–

२४४ । क्विप् । २ । २ । ७३ । क्विप् च क्वचिद् दृश्यते । स च अप्रयोगी प्रतीयते । क्वचिदित्येतस्य बहुलार्थत्वात् क्वचिदन्यथैवेति वचनात् दीर्घत्वम् । श्री इत्यतः स्वादयः । श्रीः । भूतपूर्वगत्या क्व्यंतो घुत्वं न जहाति इति वा घुत्वात् इलदनुधुभ्रुवोऽचीयुव्योरिति अजादौ इयादेशः । श्रियौ । श्रियः । किमंबोधने आमि घुवोरिति नियमात् अनुसंज्ञायां-हे श्रीः । हे श्रियौ । हे श्रियः । श्रियं । श्रियौ । श्रियः । श्रिया । श्रीभ्यां । श्रीभिः । ङिद्वचनेषु — आमि युवो:, वेति च प्रस्तुत्य–

२४५ । ङिति ह्रस्वश्च । १ । २ । १०८ । स्त्र्योर्यः स्त्र्याख्यो यौ च य्वाविघुवोः इयानिनौ स्त्र्याख्यौ तेषां तत्संबंधिनि अन्यसंबंधिनि वा ङिति वा नुसंज्ञा भवति । इति नुसंज्ञायां अडागमोऽन्यत्र इयादेशः । श्रियै । श्रिये । श्रीभ्यां । श्रीभ्यः। श्रियाः । श्रियः । श्रीभ्यां । श्रीभ्यः । श्रियाः । श्रियः । श्रियोः । "आमि घुवोरिति" वर्तमाने–

२४६ । वा । १ । २ । १०७ । यानिघुवोः इयानिनौ स्त्र्यौ स्त्र्याख्यौ तौ आमि वा नुसंज्ञौ भवतः । श्रीणां । श्रियाम् । श्रियि ।

श्रियोः । श्रीषु । एवं ह्रीप्रभृतयः । उकारान्तः स्त्रीलिंगस्तनु शब्दः । शरीरवाची स्त्रीलिंगः । स्तोकार्थस्तु त्रिलिंगः । तस्य मतिशब्दवत् प्रक्रिया । तनुः । तनू । तनवः । हे तनो । हे तनु । हे तनवः । तनुं । तनू । तनूः । तन्वा । तनुभ्यां । तनुभिः । तन्वै । तनवे । तनुभ्यां । तनुभ्यः । तन्वाः । तनोः । तनुभ्यां । तनुभ्यः । तन्वा. । तनोः । तन्वोः । तनूनां । तन्वां । तनौ । तन्वोः । तनुषु । एवं हनुकाकुस्नायुधेनुप्रभृतयः । ऊकारांतः स्त्रीलिंगो वधूशब्दः । स च लक्ष्मीशब्दवज्ज्ञेयः । वधूः । वध्वौ । वध्वः । हे वधु । हे वध्वौ । हे वध्वः । वधूं । वध्वौ । वधूः । वध्वा । वधूभ्यां । वधूभिः । वध्वै । वधूभ्यां । वधूभ्यः । वध्वाः । वधूभ्यां । वधूभ्यः । वध्वाः । वध्वोः । वधूनां । वध्वां । वध्वो. । वधूषु । एवं चमूजम्बूयवागूप्रभृतयः । भ्रूशब्दस्य तु भेदः । भ्रमु चलने । उकारो "वोदितः" इति विशेषणार्थः । भ्रमेश्च डूरिति डूः । डित्वाट्टेः खं । ततः सादयः । भ्रू इति स्थिते श्रीशब्दवत्प्रक्रिया । भ्रूः । भ्रुवौ । भ्रुवः । हे भ्रूरित्यादि नेयं । एवं स्वयंभूप्रभृतयः । दृन्भू शब्दस्य तु भेदः । दृन्भवतीति विगृह्य "क्वचित्" इति क्विप् । वाक्सविधिः । दृन्हभू इति स्थिते—

२४७ । दृन्हः । ४ । ४ । १२६ । क्विबंतवाचो हकारस्य स्फांतस्य खं । तत स्वादयः । दृन्भूः । अजादौ सुपि—

२४८ । दृन्करपुनर्वर्षाभ्योम्वः । ४ । ४ । ८४ । दृन् कर पुनर् वर्षा इत्येतेभ्य एव परस्य भू इत्येतस्य क्विबंतस्य

३ । अस्य स्थाने दृन्कारपुनर्वर्षाभ्योऽभुवः । ४ । ४ । ७५ इति सूत्र ।

सुप्यजादौ यणादेशः। द्रुम्वौ । द्रुम्वः । हे द्रुम्वोरित्यादि । एवं करभूकारभूपुनर्भूवर्षाभूशब्दाः । ऋकारांतः स्त्रीलिंगो मातृशब्दः। स च पितृशब्दवज्ज्ञेयः शसि नत्वं वर्जयित्वा । माता । मातरौ । मातरः । हे मातः । हे मातरौ । हे मातरः । इत्यादि । एवं स्वसृदुहितृप्रभृतयः । ॠकारांतः प्रियगृशब्दः स च पुलिंगवज्ज्ञेयः । लृकारांतो ऌकारांतश्चाप्रसिद्धः । एकारांतो ऽतिहे शब्द स च पूर्ववज्ज्ञेयः । ओकारांतः स्त्रीलिंगो गोशब्दः । सोऽपि पूर्ववत् । ऐकारांतः सुरैशब्दः स च शोभनो राः यस्याः सा सुरा. । सुरायौ । सुरायः । इत्यादि रैशब्दवज्ज्ञेयः । औकारांतो नौशब्द । तस्य ग्लौ शब्दवत्प्रतीतिः ।

इति अजंताः स्त्रीलिंगाः ।

---

## अथाजंताः नपुंसकलिंगाः ।

अकारांतो नपुंसकलिंगो दानशब्दः । ततः स्वादयः । नपः स्वमोरिसुपि प्राप्ते–

२४९ । अनोऽम् ।५।१।२३। अकारांतस्य नपुंसकलिंगस्य गोर्निमित्तभूतयोः स्वमोरमादेशो भवति । पूर्वो ऽमीति अकारस्य पूर्वत्वं । "जसः शी" "आप औतः" इति च प्रस्तुत्य–

२५० । नपः ।२।१।१९। नपुंसकलिंगस्य गोर्निमित्तभूतस्य औकारस्य शीभावो भवति । आदेप् । दाने । "नपः" इति वर्तमाने—

२५१। जस्शसोः। ५। १। १७। नपुंसकलिंगात् परयोः जस्शसोः शिरित्ययमादेशो भवति। "ग्सानेऽन्तेऽलः" इति प्राप्ते–शित्सर्वस्य भवति। "इदिद्वोर्नुम्" "उगिदचां घेऽम्वादेः" इति च प्रस्तुत्य—

२५२। नपोऽचः[1]। ५। १। ५३। नपुंसकलिंगस्य गोरजंतस्य नुमागमो भवति घे परतः। उकार उच्चारणार्थः। मकार आदेशविध्यर्थः। "नोङः" इति वर्तमाने–

२५३। घेऽकौ। ४। ४। ६४। किवर्जिते घे परतो नोङो दीर्घो भवति। दानानि। किंसंबोधने पूर्ववदमि सति "केरेङ"–

२५४। प्रात्। ४। ३। ६५। केरनचः प्रात्परस्य खं भवति। इति मकारस्य खं। एकदेशविकृतस्यानन्यत्वात् अनः पूर्वत्वं। द्विबह्वोः पूर्ववत्। हे दान। हे दाने। हे दानानि। इप्यप्येवं रूपाणि। दानं। दाने। दानानि। शेष. पुंवन्नेयः। दानेन। दानाभ्यां। दानैः। दानाय। दानाभ्यां। दानेभ्यः। दानात्। दानाभ्यां। दानेभ्यः। दानस्य। दानयोः। दानानां। दाने। दानयोः। दानेषु। एवं शुक्लवस्त्रवदननयनादयः। सर्वादयोऽप्येवं नेतव्याः। अन्यादीनां पुनः पंचानां भेदोऽस्ति। अन्य इत्यतः स्वादयः—

२५५। [2]पंचतोऽनैकतरस्यान्यादेर्डुक्। ५। १। २४। नपुंसकलिंगानां अन्यादीनां पंचानां एकतरवर्जितानां डुगागमो

१। अस्य स्थाने–नपोऽज्झल। ५। १। ५१। इति सूत्रं।
२। अस्य स्थाने–डतरादेः पंचकस्य डुक्। ५। १। २२। इति।

भवति स्वमोः परतः । उकार उच्चारणार्थः । ककार आदेशवि-ध्यर्थः । "झलो जश् झशि" इति "चर्सेरि" इति च वर्तमाने—

२५६ । [1]वांऽते । ५ । ४ । १५४ । अंतेऽवसाने विरामे वर्तमानानां झलां वा चर्भवति । अचच इति द्वित्वं । अन्यत् । अन्यत् । अन्यद् । अन्यद्द् । अन्ये । अन्यानि । हे अन्यद्द् हे अन्यद् । हे अन्यत्त् । हे अन्यत् । हे अन्ये । हे अन्यानि । पुनरपि-अन्यत् । अन्यत् । अन्यद् । अन्यद्द् । अन्ये । अन्यानि । पुंलिंगवद् यथा । एवं अन्यतरेतरकतमादयः । अनेकतरस्येति किं ? एकतरं । एकतरे । एकतराणि । इत्यादि । त्यदादीनां तु स्वमोर्विशेषोऽस्ति । त्यद् इत्यतः स्वादयः । त्यदाद्यत्वात् प्रागेव नित्यत्वात्—

२५७ । नपः स्वमोः । ५ । १ । २० । नपुंसकलिंगात्परयोः स्वमोरुब्भवति । त्यत्वे त्याश्रयमिति पुनरत्वे प्राप्ते—

२५८ । नोमता गोः । १ । १ । ७१ । उमता वचनेन लुप्तत्वमाश्रित्य यत् कार्यं प्राप्तं गोरधिकारे तन्न भवति । पूर्ववच्चर्त्वं द्वित्वं च । त्यत् । त्यत् । त्यद् । त्यद्द् । त्ये । त्यानि । इत्यादि । तत् । तत् । तद् । तद्द् । ते । तानि । इत्यादि । यत् । यत् । यद्द् । यद् । ये । यानि । इत्यादि । अदसः सोरुप् । नोमता गोरिति प्रतिषेधात् असाविति निपातनं न भवति । रित्वविसर्जनीयौ । अदः । अन्यत्र त्यदाद्यत्वादि कार्यं कृत्वा पश्चादुत्वमत्वे । अमू । अमूनि । हे अदः । इत्यादि । इदम्-इदं । इमे ।

---

[1] अस्य स्थाने-"विरामे वा । ५ । ४ । १३१ । इति सूत्रं ।

इमानि। एतदः—एतत्। एतत्। एतद्। एतद्द्। एते। एतानि। इत्यादि। एकशब्दस्य-एकम्। एके। एकानि। द्विशब्दस्य-द्वे। द्वे। इत्यादि। किमः-किं। के। कानि। इत्यादि। आकारांतो नपुंसकलिंगो क्षीरपाशब्दः—

२५९। प्रो नपि। १। १। १०। नपुंसकलिंगे वर्तमानस्य मृदः प्रो भवति। इति प्रादेशे कृते दानशब्दवज्ज्ञेयः। क्षीरप। क्षीरपे। क्षीरपाणि। इत्यादि। केचिच्चतुर्थ्येकवचने क्षीरपायेत्यत्र आतो नाप इत्यातः खे क्षीरपे इति भवतीति मन्यते। तदन्ये सन्निपातपरिभाषया न भवतीत्याहुः। एवं सोमपा अम्बुपादयः। इकारांतो नपुंसकलिंगो वारिशब्दः। ततः स्वादयः। नपः स्वमोरित्युप्। वारि। औकारयोः। "आप औतः" इति वर्तमाने "नपः", इति शीः। "इदिद्धोर्नुम्" इत्यधिकृत्य—

२६०। सुपीकोऽचि। ५। १। ५६। गोरिगंतस्य नपुंसकलिंगस्य नुमागमो भवत्यजादौ सुपि परतः। पूर्ववदितो निवृत्तिर्णत्वं। वारिणी। जस्शसोः शिर्नुम्। दीत्वं। णत्वं च। वारीणि। किंसंबोधने "नपः स्वमोः" "अरसो वा" इति च मस्तुत्य-

२६१। इकश्खम्। ५। १। २२। गोरिगंतात् नपुंसकलिंगात्परयोः स्वमोर्वा खं भवति। पक्षे—उप्च। शित्करणं अमः सर्वादेशार्थं। यदा खं तदा प्रत्ययेप् काविल्येप् भवति, नोपि। नोमता गोरिति निषेधात्—हेवारे। हे वारि। हे वारिणी। हे वारीणि। पुनरपि-वारि। वारिणी। वारीणि। वारिणा। वारिभ्यां। वारिभिः। वारिणे। वारिभ्यां। वारिभ्यः। वारिण.।

वारिभ्यां । वारिभ्यः । वारिणः । वारिणोः । आमि-ह्रस्वनद्यापो नुट् चतुरो नुडिति नुड् । नामि-सुप्तिङंतं पदमित्यधिकृत्य-

२६२ । स्वादावघे । १ । २ । ११८ । घवर्जिते स्वादौ पूर्वं पदसंज्ञं भवति । पदस्येत्यधिकृत्य नो मृदन्ते समिति नल्लुक् । ततो नाम्यतिसृचतसृ इति दीर्घत्वेन सस्यासिद्धत्वात् -

२६३ । नोडः । ४।४ ।१। नकारांतस्य गोरुडो दीर्घो भवति नामि परतः । इत्युक्तो दीर्घत्वं । वारीणां । वारिणि । वारिणोः । वारिषु । एवं सक्थ्यस्थिदध्यक्षिशब्दानां रूपसिद्धिः । टादावजादौ तु विशेषः । मादाविति वर्तमाने—

२६४ । [1]सक्थ्यस्थिदध्यक्ष्णोऽनङ् । ५ । १ । ५८ । सक्थि अस्थि दधि अक्षि इत्येतेषामिगंतानां नपुंसकलिंगानां अनङादेशो भवति मादावजादौ परतः । ङकारोंऽत्यादेशार्थः । नकारेऽकार उच्चारणार्थः । मस्येत्यधिकृत्य—

२६५ । अनो ग्वमन्वस्फात् । ४ । ४ । १३४ । मसंज्ञकावयवस्य अनित्येतस्याकारस्य ख भवति न चेत् मोऽन्शब्दो मकारवकारांतात् स्फात् परो भवति । सक्थ्ना । सक्थिभ्यां । सक्थिभिः । सक्थ्ने । सक्थिभ्यां । सक्थिभ्यः । सक्थ्नः । सक्थिभ्यां । सक्थिभ्यः । सक्थ्नः । सक्थ्नोः । सक्थ्नाम् । मस्य अनोखमन्वस्फादित्यधिकृत्य—

२६६ । वा ङिश्योः । ४ । ४ । १३६ । मसंज्ञावयवस्यानि-

[1] । अस्य स्थाने सक्थ्यस्थिदध्यक्ष्णामनङ । ५ । १ । ५४ । इति ।

स्येतस्य अकारस्य सं भवति वा ङि ङौ ।शिशब्दे च परतः न चेत्सोऽन् शब्दो स्वस्फाद् परो भवति । सक्थ्नि । सक्थनि । सक्थ्नोः । सक्थिषु । एवं अस्थिदध्यक्ष्णामपि रूपं नेयं । त्रिशब्दस्य,जस्शसोः शिः । नुम् । णत्वं दीर्घं च । त्रीणि । त्रीणि । पुंवदन्यत्र । शुचिशब्दस्य वेपोर्वारिशब्दवत् । शुचि । शुचिनी । शुचीनि । इत्यादि । टादावजादौ ॥ ।

२६७। भादौ वोक्तपुस्कं पुंवद् । ५ । १ । ५७ । भादौ अजादौ उक्तपुस्कं नपुंसकलिंगं वा पुंवद् भवति । पुंभावस्य नुम्मादेशयोरभावः प्रयोजनं । तत्र मुनिशब्दवदितरत्र वारिशब्दवत् । शुचिना । शुचिभ्यां । शुचिभिः । शुचये, शुचिने । शुचिभ्यां । शुचिभ्यः । शुचेः, शुचिनः । शुचिभ्या शुचिभ्यः । शुचेः, शुचिनः । शुचिनोः, शुच्योः । शुचीनां । शुचौ, शुचिनि । शुच्योः, शुचिनोः । शुचिषु । एवं सखिपत्यादयः । ईकारांतो ग्रामणीशब्दः । तस्य "ग्रो नपि" इति प्रादेशः । ततः स्वादयः । ग्रामणि । ग्रामणिनी । ग्रामणीनि । हे ग्रामणि । हे ग्रामणिनी । हे ग्रामणीनि । इत्यादि शुचिशब्दवत् । एवं नी उन्नीत्यादयः । उकारांतास्त्रिपुशब्दः । ततः स्वादयः । त्रपु । त्रपुणी । त्रपूणि । हे त्रपो । हे त्रपु । इत्यादि वारिशब्दवत् । जतुमृदुलघुप्रभृतीनां शुचिशब्दवत् नीतिः । ऊकारांतः खलपूशब्दः । तस्यापि प्रादेशे खलपु । खलपुनी । खलपूनि । हे खलपो । हे खलपु । हे खलपू इत्यादि ग्रामणीशब्दवत् । एवं लूलूप्रभृतयः । ऋकारांतः कर्तृशब्दः । कर्तृ । कर्तृणी । कर्तॄणि ।

हे कर्तः । हे कर्तृ इत्यादि नेयं । एवं मातृप्रभृतयः आमर्णी शब्दवत् । ऋकारांत प्रियगृशब्द. तस्यापि प्रादेशे. प्रियगृ । प्रियगृणी । प्रियगृणि । हे प्रियगृ । हे प्रियग इत्यादि कर्तृशब्दवत् । लृकारांतलॄकारांतावप्रसिद्धौ । एकारांतो अतिहेशब्दः । तस्यापि प्रादेशे- अतिहि । अतिहिनी । अतिहीनि । हे अति हे । हे अतिहि । इत्यादि शुचिशब्दवत् । ओकारान्त उपगोशब्दः। तस्यापि प्रादेशः। उपगु । उपगुनी। उपगूनि । हे उपगो, हे उपगु । इत्यादि जतुशब्दवत् । ऐकारांतोऽतिरैशब्दः । तस्यापि प्रादेशे- अतिरि । अतिरिणी । अतिरीणि । पुनरपि अतिरि । अतिरिणी । अतिरीणि । अतिरिणा, अतिराया । एकदेशविकृतस्यानन्यत्वात् रायःस्मिरिति आत्वं । अतिराभ्यां । अतिराभिः । अतिरिणे, अतिराये । अतिराभ्यां । अतिराभ्यः । अतिरिणः, अतिरायः । अतिराभ्यां । अतिराभ्यः । अतिरिणः, अतिरायः । अतिरिणोः, अतिरायोः । अतिरिणां । अतिरिणि, अतिरायां । अतिरिणोः, अतिरायोः । अतिरासु । इत्यादि शुचिशब्दवत् । औकारांतोऽतिनौशब्दः । तस्यापि प्रादेशे-- अतिनु । अतिनुनी । अतिनूनि । इत्यादि मृदुशब्दवत् ।

इत्यजंताः नपुंसकलिंगाः ।

---

**अथ हलंताः पुंलिंगाः ।**

दुहीन् रक्षणे । नकारो दविपर्ययः । औकारोऽनिदर्थः । गां दोग्धीति विगृह्य क्वचित् क्विप् । स च सर्वोऽप्रयोगात् ।

वाक्स । सुधुग्व । गोदुह् इति स्थिते-ततः स्वादयः । सोः खं । हो ढ इति ढत्वे प्राप्ते तदपवादः ।

२६८। दादेर्घः । ५ । ३ । ६७ । दकारादेर्धोरवयवस्य हकारस्य घकारादेशो भवति पदान्ते झलि परतः ।

२६९। एकाचो बशो भष् झषः स्ध्वोः।४।३।७३। झषन्तस्यैकाच्शब्दरूपस्य योऽवयवो बश् तस्य भष् भवति सकारे ध्वशब्दे पदान्ते च । इति दकारस्य भत्वं । जश्त्वं चर्त्वं। पक्षे द्वित्वं च । गोधुग् । गोधुक् । गोधुग्ग् । गोधुक्क् । संहितैवान्यत्र । गोदुहौ । गोदुहः । हे गोधुक् । हे गोधुक्क् । हे गोधुग् हे गोधुग्ग् । हे गोदुहौ । हे गोदुहः । गोदुहम् । गोदुहौ । गोदुहः । गोदुहा । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहे । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहः । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहः । गोदुहोः । गोदुहाम् । गोदुहि । गोदुहोः । गोधुक्षु । एवं दण्डदुह् रत्नदुह् कोशदुह् इत्येवमादयः । श्वलिह्शब्दस्य भेदः । लिहौम् आस्वादने । पूर्ववदौकारमकारयोः निवृत्तिः । श्वन्शब्दादम् श्वान लेढीति विगृह्य पूर्ववद् क्विप् वाक्सः । सुधुप् च । नो मृदन्ते समिति नखं । श्वलिह् इति स्वादयः ।

२७० । हो ढः । ५ । ३ ।६६। हकारस्य ढकारादेशो भवति पदान्ते झलि च । जश्त्वं चर्त्वं द्वित्वं च । श्वालिट् । श्वलिट्ट् । श्वालिड् । श्वलिड्ड् । श्वलिहौ । श्वलिहः । इत्यादि । एवं मधुलिह् अभ्रलिहादयः । मित्रद्रुह्शब्दस्य भेदः । द्रुहञ् हिंसा-

साम् । "ऊकार ऊदिद्रूः" इति विशेषणार्थः । मित्रशब्दादम् । मित्रं द्रुह्यतीति विगृह्य क्विप् वाक्यः । सुबुप् स्वादयः ।

२७१ । वा द्रुह्मुहष्णुहष्णिहां । ५ । ३ । ६६ । द्रुह् मुहष्णुहष्णिह् इत्येतेषां हकारस्य घकारादेशो वा भवति झलि पदान्ते च । पंच दत्वं । एकाचो बाशीत्यादिना भष्भावः । मित्रध्रिक्त् । मित्रध्रुक् । मित्रध्रुग् । मित्रध्रुट् । मित्रध्रुड् । मित्रध्रुड् । एवं झलि पदान्ते च रूपद्वयं । अजादौ तु सहितैव । एवं मुहष्णिहष्णुह् इत्येते शब्दाः । अनडुह्शब्दस्य भेदः । ततः स्वादयः । "एवे" इत्यधिकृत्य–

२७२ । चतुरनडुहोर्वाः । ५ । १ । ७६ । चतुरनडुहोरन्दन्तस्य च गोरुकारस्य वा इत्ययमादेशो भवति घे परतः ।

२७३ । सावनडुहः । ५ । १ । ६४ । अनडुहो नुमागमो भवति सौ परतः । सोः खं । हकारस्य स्फांतस्य खं । घे ऽका-विति दत्वं । अनड्वान् । अनड्वाहौ । अनड्वाहः । संबोधने–

२७४ । वः कौ । ५ । १ । ८० । चतुरनडुहोरुदन्तस्य च गोरुकारस्य च इत्ययमादेशो भवति कौ परतः । हे अनड्वन् । हे अनड्वाहौ । हे अनड्वाहः । अनड्वाहम् । अनड्वाहौ अनडुहः । अनडुहा । इत्यादौ–

२७५ । वसुस्रंसुध्वंस्वनडुहां दः । ५।३ । १०७ वसु स्रंसु ध्वंसु अनडुह् इत्येतेषां सकारस्य हकारस्य च पदान्तस्य

दकारादेशो भवति। अनडुद्भ्याम्। अनडुद्भिरित्यादि नेयं। यकारान्तोऽभिधेयलिंगः समय्शब्दः। अयौ गतौ। औकारो दार्यः। सम्शब्दात्सुः। ञेरित्युप्। समयते इति विगृह्य "मन्वन्क्वनिप्विचःक्वचित्" इति विच्। स च अप्रयोगी। चकार एवर्थः। इकार उच्चारणार्थः। वकारोऽसमासिद्ध्यर्थः। प्रादिना सह सः। ततः स्वादयः। समय्। समयौ। समयः। हे समय्। हे समयौ। हे समयः। समयम्। समयौ। समयः। समया। व्योः खं वल्कावितिं यखं। समभ्यां। समभिः। इत्यादि नेयं। एवं सुवयादयोऽपि। वकारान्त आश्रयलिंगः सुदिव्शब्दः। शोभना द्यौरस्येति विगृह्य बसः सुदिव्। ततः स्वादयः।

२७६। द्यौः। ४। १। ६५। दिवित्यस्याव्युत्पन्नस्य मृदः सौ औकारो निपात्यते सोश्चारित्वाविसर्जनीयौ। यणादेशः। सुद्यौः। सुदिवौ। सुदिवः। हे सुद्यौः। हे सुदिवौ। हेसुदिवः। सुदिवम्। सुदिवौ। सुदिवः। सुदिवा। हलादौ—

२७७। दिवो हल्युत्। ४। ३। १२४। दिवः पदस्योदादेशो भवति हलादौ परतः। तकारो विकारानिवृत्त्यर्थः। सुद्युभ्याम्। सुद्युभिः। इत्यादि नेयं। रेफान्तश्चतुर्शब्दो वाच्यलिंगो बहुवचनान्तः। जसि "चतुरनडुहोर्वाः" इत्युकारस्य वादेशः। चत्वारः। हे चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः। चतुर्भ्यः। आमि-प्रेस्न्याम् चतुरो नुडिति नुड् णत्वं च। चतुर्णाम्। सुपि रेश्च सुपीति नियमात् सत्वविसर्जनीयौ न भवतः। चतुर्षु।

लकारान्तोऽव्युत्पन्नपक्षेऽप्रसिद्धः । व्युत्पन्नपक्षे तु समयशब्दवत् प्रज्वल्शब्दः । ज्वल दीप्तौ । अकार उच्चारणार्थः । प्रज्वलतीति विगृह्य क्विप् । ततः स्वादयः । प्रज्वल् । प्रज्वलौ । प्रज्वलः । इत्यादि । एवं प्रचलादयः । ञकारान्तः सर्वज्ञ्शब्दः । सर्वं जानातीति सर्वज्ञः । स इवाचरतीति कर्तुः क्विरिति क्विः । सर्वज्ञतीति विगृह्य पुनः क्विप् । "अतः" इत्यखं । पूर्ववदन्यत् । सर्वक् । सर्वग् । सर्वज्ञौ । सर्वज्ञः । इत्यादि । एवमन्येप्यभ्यूह्याः । मकारान्तः प्रशाम्शब्दः । शमु दमु उपशमने । उकारो "वोदित." इति विशेषणार्थः । ध्रुत्वे माादिना सह सः । प्रशाम्यतीति विगृह्य क्विप् ।

२७८ । डस्य [1]झलक्व्योः क्ङिति । ४ । ४ । १२ । ढसंज्ञान्तस्य गोरुङो झलादौ किति ङिति क्वौ च परतः दीर्घभवति । ततोऽस्य क्वित्वात् सुपो ङेरित्युक्तवचनसामर्थ्यात् सुप् ।

२७९ । मो नः । ५ । ३ । १११ । पदान्तस्य धोर्मो नो भवति पदान्ते झलि च परतः । इति नत्वस्यासिद्धत्वात् खं न भवति । प्रशान् । प्रदाम्शब्दस्य-प्रदान् । प्रदामौ । प्रदामः । हे प्रदान् । हे प्रदामौ । हे प्रदामः । प्रदामम् । प्रदामौ । प्रदामः । प्रदामा । प्रदान्भ्याम् । प्रदान्भिः । इत्यादि । तमु कांक्षायामित्यस्य प्रतानित्यादि । हकारान्तः सुहुह्शब्दः । हुओ शब्दे । ओकारो दार्थः । सुहवते इति विगृह्य विचि हवमाचष्टे "मृदो

---

१ । अत्र महावृत्तौ "क्विझलोः" इति पाठः

ध्वर्ये णिज्वद् बहुलमिति णिच्। चकारः णिड्णिचोः सामान्य-ग्रहणार्थः। णकार ऐवर्थः। "णाविष्ठवन्मृदः" इति इष्ठवद् भावेन टेरिति टेः खं। सुञ्चयतीति विगृह्य-क्विप्। णेरिति णिखं। स्वादयः। सुङ्। सुञ्चौ। सुञ्चः। इत्यादि। सुपि ङ्णोः कुक्टुक् छरीति कुक् षत्वं। सुंक्षु। णकारान्तः सुपण्शब्दः। सुपण्। सुपणौ। सुपणः। इत्यादि। सुपण्ट्सु। नकारान्तो राजन् शब्दः। सतः स्वादयः। नोऽङः इति प्रस्तुत्य धेऽकौ। हल्ङ्यादिना सुखं नो मृदंते खमिति नखं। राजा। राजानौ। राजानः। किसम्बो धने "न काविति प्रतिषेधान्नखं न भवति। हे राजन्। हे राजानौ। हे राजानः। राजानम्। राजानौ। यमादौ अजादौ भनो खम-म्वस्फादित्यकारस्य खं। चर्त्वे नकारस्य अकारादेशः। राज्ञः। राज्ञा। हलादौ नो मृदन्ते खमिति न खं।

२८० [1]न खं सुब्विधिकृत्तुकि। ५।३।३६। सुपो विधिः सुपि च विधिः सुब्विधिः। तस्मिन् कृल्लक्षणे च तुकि कर्तव्ये न खमसिद्धं भवति। इति नखस्य सिद्धत्वात् दीर्घे भवति। राजभ्याम्। राजभिः। राज्ञे। राजभ्यां। राजभ्यः। राज्ञः। राजभ्याम्। राजभ्यः। राज्ञः। राज्ञो। राज्ञाम्। वा ङि-श्योरिति विकल्पेनाकारस्यखं। राज्ञि। राजनि। राज्ञोः। राजसु। एवं मूर्द्धाक्षतक्षवृषादयः। दीवन् शब्दस्य सुटि नास्ति विशेषः। असादावजादौ-दीर्वोरिणुः" इति दीत्वं। दीव्नः। दीव्नेत्यादि

१। अस्य स्थाने-नखं सुब्विधि तुकि कृति। ५। ३। २८। इति

नेयं। एवं भाविदीवन्शब्दः। पूषन्शब्दस्य तु भेदः। ततः स्वादयः।

२८१। **इन्हन्पूषार्यम्णां शौ**[1]। ४। ४। ९। इन् हन् पूषन् अर्यमन् इत्येतेषामुङः शावेव दीर्घभवति। नान्यत्र। इति नियमादप्राप्ते पुनः–

२८२। **सौ**। ४। ४। १०। किवर्जिते सौ एव इन् हन् पूषन् अर्यमन् एतेषामुङो दीर्घभवति। पूषा। पूषणौ। पूषणः। हे पूषण्। हे पूषणौ। हे पूषणः। पूषणम्। पूषणौ। शसादौ राजन्वद्ज्ञेयः। पूष्णः। पूष्णा। पूषभ्यामित्यादि। एवं अर्यमन्शब्दः। ब्रह्महन्शब्दस्य भेदः। हनौ गतिहिंसनयोः। औकारो ऽनिदिर्थः। ब्रह्माणं हतवान् इति विगृह्य-भूते "कर्मणि हनः" इत्यधिकृत्य–

२८३। **ब्रह्मभ्रूणवृत्रे**[2] **क्विप्** भ्नः। २। २। ९८। ब्रह्म भ्रूण वृत्रेषु कर्मसु वाक्षु भूते काले हन्तेर्धोः क्विप् स्यो भवति। स चाप्रयोगी। कन्य अल्वयोरिति दीर्घं मासं। इन्द्रीनिति नियमाश भवति। वाक्सः। सुपिति सूत्रे च स्वादयः। सा-विति दीर्घत्वं च। ब्रह्महा। पूरे णो नः। माक्पदस्यादिति च प्रस्तुत्य–

२८४। **एकाचूर्यौ णः**। ५। ४। ११४। षकाररेफात् माक्पदस्यात् परस्य एकाचूर्यौ श्रदन्तनुमुन्नकारस्य नित्यं णत्वं

---

1। अत्र "दौ"। ४। ४। १० इति भिन्नं सूत्रं। 2। अत्र बहुवचनं महावृत्तौ।

भवति । ब्रह्महणौ । ब्रह्महणः । हे ब्रह्महन् । हे ब्रह्महणौ । हे ब्रह्महणः । ब्रह्महणम् । ब्रह्महणौ । शसादावजादावनोऽखे कृते "चजोः कुघिण्ये तेऽनिटः" इत्याधिकृत्य-

२८५ । हो हनो[1] ञ्णिन्नि । ५ । २ । ६७ । हन्तेर्हकारस्य ञिति णिति त्ये नकारेण च योगे सति कुत्वं भवति ।

२८६ । घि घ्नः[2] । ५ । ४ । १३५ । निमित्तनैमित्तकयोर्मध्ये घकारादेशे सति हन्तेर्नकारस्य णत्वं न भवति । ब्रह्मघ्नः । ब्रह्मघ्ना । ब्रह्महभ्यामित्यत्र-

२८७ । नखं सुब्विधिकृत्तुकि । ५ । ३ । ३६ । सुपः स्थाने सुपि च विधौ कृदाश्रये तुकि कर्तव्ये न खं असिद्धं भवति। इति क्विपाश्रयस्तुक् न भवति तदा ब्रह्महभिरित्यादि । एवं भ्रूणहन् आदयः । सुधवन्सुपर्वन्शब्दयोस्त्वम्वस्फा-दिति प्रतिषेधात् अनो खं न भवति । शसादावाचे पूर्ववदन्यत् । सुधर्मणः । सुपर्वणः । इत्यादि नेयं । एवं सुचर्मन्यज्वन् प्रभृतयः । श्वन्शब्दस्य सुट्यविशेषः । श्वा । श्वानौ । श्वानः । हे श्वन् । हे श्वानौ । हे श्वान । श्वानम् । श्वानौ । शसादावचि-वसोर्वस्योशिति प्रस्तुत्य-

२८८ । श्वयुवन्मघोनोऽहृति । ४ । ४ । १३३ । श्वन् युवन् मघवन्नित्येषां मसंज्ञकानां अवयवस्य वकारस्य उशादेशो भवति अहृति गुनिमित्ते त्ये परतः । शकारः सर्वादेशार्थः ।

---

१ । अत्र "हन्तेः" इति पाठो महावृत्तौ । २ । अस्य स्थाने "हतेरघ. । ५ । ४ । १०६ । इति सूत्र ।

२८९ । अहय टे स्वं । ५ । १ । ६६ । पथ्यादीनां ममन्तानां टे स भवति । पथ । पथा । पथिभ्याम् । पथि भिरित्यादि । एवं मथिन्मुभुक्षिन्शब्दौ । अस्वतानामालिंगाना सङ्ख्यावाचिनां भेदोऽस्ति । बहुसङ्ख्याविषयत्वात् बहुवचनमेव ।

२९० । उषिलः । ५ । १ । १६ । इलुमन्तात् परयो जसशसोर्लुक् भवति । नो मृदते न । पच । हे पच । पच । पचभिः । पचभ्यः । पचभ्यः । भेदभ्यानिनां नुट् । नोट इति दीर्घ । मो मृत्ने न च । पचानाम् । पचसु । एवं सप्तन् प्रभृतय । अष्टनित्यत्रो नसान्य ।

२९१ । सुप्याष्टन । ५ । १ । १५६ । अष्टनित्येतस्य तदन्तस्य वा गौणीभित्वमूते सुपि परत आ इत्यादेशो भवति ।

२९२ । अष्ट औश् । ५ । १ । १८ । अष्टन्शब्दा त्कृताकारात् परयो जसशसोरौकारादेशो भवति । शकार शित्का र्यार्थ । पूर्वसर् । अष्टौ । शसि आतो नाम्नि इति आत्त्व । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु । इत्ना कारस्याष्ट इत्युक्तवचनमिदं लिङ्गमात्वविकल्पस्य । तेनात्वाभावपक्षे पचन्शब्दवत् । अष्ट । हे अष्ट । अष्ट । अष्टभिः । अष्टभ्यः । अष्टभ्य । अष्टानाम् । अष्टसु । अकारान्तो वर्णेशब्द । उक्त उत्सर्गे । अकार उच्चारणार्थ । वन उपनीति विगृह्य क्विबा दि वासन । तत स्यादय । स्यान्तस्य स । उज्ज्वलन्नादि ।

१ । अस्य स्थाने—विभक्त्यामाष्टन । ५ । १ । १५३ । इति सूत्र । २ । अस्य स्थाने "अष्टाभ्य औश् । ५ । १ । १८ । इति सूत्रं ।

जलोत् । जलोद् । जलोज्झौ । जलोज्झः । इत्यादि । भकारांतो गर्दभ्शब्दः । स इवाचरतीति गर्दभतीति पुनः क्विप् । ततः सं । ततः स्वादयः । एकाच इत्यादिना भष्भावः । गर्धप् । गर्द्धब् । गर्द्धभौ । गर्द्धभः । एवं मक्षुभादयः । घकारान्तः परिघ् शब्दः । परिहन्यतेऽनेनेति परिघः । स इवाचरति परिघतीति पुनः क्विप् । परिक् । परिग् । परिघौ । परिघः । इत्यादि । एवं समुद्घादयः । डकारान्तः प्राड्शब्दः । प्राड इवाचरति । प्राडतीति पुनः क्विप् । प्राट् । प्राड् । प्राडौ । प्राडः । इत्यादि । एवं गुडादयः । धकारान्तस्तत्वबुध्शब्दः । बुधौ ञ्ज्ञाने । अकारो दार्थः । औकारोऽनिडर्थः । तत्त्वं बुध्यते इति विगृह्य-क्विप् । भष्भावः । पूर्ववदन्यत् । तत्वभुत् । तत्वभुद् । तत्वबुधौ । तत्वबुधः । इत्यादि । एवं अर्थबुध्सुबुधादयः । जकारान्तो भिषज्शब्दः । भिषज रोगापनयने । अकार उच्चारणार्थः । भिषज्यत इति विगृह्य क्विप् । ततः स्वादयः । सुसं ।

२९३ । चोः कुः । ५ । ३ । ६५ । चवर्गस्य झलि च पदान्ते च कवर्गो भवति । वा चर्त्वं । भिषक् । भिषग् । भिषजौ । भिषजः । हे भिषक् । हे भिषग् । हे भिषजौ । हे भिषजः । भिषजम् । भिषजौ । भिषजः । भिषजा । भिषग्भ्याम् । भिषग्भिः । इत्यादि । एवं पुण्यभाजादयः । युजूशब्दस्य भेदः । युजिर्गौ योगे । औकारोऽनिडर्थः । जकारो दार्थः । इर्शब्दो येरित इति विशेषणार्थः । युनक्ति इति विगृह्य—

२९४। ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुंचः २।२।७१। ऋत्विग् दधृग् स्रग् दिग् उष्णिक् इत्येते शब्दाः क्व्यंता निपात्यंते। अंचु युजि क्रुंचि इत्येषां क्विन्नेति क्विन्र्भवति। [illegible] चाप्रयोगी। ततः स्वादयः।

२९५। युजिरोऽसे।५।१।५२। युजिरित्येतस्य नुम्भवत्यसे घे परतः। युस। स्फान्तत्वं।

२९६। क्विन्प्रत्यस्य कुः।५।३।१००। क्विन्प्रत्यो यस्य तस्य धोः कुत्वं भवति झलि च पदान्ते च। इति नकारस्य ङकारः। युङ्। नश्चापदान्ते झलीत्यनुस्वारः। ययं परस्वर्णमिति ञकारः। युञ्जौ। युञ्जः। हे युङ्। हे युञ्जौ। हे युञ्जः। युञ्जं। युञ्जौ। युजः। युजा। युग्भ्याम्। युग्भिः। इत्यादि। अस्त्रौज् पाके। अकरौकारावितौ। धाना भृज्जतीति विगृह्य - क्विप्। लिटीग्यणः सांचेप्यांऽऽत्यं" इत्याधिकृत्य–

२९७। घ' शिव्यधिव्यचिव्याग्रह्विश्चिप्रच्छिभ्रस्जांक्ङिति।४।३।२५। वस्यादीनां घूनां किति ङिति च त्ये परतः साचेऽर्ध्वपरस्य यणः इगादेशो भवति। परत्वात् सावनः। सकारस्योपदेशसामर्थ्याद् सं। जरत्व चुत्व च न भवति। ततः स्वादयः।

२९८। स्फादेः स्कौमे च।४।३।५८। झलि च पदान्ते च य. पदास्यवः स्फांनः तत्स्फादेः सकारस्य धकारस्य च सं भवति।

---

१। कस्य ग्याति–[illegible] ङिति च।५।३।१२। इति सूत्रं मुद्रित सूत्रपाठे।

२९९ । **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** । ५ । ३ । ६५ । व्रश्चादीनां छकारशकारयोश्च षकारादेशो भवति झलि च पदान्ते च । तस्य जश्त्वं छकारश्चर्त्वं । धानाभृट् । धानाभृड् । अपदान्तत्वे श्चुत्वे शकारः । जश्त्वे जकार. । धानाभृज्जौ । धानाभृज्जः । हे धानाभृट् । हे धानाभृड् । द्विषहोः पूर्ववद् । धानाभृज्जम् । धानाभृज्जौ । धानाभृज्जः । धानाभृज्जा । धानाभृड्भ्याम् । धानाभृड्भिः । इत्यादि । रज्जुं सृजतीति विगृह्य क्विप् । वाक्सः । ततः स्वादयः । षत्वजश्त्वे रज्जुसृट् । रज्जुसृड् । रज्जुसृजौ । रज्जुसृज इत्यादि । एवं कंसपरिमृड्शब्दः । यजाञ् दानदेवपूजासंगतिकरणेषु । अकाराकारौ दानिडर्थौ ॥ देवान् यजत इति विगृह्य क्विप् ।

३०० । **स्वप्वच्यजाद्यादेः किति** । ४ । ३ । २४ । स्वप् वच् इत्येतयोश्च श्वि इत्येवमादीनां च किति स्ये परे साचोऽच्यंपरस्य यणः इगादेशो भवति । पूर्वेणेप् । तत. स्वादयः । षत्वजश्त्वे । देवेट् । देवेड् । देवेजौ । देवेजः । इत्यादि । राजृञ् दीप्तौ । ऋकारो "अशास्वक्ल्यृदितः" इति पर्युदासार्थः । अकारो दार्थः । संराजत इति क्विब्विधिः ।

३०१ । **सम्राट्** । ५ । ४ । १३ । समित्येतस्य राजतौ क्व्यंते परेऽनुस्वाराभावो निपात्यते । ततः स्वादयः । सुत्वषत्वजश्त्वानि । सम्राजौ । सम्राजः इति । एव विभ्राज्शब्दः । परिभ्रजतीति विगृह्य-क्विप् स्वादयः ।

३०२ । परिव्राट् । ५ । ३ । ६६ । परिव्राट्शब्दस्य क्विबन्तस्य कृतदीर्घत्वस्य झलि च पदान्ते च षत्वं निपात्यते । परिव्राट् । परिव्राड् । परिव्राजौ । परिव्राजः । इत्यादि । बकारांतः फल्लुम्ब्शब्दः । लुबि तुबि अर्दने । इकारः इदितोर्नुमिति विशेषणार्थः । फलं लुम्बयतीति विगृह्य क्विप् । णेरिति णिलं । ततः स्वादयः । सुखे स्फान्तखे फल्लुन् । फल्लुम्बौ । फल्लुम्बः । इत्यादि । एवं प्रतुम्बादयः । गकारांतः सुरंग शब्दः। रगि गतौ इकारो नुमर्थः। सुरंगतीति विगृह्य क्विबादिविधिः । सुरन् । सुरंगौ । सुरंगः । इत्यादि एवं सुबंगादयः । डकारांतो विकिड्शब्दः । क्रुड् विहारे । ऋकारो ऋतो कर्चास्यादिना विशेषणार्थः । विक्रुडतीति विगृह्य क्विबादिः । विक्रुट् । विक्रुड् । विक्रुडौ । विक्रुडः । इत्यादि । एवं विहुडादयः । दकारांतस्तत्वविद्शब्दः । विद ज्ञाने । तत्वं वेत्तीति विगृह्य क्विबादिः । तत्वविद् । तत्वविट् । तत्वविदौ । तत्वविदः । एवं विश्वविद्वेदविदादयः । द्विपाद्शब्दस्य भेदः । द्वौ पादौ यस्येति विगृह्य सुरैशब्दवद् बसः । द्विपाद इति स्थिते सं । पादस्याहस्त्यादेरिति वर्तमाने—

३०३ । सुस्त्यादेः । ४ । २ १७२। सुशब्दादेः स्त्यिसंज्ञादेश्च पादांतस्य खं भवति। ततः स्वादयः। द्विपाद् । द्विपाद्। द्विपादौ । द्विपादः । हे द्विपाद् । हे द्विपात् । हे द्विपादौ । हे द्विपादः । द्विपादम् । द्विपादौ । शसादावचि "भस्येत्यधिकृत्य—

३०४ । पादः पत् । ४ । ४ । १३१ । पादान्तस्य गोः भसंज्ञावयवो यः पाच्छब्दस्तस्य पदित्ययमादेशो भवति । द्विपदः । द्विपदा । द्विपाद्भ्याम् । द्विपाद्भिः । इत्यादि । एवं सुपादादयः । खकारान्तः सुदुःखशब्दः । सुदुःखति सुदुःखायते सुदुःखयतीति वा विगृह्य-क्विबादिः । सुखस्फादिसखचर्मानि । सुदुक् । सुदुग् । सुदुःखौ । सुदुःखः । इत्यादि । एवं सुमुखादयः । फकारान्तो दामगुम्फ् शब्दः । दाम गुंफतीति विगृह्य क्विबादिः । दामगुब् । दामगुप् । दामगुंफौ । दामगुंफः । इत्यादि । एवं गिरिगुम्फादयः । छकारातः सुवाञ्छ्शब्दः । सुवाञ्छतीति विगृह्य विचि सुखादिके च कृते । सुवान् । सुवाञ्छौ । सुवाञ्छः । इत्यादि । एवं सुप्रञ्छादयः । धर्मप्राच्छ्शब्दस्य भेदः । प्रच्छौ ङीप्सायां । औकारोऽनिडर्थः । धर्मं प्रच्छतीति विगृह्य-क्विपि क्वचिच्छब्दस्य बहुलार्थत्वाद्दीर्घे यणिगमावे च कृते धर्मप्राछ् इति स्थिते -

३०५ । छ्वोः शूड्डे च । ४४ । १६ । छकारांतस्य गोरवयवयोः छ्वोर्यथासंख्यं शठावादेशौ भवतो झलादौ झिति क्वौ डे च परतः । भ्रस्जेत्यादिना षत्वं जश्त्वचर्त्वेत्यादि । धर्मप्राड् । धर्मप्राट् । धर्मप्राशौ । धर्मप्राशः । हे धर्मप्राड् । हे धर्मप्राट् । हे धर्मप्राशौ । हे धर्मप्राशः । धर्मप्राशम् । धर्मप्राशौ । धर्मप्राशः । धर्मप्राशा । धर्मप्राड्भ्यामित्यादि । ठकारान्तः सुपठ् शब्दः । पठ व्यक्तायां वाचि । सुपठतीति विगृह्य क्विबादि. । सुपट् । सुपठौ । सुपठः इत्यादि । एवं सुवठादयः । थकारान्तो-ऽग्निमथ्शब्दः । मथे विलोडने । एकारोऽनैवर्थः । अग्निं मथ-

वीति विगृह्य क्विबादिः । जश्त्वचर्त्वे । अग्निमत् । अग्निमद् । अग्निमथौ । अग्निमथः । इत्यादि । एवं गोमथादयः । चकारातः सुवाच्शब्दः । शोभना वाक् अस्येति बसः । ततः स्वादयः । चोकुरिति कुत्वं । सुवाक्, सुवाग् । सुवाचौ । सुवाचः । इत्यादि । क्रुंच् शब्दस्य भेदः । क्रुंच् कौटिल्याल्पीभावयोः । क्रुंचतीति विगृह्य ऋत्विगादिना क्विः । निपातनैस्सह निर्देशादेव नखाभावः । ततः स्वादयः । सुसस्फान्तसे च क्विस्यस्य कुरिति कुत्वं । क्रुङ् । क्रुंचौ । क्रुंचः । सम्बोधनेप्येवं । क्रुंचम् । क्रुंचौ । क्रुंचः । क्रुंचा । क्रुङ्भ्याम् । क्रुङ्भिः । इत्यादि । सुपि "ङ्णोः कुक् टुक् शरि वा" इति कुकि-क्रुङ्क्षु । मूलवश्च् शब्दस्य तु भेदः । ओव्रश्चू छेदने । ओकारो ओदित इति नन्वार्थः । ऊकारो वेड्यर्थः । मूलं व्रश्चतीति विगृह्य क्विबादिः । ग्रहिज्यावयीत्यादिना बम्प्रिक् । स्फादेः स्कोन्ते चेति सकारस्यासिद्धे कृते श्चुत्वस्य सं । व्रश्चेत्यादिना षत्वम् । जश्त्वं चर्त्वे । मूलवृड् । मूलवृट् । मूलवृश्चौ । मूलवृश्चः । सम्बोधनेप्येवं । मूलवृश्चम् । मूलवृश्चौ । मूलवृश्चः । मूलवृश्चा । मूलवृड्भ्याम् । मूलवृड्भिः । इत्यादि । सुपि–

३०६ । ङ्नो[1] धुट् सोऽश्चः । ५ । ४ । १६ । ङकारान्तान्नकारान्ताच्च परस्य सकारस्य धुडागमो वा भवति श्चोवयवस्य न स्यात् । निवृत्तिरितोः । चार्त्वम् । मूलवृट्त्सु । मूलवृड्सु ।

---

१ । ङ्न धुट् सोऽश्चः, इति पाठः शब्दार्णवचंद्रिकायां ।

प्राञ्च्शब्दस्य भेदः । अंचु गतिपूजयोः । उकारो वेडर्थः । प्रांचतीति विगृह्य-क्विः—

३०७ । हलुङः क्ङित्यनदितः । ४ । ४ । २२ । हलन्तस्य गोरुङो नकारस्य खं भवति क्ङिति परतः इदितं वर्जयित्वा । ततः स्वादयः ।

३०८ । उगिदचां घेऽम्वादेः । ५ । १ । ५१ । भूवादिवर्जितानां उगितां घूनामंचतेश्च नष्टनकारस्य नुम् भवति घे परतः । पूर्ववदितो निवृत्तिः । सुलम्फान्तखकुत्वानि । प्राङ् । प्रांचौ । प्रांचः । सम्बोधनेप्येवम् । प्रांचम् । प्रांचौ । शसादावाचि । ·प्र अच् अस् इति स्थिते । भस्येत्यत्त्वमिति च प्रस्तुत्य—

३०९ । अचः । ४ । ४ । १३७ । अञ्चतेर्नष्टनकारस्य भसंज्ञकस्य गोरकारस्य खं भवति । दीरित्यधिकृत्य—

३१० । चौ । ४ । ३ । २६६ । अंचतौ नष्टनकाराकारे चौ पूर्वस्य दीर्भवति । प्राचः । प्राचा । हलादौ चरत्वकुत्वे । प्राग्भ्याम् । प्राग्भिः । प्राचे । प्राग्भ्याम् । प्राग्भ्यः । प्राचः । प्राग्भ्याम् । प्राग्भ्यः । प्राचः । प्राचोः । प्राचाम् । प्राचि । प्राचोः । प्राक्षु । प्रतिपूर्वत्वे-प्रत्यङ् । प्रत्यंचौ । प्रत्यंचः । सम्बोधनेप्येवं । प्रत्यंचम् । प्रत्यंचौ । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । प्रत्यग्भिः । इत्यादि । उत्पूर्वत्वे-उदङ् । उदंचौ । उदंचः । सम्बोधनेप्येवं । उदंचम् । उदंचौ । शसादावाचि-"अचः इति अत्वे प्राप्ते—

३११ । ईदुतः । ४ । ४ । १३८ ॥ उद उत्तरस्य नष्ट-

नकारस्यांचतेरीकारादेशो भवति । स च परस्यादेरिति अका-रस्य भवति । उदीचः । उदीचा । उदग्भ्याम् । उदग्भिः । इत्यादि । विष्वग्पूर्वत्वे, विष्वगंचतीति विगृह्य क्विप्रभृतिः । विष्वग् अच् इति स्थिते—

३१२ । विष्वग्देवयोश्चटेरद्र्यंचतौ वप्रत्यये । ४।३।२५६ । विष्वग् देव इत्येतयोः स्त्रिसंज्ञकस्य च टेः अद्रिरादेशो भवति । अंचतौ क्यंते चौ परतः । पूर्ववदन्यत् । विष्वद्र्यङ् । विष्वद्र्यंचौ । विष्वद्र्यंचः । सम्बोधनेप्येवं । विष्वद्र्यंचम् । विष्वद्र्यंचौ । विष्वद्रीचः । विष्वद्रीचा । विष्वद्र्यग्भ्याम् । इत्यादि । एवं देवद्र्यङ् । सर्वद्र्यङ् । यद्र्यङ् । एकद्र्यङ् । एतद्र्यङ् । इद-द्र्यङ् । कद्र्यङ् । इत्यादि । अदसि पुनः-अदद्रि अच् इति स्थिते-

३१३ । वाऽद्रेः । ५ । ३ । ११७ । अद्र्यन्तस्यादसो दात्परस्य यथासम्भवं वर्णमात्रस्योत्वं भवति दकारस्य च मकारः । अथाचार्यमतभेदः । [१]अदसो द्रौ केचित् उत्वमत्वं नेच्छन्ति । अमुद्र्यङ् । अमुद्र्यंचौ । अमुद्र्यंचः । सम्बोध-नेप्येवं । अमुद्र्यंचम् । अमुद्र्यंचौ । अमुद्रीचः । अमुद्रीचा । अमुद्र्यग्भ्याम् । इत्यादि । अदसो द्रेश्च प्रथङ्मुत्वम् । इति केचिदिच्छन्ति लत्ववत् । यथा कृपि लाक्षणिकस्याला क्षणिकस्य च रेफस्य लत्वमेवमत्रापि । अमुमुयङ् । अमुमुयंचौ ।

---

१ अदसोद्रेः पृथङ्मुत्वं केचिदिच्छंति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेहि दृश्यते, इति

अमुमुयंचः । सम्बोधनेप्येवं । अमुमुयचं । अमुमुयंचा । अमुमुईचः । अमुमुईचा । अजादौ मुभावस्यासिद्धत्वात् इको यणादेशो न भवति । अमुमुयग्भ्याम् । इत्यादि । केचिदन्तस्य सदेशस्य। अदमुयङ् । अदमुयचौ । अदमुयंचः । इत्यादि । त्यदाद्यत्वविषये विधिरयमन्यत्र नेत्येके मृष्यंते । अदद्र्यङ् । अदद्र्यंचौ । अदद्र्यंचः । इत्यादि । सम् सहपूर्वत्वे च । समंचतीति सहांचतीति विगृह्य क्व्यादिः । सम् अच् सह अच् इति स्थिते—

३१४ । **संसहयोस्समिसध्री** । ४ । ३ । २५५ । सम् सह इत्येतयोः यथासंख्यं समि सध्रि इत्येतावादेशौ भवतः अञ्चतौ क्व्यन्ते घौ परतः । पूर्ववदन्यत् । सम्यङ् । सध्र्यङ् । इत्यादि । तिरस् पूर्वत्वे तिरोऽञ्चतीति विगृह्य क्व्यादिः ।

३१५ । **तिरसस्तिर्य्ये** । ४ । ३ । २५६ । तिरसित्येतस्य तिरि इत्ययमादेशो भवति अञ्चतौ अकारादौ क्व्यन्ते घौ परतः । तिर्यङ् । तिर्यञ्चौ । तिर्यंचः । सम्बोधनेप्येवं । तिर्यंचम् । तिर्यंचौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । तिर्यग्भिः । इत्यादि । पूजायामर्थे वर्तमानस्यांचतेः "नांचोऽर्चे" इति नखाभावाद् अच इति वचनाच्च नुम् भवति । अन्यत् पूर्ववत् । प्राङ् । प्रांचौ । प्रांचः । सम्बोधनेप्येवं । प्रांचं । प्रांचौ । प्रांचः । प्रांचा । प्राङ्भ्याम् । प्राङ्भिरित्यादि । सुखस्फान्तत्वम् । कुगागमश्च । प्राङ्क्षु । प्राङ्सु । प्रेत्यादिपूर्वत्वेप्येवं । टकारान्तो निरट्शब्दोऽभिधेयलिंगः । अट पट गतौ ।

अकार उच्चारणार्थः । निरटतीति विगृह्य क्विबादिः । ततः स्वादयः । निरट् । निरड् । निरटौ । निरटः । इत्यादि । एवं निष्पडादयः । तकारान्तो मरुच्छब्दः । ततः स्वादयः । मरुत् । मरुद् । मरुतौ । मरुतः इत्यादि । एवं त्वत्शब्दः । भवत् शब्दस्य भेदः । भवतु इति स्थिते उकारः उगित्कार्यार्थः । ततः स्वादयो नुमादिः ।

३१६ । **अत्वसोऽस्वादेः** । ४ । ४ । ११ । अत्वन्तस्य असन्तस्य च स्यादिवर्जितस्य उङो दीर्घभवत्यकौ सौ परतः । नुलादि । भवान् । भवंतौ । भवंतः । किसंबोधने—

३१७ । **भगवद्भवत्वघवतो रिः कावद्यस्यौः** । ५ । ४ । ६ । भगवत् भवतु अघवदित्येतेषां वा रिर्भवति कौ परतः तत्सन्निधाने च अवशब्दस्य सर्वस्य औकारादेशः । रेफस्य विसर्जनीयः । हे भोः । हे भवन् । हे भवंतौ । हे भवंतः । भवता । भवद्भ्याम् । भवद्भिः । इत्यादि । एवं भगवदघवच्छब्दा उगिदंतावुन्नेयौ । गोमतुशब्दस्य-गोमान् । गोमंतौ । गोमंतः । इत्यादि । भवत्शब्दस्य भेदः । ऋकार उगित्कार्यार्थः । ततः स्वादयो नुमादिः । भवन् । भवंतौ । भवंतः । इत्यादि । एवं जरत्भविष्यत्प्रभृतयः । महच्छब्दस्य भेदः । महत् इति स्थिते ऋकार उगीत्कार्यार्थः । ततः स्वादयो नुमादिः ।

३१८ । **स्महतौ** । ४ । ४ । ७ । सकारान्तस्य महच्छब्दस्य च अकौ घे यो नकारस्तस्योङो दीर्घभवति । नुलादि । महान् । महांतौ । महांतः । हे महन् । हे महांतौ । हे

महांतः। इत्यादि। थसंज्ञकस्य शतंतस्य भेदः। डुदाञ् दाने। डुञकारावितौ। पूर्ववत् घुत्वे च। ततः "सति" इति लिट्। तस्य स्थाने "सल्लिटः" इति शत्रादेशः। तस्मिन् कर्तरि शवितिं शप्। तस्य 'ह्वदादेरुर्जुबिरुप्। तस्मिन् "लिड्चकचि घेरिरिति द्वित्वं। तयोर्द्वयोः "थः" इति थसंज्ञा। "पूर्वश्चः" इति पूर्वस्य चसंज्ञायां "प्र." इति भादेशः। "श्वस्नोरातः" इति आकारस्य खं। ददत् इति स्थिते-ततः स्वादयः।

३१९। न थात्। ५। १। ६०। थादुत्तरस्य शतुर्नुम् न भवति धे परतः। ददत्। ददतौ। ददतः। इत्यादि। एवं दधत्प्रभृतयः। जक्ष भक्षहसनयोः। अकार उच्चारणार्थः। लटः शत्रादेशः। शप्। तस्य "ह्वदादेरुप्" इति उप्। ततः स्वादयः। "उगिदचां धेऽस्वादेरिति नुम्प्राप्तः। जक्षादिरिति थसंज्ञायां "न थाद्" इति नुम्निषेधः। जक्षत्। जक्षद्। जक्षतावित्येवमादि। एवं जागृत्दरिद्रच्चकासच्छासत् शब्दा नेयाः। ककारान्तः सुशक् शब्दः। शक्लृ शकने। लकारोऽनिडर्थः। सुशक्नोतीति विगृह्य–क्विबादिः। सुशक्। सुशग्। सुशकावित्यादि। एवं तत्वलुगादयः। पकारांतो विलप्शब्दः। जल्प रप लप व्यक्तायां वाचि। विलपतीति विगृह्य-क्विबादिः। विलप्। विलब्। विलपावित्यादि। एवं सुधुप्आदयः। शकारान्तो विश् शब्दः। ततः स्वादयः। नश्चभ्रश्चेत्यादिना षत्वं जश्त्वं चर्त्वं च। विट्। विड्। विशौ। विशः। इत्यादि। तादृश्

शब्दस्य भेदः । दशिरौ प्रेक्षणे । औकारोऽनिदर्थः । इर् शब्दो वाऽर्थः । स इव दृश्यते, तमिव पश्यतीति विग्रहे—

३२० । कर्मणिवे त्यदाद्यन्यसमाने दृशष्टक् सक्च । २ । २ । ७९ । त्यदादौ अन्यशब्दे समानशब्दे च कर्मण्युपमानवृत्तौ वाचि दृशेष्टक् सक् क्विप इत्येते त्रयो भवन्ति । इति क्विः । स चाप्रयोगी । वाक्सः । तद् दृश् इति स्थिते-"षद् दृक्दृशदृक्षे" इति प्रस्तुत्य—

३२१ । आः ४ । ३ । २५५। घत्ये दृक् दृश दृक्षःत्येतेषु च सुपु परतः पूर्वपदस्याकारादेशो भवति । तादृक् । तादृग् । तादृशौ । तादृशः । इत्यादि । एवं अमूदृश् भवादृश् अन्यादृश् प्रभृतयः । पकारान्तो रत्नमुष्शब्दः । ततः स्वादयो जश्त्वचर्त्वे । रत्नमुट् । रत्नमुड् । रत्नमुषौ । रत्नमुषः । इत्यादि । एवं द्विषादयः । षष्शब्दाज्जसादयः । उभिल इति जस्शसोर्लुक् । जश्त्वचर्त्वे । षट् । षड् । हे षट् । हे षड् । षड् । षड्भिः । षड्भ्यः । षड्भ्यः । आमि नुटि च कृते पूर्वस्य जश्त्वं । स्य इति णत्वं टुत्वं च परस्य । षण्णाम् । षट्सु । सकारान्तः सुवचस्शब्दः । शोभनं वचोऽस्येति वसः । ततः स्वादयः । सौ-अत्वसोऽस्वादेरिति अप्रक्तौ सौ उदोऽसन्तस्य दीर्घत्वं । सुवचाः । सुवचसौ । सुवचसः । हे सुवचः । हे सुवचसौ । हे सुवचसः । सुवचसम् । सुवचसौ । सुवचसः । सुवचसा । भकारादौ रित्वमुत्वमेव । सुवचोभ्यामित्यादि । एवं सुवपन् सुप्

यम्सुमनस्उदितमनस्प्रभृतयः। उशनस्शब्दस्य भेदः । ततः स्वादयः । ऋदुशनसित्यादिना ङन् । सुखमुखो दीत्वं । उशना । उशनसौ । उशनसः । किंसंबोधने वो[१]शनोशनिति पक्षे उशन उशनन् इत्येतावादेशौ भवतः । केश्च खं । अनादेशे सकारांत एवेति त्रैरूप्यं । हे उशन । हे उशनन् । हे उशनः । हे उशनसौ । हे उशनसः । इत्यादि सुपचोवत् । पुम्सुशब्दस्य भेदः । पुम्सु इति स्थिते उकार उगिद्कार्यार्थः। ततः स्वादयः । "घुर्बे" इति अधिकृत्य—

३२२ । पुंसो ङस् । ५ । १ । ७० । पुम्सुइत्येतस्य गोर्ङसादेशो भवति घे परतः । ङकारोऽन्त्यविध्यर्थः । उगिदचां घेऽम्वादेरिति नुम् । सहतोरिति दीत्व। सस्फान्तयोः खं। पुमान्।. "नश्चापदांते झलि" इत्यनुस्वारः । पुमांसौ । पुमांसः । हे पुमान्। हे पुमांसौ । हे पुमांसः। पुमांसम् । पुमांसौ। पुंसः। पुंसा। हलादौ स्फान्तखे "नुमो ऽम्" इत्यनुस्वारः । यच्चं परस्वमिति परस्वत्वम् । पुम्भ्याम् । पुम्भिः । पुंसे । पुम्भ्याम् । पुम्भ्यः । पुंसः । पुम्भ्याम् । पुम्भ्यः । पुंसः । पुंसोः । पुंसाम् । पुंसि । पुंसोः । "विषणो सतेः षः नुम्शरः" इति नुम्ग्रहणस्यानुस्वारानियमार्थत्वात्षत्वं न भवति । पुंसु । श्रेयस्शब्दस्य भेदः । स च उदित् । ततः स्वादयः । श्रेयान् । श्रेयांसौ । श्रेयांसः ।

---

१ । उशनस्शब्दस्य उशन उशनन् इत्येतौ वा निपात्यौ को। इत्यस्यार्थः ।

हे श्रेयन् । हे श्रेयांसौ । हे श्रेयांस । इत्यादि । एवं गरीयस् । पर्य्यन्तप्रभृतयः । विद्वस्शब्दस्य भेदः । विद ज्ञाने । अकार उच्चारणार्थः । धुत्वे सति लटः शत्रादेशः । विद् अत् इति स्थिते । कर्त्तरि शबिति शप् । तस्य 'हृदादेरुबिति उप् । स्यस्ते स्याश्रयमिति प्युड् एप् प्राप्तः । नोमता गोरिति निषिद्धः । शत्रपेक्षया पुनरेप् प्राप्तः । गेऽपि इति ङित्वे ङितीति प्रतिषिद्धः ।

३२३ । विदेः शतुर्वसु ५ । १ । ५६ । विदेः परस्य शतुः स्थाने वसुरादेशो भवति । उकार उगित्कार्यार्थः । ततस्त्वादयः । सुटि नुमादि । विद्वान् । विद्वांसौ । विद्वांस । हे विद्वन् । हे विद्वांसौ । हे विद्वांस । विद्वांसम् । विद्वांसौ । शमादावचि भसेत्यधिकृत्य—

३२४ । वसोर्वस्योश् । ४ । ४ । १३२ । वस्वन्तस्य भस्यावयवो यो वकारस्तस्य उश् इत्ययमादेशो भवति । शास्वसघसामिति षत्वं । विदुष । विदुषा । भकारादौ । वसुस्रस्विन्त्यादिना दत्वं । रित्यापवादः । विद्वद्भ्याम् । विद्वद्भिः । इत्यादि । श ष ः क ः पान्ता अप्रसिद्धाः ।

इति हलन्ता पुंलिङ्गा ।

---

## अथ हलंताःस्त्रीलिंगाः ।

हकारान्तः स्त्रीलिंग उपानहशब्दः । णहीञ् बंधने । अकारौकारावनिडर्थौ । घ्वादेः ष्णोऽष्ट्याष्ठिवष्वष्कः स्नं" इति नत्वं । ततः क्विबादिः ।

३२५ । [1]नहिवृतिवृषिव्यधिरुचिसहितनौ कौ वाग्गेः । ४ । ३ । २८४ । नह्यादिषु क्विबंतेषु पूर्वस्य वाचोऽजन्तस्य गेश्च दीर्घेवति । ततः स्वादयः ।

३२६ । नहो धः । ५ । ३ । ३३ । नहः हकारस्य धकारादेशो भवति झलि च पदान्ते च । जश्त्वचर्त्वे । उपानत् । उपानद् । उपानहौ । उपानहः । इत्यादि नेयं । उष्णिहशब्दस्य क्वित्यस्य कुरिति कुत्वं । उष्णिक् । उष्णिग् । उष्णिहौ । उष्णिहः । इत्यादि । षकारान्तो नियतलिङ्गोऽप्रसिद्धो वाच्यलिंगस्तु पूर्ववद् । वकारांतो दिव्शब्दः । स च सुदिव्शब्दवत् । द्यौः । दिवौ । दिवः । इत्यादि । रेफांतो गिर्शब्दः । गॄ निगरणे ।

३२७ । संपदादिभ्यः क्विप् क्तिः[2] । २ । ३ । ८८ । संपदादिभ्यो धुभ्यः भावे कर्तरि स्त्रीलिंगे क्विप् क्ति इत्येतौ त्यौ भवत ।

---

१ । अस्य स्थाने—नहिवृतिवृषिव्यधिरुचिसहितनिषु कौ । ४।३।२१९। इति

२ । अस्य स्थाने—एतादृशमेव वार्तिकं ।

३२८ । ऋतामिद्धोः । ७।१।८३ । ऋकारांतस्य घोरिकारादेशो भवति । रंतोऽगुरिति रंतत्वं । ततः स्वादयः । "दीः वोरिगुडः" इति दीत्वं । विसर्जनीयः । गीः गिरौ । गिरः । इत्यादि । घोः स्वरूपग्रहणे तत्त्यविज्ञानात् ओऽचि इति लत्वं न भवति । धुर्वी हिंसने । ईकारो डीयरवीदिद्वेटोऽपतस्ते इति विशेषणार्थः । ततः क्विप् ।

३२९ । रः खम् । ४।४।१८ । रेफात्परयोः छकारवकारयोः झलादौ क्विपि खं भवति । शठोपवादः । ततः स्वादयः । धूः । धुरौ । धुरः । इत्यादि । एवं पुरादयः । चतुःशब्दस्य भेदः । ततो जसादिः । "त्रिचतुरः स्त्रियां तिसृचतसृ" इति चतस्रादेशः । रोच्युरिति रेफः । चतस्रः । चतस्रः । चतसृभिः । चतसृभ्यः । चतसृभ्यः । "नाम्यतिसृचतसृ" इति प्रतिषेधात् दीत्वं न भवति । चतसृणाम् । चतसृषु । लकारजकारावौ स्त्रीलिङ्गावप्रसिद्धौ । वाच्यलिंगौ तु पूर्ववत् । एवमन्यत्रापि । मकारान्तः प्रियमदाम्शब्दः । स च मदाम्शब्दवत् । ङणकारांतावप्रसिद्धौ । नकारांतः सामन्शब्दः । स च राजन्शब्दवद् । एवं दामन् बहुराजन्प्रभृतयः । फकारांतोऽप्रसिद्धः । मकारांतः ककुभ् शब्दः । ककुप् । ककुब् । ककुभौ । ककुभः । इत्यादि । घटान्तौ अप्रसिद्धौ । धकारांतः समिध्शब्दः । तस्याप्यविशेषः । समित् । समिद् । समिधौ । समिधः । इत्यादि । लकारान्तः सृन्शब्दः । स च भिषज्शब्दवत् । बगडंता अप्रसिद्धाः । दकारांतो दृषद्

शब्दः । तस्याप्यविशेषः । एवं शरद्संपत्विपदादयः । खं फछठथांतास्तथा अप्रसिद्धाः । चकारांतस्त्वचशब्दः । तस्य कुत्वजरत्वचर्त्वानि । त्वग् । त्वक् । त्वचौ । त्वचः । इत्यादि । एवं वाच्प्रभृतयः । टकारांता अप्रसिद्धाः । तकारांतो विद्युत्-शब्दः । तस्याप्यविशेषः । एवं त्रिंशत्चत्वारिंशत्प्रभृतयः । ककारांतो ऽप्रसिद्धः । पकारान्तोऽप्शब्दः । ततो बहुवचनमेव । जसि-स्सृनप्तृ इत्यादिना दीर्घं । आपः । अप । भकारादौ-

३३० । भ्यपः । ५ । २ । १६३ । अप्शब्दस्य गोर्निमित्ते भकारादौ तकारादेशो भवति । अद्भिः । अद्भ्य । अद्भ्यः । अपाम् । अप्सु । शकारान्तो दृशशब्दः । तस्य कुत्वादि । दृक् । दृग् । दृशौ । दृशः । इत्यादि । एवं दिश्प्रभृतयः । निश्शब्दस्य भेद । भ्रश्चेत्यादिसाहचर्याद्धोः शकारस्य षत्वमिति चेत् जडत्यादि, तस्यासिद्धत्वान्न कुत्व । निच् । निज् । निशौ । निश । इत्यादि । स्तोश्चुना श्चुरिति सकारस्य शकारः । शश्छोऽमीति छत्वं । निच्छु । षकारांतस्त्विष्शब्दः । स च रत्नमुष् शब्दवत् । दधृष् । ऋत्विगादिना क्व्यंतत्वात् कुत्वादि । दधृक् । दधृग् । दधृषौ । दधृषः । इत्यादि । सकारान्तो आर्चिस्शब्द । ततः सादय । पदांतेरीत्यादिः । अन्यत्र षत्वम् । आर्चिः । आर्चिषौ । आर्चिषः । इत्यादि । सुपि-शरि सश्चेति पक्षे सकारः । आर्चिष्षु । आर्चिःषु । एवं सुयशस्प्रभृतयः । अनुस्वारान्ता अप्रसिद्धाः ।

इति हलंताः स्त्रीलिंगाः

## अथ हलन्ताः नपुंसकलिंगाः ।

हकारान्तो गोदुह्‌शब्दः। ततः स्वादयः। नपः स्वमोरित्युप्। गोदुक्। औकारयोः "नप इति शीभावः। गोदुही। जस्शसोरिति शिः।

३३१। [1]फलाम्। ५।१। ५४। अथः परा या झल्‌जातिस्तदन्तस्य नपो धे परतो नुम् भवति। गोदुंहि। इत्यादि। एवं मधुलिहादयः। यकारांतोऽव्युत्पत्तिपक्षेऽप्रसिद्धः। व्युत्पत्तिपक्षे तु पूर्ववत् समय्‌शब्दः। समय्। समयी। समयि। इत्यादि। वकारान्तः सुदिव्‌शब्दः। शोभना द्यौरस्मिन्निति बसः। ततः स्वमोरुपो बहिरंगस्यासिद्धत्वात् अंतरगं। दिवो हल्स्वादिरित्युत्वं। सुद्यु। सुदिवी। सुदीवि। हे सुद्यो। हे सुद्यु। इत्यादि। व्युत्पत्तिपक्षे तु दिवेः शडि भादेशे चादौ सुपीको-चीति नुमि धे च दीर्घे सति-अक्षद्यु। अक्षद्युना। अक्षद्यूनि। इत्यादि। रेफांतो वार्‌शब्दः। वाः। वारी। वारि। इत्यादि। सुपि-वाःषु। चतुर्‌शब्दस्य जश्शसोः शिः। वादेशः। चत्वारि। चत्वारि। पूर्ववद् शेषः। लकारांतः प्रियमज्वल्‌शब्दः। प्रियम-ज्वल्। प्रियमज्वली। प्रियमज्वलि। इत्यादि। अकारांतः प्रश्‌शब्दः। प्रजानातीति प्रज्ञः। स इवाचरातीति। प्रक्। प्रग्। प्रशी। प्रशि। इत्यादि। मकारांतो प्रियप्रदातःम्‌शब्दः। प्रियम दान्। प्रियप्रदामी। प्रियप्रदामि। इत्यादि। ङकारान्तः प्रियङ् शब्दः। प्रियं ङवते इति क्विप्। प्रियङ्‌ः। तमाचष्टे प्रियं ङय-

[1] अस्य स्थाने नपोऽझलः। ५। १। ५१। इति सूत्रं।

तीति पुनः क्विप्। प्रियङ्। प्रियञ्चौ। प्रियञ्चि। णकारांतः प्रियसुगुण्शब्दः। ततः स्वादयः। प्रियसुगण्। प्रियसुगुणौ। प्रियसुगुणि। इत्यादि। प्रियसुगुणट्सु। नकारांतश्चर्मन्शब्दः। ततः स्वादयः। नो मृदंते खमिति नखं। चर्म। चर्मणी। चर्माणि। किंसंबोधने, न कौ इत्यधिकृत्य-

३३२। नपि वा। ५। २। ४१। पदस्यांते नपुंसकलिंगे नकारस्य खं वा भवति कौ परतः। हे चर्मन्। हे चर्म। इत्यादि। भादावजादौ अन्वस्फादिति प्रतिषेधादनो खं न भवति। चर्मणा। इत्यादि। एवं कर्मन्धर्मन्प्रभृतयः। ब्रह्महन्शब्दस्य शिभावे वा ङियोरिति विकल्पेनानं खं। हो घिन्ग्नि" इति हकारस्य घकारः। ब्रह्मह। ब्रह्मघ्नी। ब्रह्महणी। ब्रह्महाणि। हे ब्रह्महन्। हे ब्रह्मह। हे ब्रह्मघ्नी। हे ब्रह्महणी। हे ब्रह्महाणि। पुनरपि ब्रह्मह। ब्रह्मघ्नी। ब्रह्महणी। ब्रह्महाणि। पूर्ववच्छेषं। अहन्शब्दस्य भेदः। ततः स्वादयः। स्वमोरुपि—

३३३। अह्न्। ५। ३। १०३। अहनित्येतस्य पदस्य रिर्भवति। इति रित्वे प्राप्ते—

३३४। रोऽसुपि। ५। ३। १०५। अह्नो नकारस्य रेफादेशौ भवति असुपि परतः। इति रो भवति। अहः। अह्नी अहनी। अहानि। संबोधनेप्यविशेषः। भकारादौ रिरुत्वमेप्च। अहोभ्यामित्यादि। मकारांतः-समुत्। समुद्। समुञ्भौ।

समुंज्झि । इत्यादि । भकारान्तः गर्दभृशब्दः । गर्दप् । गर्दब् । गर्दभी । गर्दम्भि । इत्यादि । घकारान्तः साधुघक् । साधुघग् । साधुगघी । साधुगंघि । इत्यादि । ढकारान्तः मूढ इवाचरतीति मूढति । पुनः क्विप् । मूड् । मूड् । मूढी । मूंढि । इत्यादि । धकारांतस्तत्त्वभुत् । तत्त्वभुद् । तत्त्वबुधी । तत्त्वबुंधि । इत्यादि । जकारांतो धानाभृज्जशब्दः । ततः स्यादयः । स्कादेः स्कोंतेनि सकारस्य खं । भ्रस्जेत्यादिना षत्वं । जरत्व चर्त्वे । धानाभृड् । धानाभृड् । धानाभृज्जी । जस्त्वयोरंतरंगत्वात् सकारस्य जरत्वचर्त्वयोः कृतयोः शौ नुमि विशेषः । धानाभृम्जि । इत्यादि । वगडंता अप्रसिद्धाः । दकारांतो द्विपाद्शब्दः । ततः स्यादयः । द्विपात् । द्विपाद् । स्यां परभूतायां पादः पदिति पद्भावः । द्विपदी । द्विपांदि । इत्यादि । एवं त्रिपादादयः । सकारांतः सुदुक् सुदुग् । सुदुःखी । सुदुंःखि । इत्यादि । फकारांतः निर्गुप । निर्गुब् । निर्गुफी । निर्गुंफि । इत्यादि । छकारांत-प्रमोच्छत इति क्विप् । प्रमोड् । प्रमोच् । प्रमोच्छी । प्रमोन्छि । इत्यादि । ठकारान्तः सुपट् । सुपड् । सुपठी । सुपण्ठी । इत्यादि । थकारांतो गोमथ्शब्दः । गोमत् । गोमद् । गोमथी । गोमन्थि । इत्यादि । चकारांतः मूलानि वृश्चतीति क्विप् । स्कादिसे षत्वादि । मूलवृट् । मूलवृड् । मूलवृश्री । मूलवृंश्चि । इत्यादि । प्राञ्चतीति प्राक् । प्राग् । नांभावे अच इत्यखं । चाविति दीर्घत्वं । प्राची । प्राचि । इत्यादि । एवं प्रत्यच्अनुमुपचमसम्यपतिर्यच्प्रभृतयः । ददत्शब्दात् स्यादयः ।

ददत् । ददद् । ददती । शौ-न श्यादिति निषेधे प्राप्ते—

३३५। वा नपः । ५ । १ । ६१ नपुंसकलिंगात् भसंज्ञकात् परस्य शतुर्नुम् वा भवति । ददन्ति । ददति । इत्यादि । एवं ज-क्षदादीनां रूपसिद्धिः । यात् । याद् । श्यां - शीम्वोरादिति वा नुम् । यान्ती । याती । शौ झलामिति नुम् । यान्ति । इत्यादि । एवं वात्प्रभृतयः । भवत् । भवद् । श्याम् । शप्श्यादिति नुम् । भवती । भवन्ति । इत्यादि । एवं दीव्यद्दादयः । ककारान्तः सुतक् । सुतग् । सुतकि । इत्यादि । पकारान्तः सुतप् । सुतब् । सुतपी । सुतम्पि । इत्यादि । शकारान्तः सुदिश्शब्दः । सुदिक् सुदिग् । सुदिशी । सुदींशि । इत्यादि । षकारान्तः रत्नमुट् । रत्नमुड् । रत्नमुषी । रत्नमूंषि । इत्यादि । सकारान्तः पयः । पयसी । शौ-झलामिति नुम् । स्महत इति दीः । पयांसि । इत्यादि । एवं तेजस्तमस्प्रभृतयः । विद्वस्शब्दात्स्वादय । विद्वत् । विद्वद् । वसो वस्योसिति उश् । विद्वांसि इत्यादि । अर्चिस् शब्दात्स्वादयः । अर्चिः । अर्चिषी । षत्वस्यासिद्धत्वादीत्वं । अर्चींषि । इत्यादि । अनुस्वारादन्ता अप्रसिद्धाः ।

इति हलन्ताः नपुंसकलिंगाः ।

—:o:—

## अथालिंगौ युष्मदस्मद्शब्दावुच्येते ।

तयोरप्यलिंगत्वात् त्रिषु अपि लिंगेषु समानं रूपं । तद् यथा, त्वं युवा । त्वं युवतिः । त्वं तीर्थम् । अहं युवा, अहं ब्राह्मणजातिः । अहं पात्रं इति । युष्मद् अस्मद् इति स्थिते । ततः

स्वादयः । सुप्याप्त्नः, युष्मदस्मदोः, -मावर्धेरिति च प्रस्तुत्य—

३३६। स्वाहौ सौ । ५ । १ । १६८ । युष्मदस्मदोस्त्तदन्तस्य च गोर्मावर्धेर्यथासंख्यं त्व अह इत्येतावादेशौ भवतः ।

३३७ । ङेसुटोऽम्[1] । ५ ।१। २६ । युष्मदस्मदोस्तदंतस्य च गोर्मावर्धेर्यथासंख्यं सुसंज्ञानिमित्तभूतस्य ङे इत्येतस्य सुटश्च सुपः अमित्ययमादेशो भवति ।

३३८। त्वमादेशे । ५ । १ । १६३ । युष्मदस्मदोः मं भवति आदेशभूते सुपि परतः । इति दकारस्य स । पूर्वोमीति पूर्वत्वं । त्वम् । अहम् ।

३३९ । युवावौ द्वौ । ५ ।१। १६६ । युष्मदस्मदोर्द्वित्वे वर्तमानयोः मावर्धेः शब्दरूपस्य यथासंख्यं युव आव इत्येतावादेशौ भवतः सुपि परतः ।

३४०। [2]आविपि । ५ । १ ।१६१। युष्मदस्मदोस्तदन्तस्य च गोराकारादेशो भवति औकारे इपि च सुपि परतः । युवाम् । आवाम् ।

३४१ । यूयवयौ जसि । ५ । १ । १६८ । युष्मदस्मदोर्मावर्धेः तदंतस्य च गोर्यथासंख्यं यूय वय इत्येतावादेशौ भवतः जसि सुपि परतः । पूर्ववदमादेशे च कृते एप्यत इति पररूपं । यूयम् । वयम् ।

---

१ अस्य स्थाने-ङेसुटोऽम् । ५ । १ । २४ । इति सूत्रं ।
२ । अस्य स्थाने – इपि । ५ । १ । १६९ । इति । औति । ५ । १४३ । इति सूत्रद्वयं ।

३४२।[1]त्वमौ त्यदौ चैके।५।१।१६७। एकत्वविशिष्टे अर्थे वर्तमानयोर्युष्मदस्मदोः मावपर्येयथासंख्यं त्व म इत्येतावादेशौ भवतः सुपि परतः त्ये द्यौ च। आविपीति आत्वं। दीत्वं। त्वाम्। माम्। औटि-पूर्ववद्। युवाम्। आवाम्।

३४३। शसो न्[2] ।५।१।२७। युष्मदस्मद्भ्यां परस्य शसो नकारादेशो भवति। परस्यादेरिति अकारस्य नत्वं। आविपीति आत्वम्। युष्मान्। अस्मान्। टायां-त्वमौ भवतः।

३४४। यः। ५।१।१६२। युष्मदस्मदोस्तदंतस्य च गोर्यकारादेशो भवति सुपि परतः। परिहृत्यापवादविषयं उत्सर्गोऽभिनिविशत इति पारिशेष्यात् टाओस्ङ्युष्‌ अयं विधिः। त्वया। मया। भ्यामि युवावौ भवतः। रायस्मिरिति वर्तमाने—

३४५। युष्मदस्मदोः ।५।१।१६०। युष्मदस्मद् इत्येतयोः तदंतस्य च गोराकारादेशो भवति सकारभकारादौ सुपि परतः। दीत्व। युवाभ्याम्। आवाभ्याम्। भिस्यपि-आत्वे दीत्वे युष्माभिः। अस्माभिः। ङयि—

३४६। तुभ्यमह्यौ ङयि। ५। १। १७०। युष्मदस्मदोस्तदन्तस्य च गोस्तुभ्य मह्य इत्येतावादेशौ भवतः ङयि सुपि परतः। ङे सुटोमित्यम्। खमादेशे इति दत्वं। तुभ्यम्। मह्यम्। भ्यामि-युवाभ्याम्। आवाभ्याम्। भ्यसि—

---

१। अस्य स्थाने – त्वमावेकवचने। ५। १। १५६। इति त्यदाद्योश्च। ५। १। १५७ इति सूत्रद्वयं।

२। अस्य स्थाने – शसो नः। ५। १। २५। इति सूत्रं।

३४७ । [1]भ्यसोऽपोऽभ्यम् । ५ । १ । २८ । युष्मदस्मद्भ्यां परस्य यपो भ्यसः अभ्यं इत्ययमादेशो भवति । दस्तं पररूपं च । युष्मभ्यम् । अस्मभ्यम् । ङसौ-त्वमौ भवतः ।

३४८ । [2]भ्यसोऽत् । ५ । २६ । युष्मदस्मद्भ्यां परस्य कायाः षष्ठ्योः भ्यसः एकवचनस्य च ङसेरत् इत्ययमादेशो भवति । दस्तपररूपे । त्वत् । मत् । भ्यामि-युवाभ्याम् । आवाभ्याम् । भ्यसोत् । युष्मत् । अस्मद् । ङसि–

३४९ । तवममौ ङसि । ५ । १ । १७१ । युष्मदस्मदोर्नावपेक्षतदन्तस्य च गोस्तवममादेशौ भवतः ङसि सुपि परतः ।

३५० । युष्मदस्मदोः ङसोऽश् । ५ । १ । २५ । युष्मदस्मद्भ्यां परस्य ङसः अशित्ययमादेशो भवति । शकारः शित्कार्यार्थः । नखं पररूप । तव मम । ओसि-युवावौ भवतः । यः इति दकारस्य यकारादेशो भवति । युवयोः । आवयोः । आमि ---

३५१ । साम आकम् । ५ । १ । ३० । युष्मदस्मद्भ्या परस्य साम आकमादेशो भवति । आगामिन सुट भूतमिवोपादाय साम इति निर्देशः क्रियते, तत् किं प्रयोजन ? आकमि कृते पुनः सुण्माभूत् । अकमि पररूपमित्याकम्वचन । युष्माकम् । अस्माकम् । ङौ-त्वमौ । य इति आदेशश्च । त्वयि, मयि । ओसि

१ । अस्य स्थाने—भ्यसोऽभ्यम् । ५ । १ । २६ । इति ।
२ । अस्य स्थाने—ङत् कायाः । ५ । १ । २७ । इति ।

पूर्ववत् । युवयोः । आवयोः । सुपि दकारस्यात्वं । युष्मासु। अस्मासु । यदा पुनरेतौ युष्मदस्मदौ वाक्यावयवौ तद्वाक्या-वयवात् पदात् परौ भवतस्तदाऽनयोरविप्तास्थयोर्भेद. । "वाक्यस्य" पदादपादादाविति च प्रस्तुत्य–

३५२ । युष्मदस्मदोऽविप्लास्थस्य वान्नौ[1] । ५।३। २४ । वाक्यस्यावयवयोस्तद्वाक्यावयवात् परयोरपादादौ वर्तमानयोर्युष्मदस्मदोराविप्तासु स्थितयोः वान्नौ इत्येतावादेशौ भवतः । बहुत्वैकत्वयोरादेशांतरवचनादिह द्वित्वे संप्रत्ययः । युवाभ्यां युवां युवयोरित्येषां अविप्ताद्विवचनांतानां वामित्येवमादेशो भवति। आवाभ्याम्, आवाम्, आवयोरित्येषां च नावित्ययमादेशो भवति । ज्ञानं वां दीयते । ज्ञानं नौ दीयते । धर्मो वां रक्षतु । धर्मो नौ रक्षतु । शील वां स्वं । शील नौ स्वं ।

३५३ । [2]बहोर्वस्नस् । ५ । ३ । २५ । वाक्यस्यावयवयोस्तद्वाक्यावयवाद् पदात् परयोरपादादौ वर्तमानयोर्युष्मदस्मदो: अविप्ताबहुवचनान्तयोर्वस् नस् इत्येतावादेशौ भवत । दानं वो दीयते । दानं नो दीयते । देवो वो रक्षतु । देवो नो रक्षतु। ज्ञानं व. स्वं । ज्ञानं नः स्वं ।

३५४ । एकस्य तेमे । ५ । ३ । २६ । वाक्यस्यावयवयोस्तद्वाक्यावयवात् पदात्परयोपादादौ वर्तमानयोर्युष्मद-

१ । अस्य स्थाने "वांनावौ" इति पाठो महावृत्तौ । २ । अत्र "वस्नसौ" इति पाठः ।

स्मदोः आविभ्तैकवचनांतयोर्यथासंख्यं ते मे इत्येतावादेशौ भवतः । दानं ते दीयते । दानं मे दीयते । शील मे स्वं । शीलं ते स्वं ।

३५५ । त्वामौ द्वितीयायाः[1] । ५ । ३ । २७ । वाक्यस्यावयवयोस्तद्वाक्यावयवात् पदात् परयोरपादादौ वर्तमानयोः युष्मदस्मदोरिवैकवचनांतयोः त्वा मा इत्येतावादेशौ भवतः । त्वामित्येतस्य मन्तस्य मा इत्ययमादेशः । धर्मस्त्वा रक्षतु । धर्मो मा रक्षतु । एते वानावाद्यादेशाः अनन्वादेशे विभाषिता वेदितव्याः । अन्वादेशे तु नित्यमिति ।

३५६ । [2]बोध्यं प्राङ्नेव । ५ । ३ ।३२। बोध्यांतं पदं युष्मदस्मद्भ्यां पूर्ववत्नेवाविद्यमानवद् भवति । किमसद्भावे प्रयोजनम् ? वान्नावादेशनिवृत्तिः । देवदत्त युवाभ्यां दीयते शीलं । देवदत्त आवाभ्यां शीलं दीयते । देवदत्त युवां धर्मो रक्षतु । देवदत्त आवां धर्मो रक्षतु । देवदत्त युवयोः शीलं स्वं । देवदत्त आवयोः शीलं स्वम् । देवदत्त युष्मभ्यं शीलं दीयते । देवदत्त अस्मभ्यं शीलं दीयते । देवदत्त युष्मान् रक्षतु धर्मः । देवदत्त अस्मान् रक्षतु धर्मः। देवदत्त युष्माकं शीलं स्वं। देवदत्त ,अस्माकं शीलं स्वं । एवं इतरत्रापि बोध्यं ।

३५७ । न चवाहाहैवयोगे । ५ । ३ । २८ । च वा ह अह एव इत्येतैः शब्दैर्योगे संबंधे युष्मदस्मदोर्वान्नावाद्या-

---

१ । अस्य स्थाने त्वामाविपः ।५ । ३ । १९ । इति सूत्रं ।

२ । अस्य स्थाने "बोध्यमसद्वत् । ५ । ३ । २४ । इति सूत्रं।

देशाः न भवंति । ज्ञानं युवाभ्यां च दीयते । ज्ञानं आवाभ्यां च दीयते । ज्ञानं युवां च रक्षतु । ज्ञानं आवां च रक्षतु । ज्ञानं युवयोश्च स्वं । ज्ञानमावयोश्च स्वं । ज्ञानं युवाभ्यां वा दीयते । ज्ञानमावाभ्यां वा दीयते । ज्ञानमावाभ्यां ह दीयते । ज्ञानं युवाभ्यां अह दीयते । ज्ञानमावाभ्यां अह दीयते । ज्ञानं युवाभ्यामेव दीयते । ज्ञानमावाभ्यामेव दीयते । एवमन्यत्राप्युन्नेयं ।

३५८ । दृश्यर्थैश्चिन्तायां । ५। ३। २१ । दृश्यर्थैर्धातुभिः चिंताविषयैर्योगे युष्मदस्मदोर्वान्नावादयो न भवन्ति । स च योगः परम्परया साक्षाच्चाभ्यूह्यः । ज्ञानं युवाभ्यां दीयमानं संदृश्यागतो जनः । ज्ञानमावाभ्यां दीयमानं संदृश्यागतो जनः । जनो युवां समीक्ष्य गतः । जन आवां समीक्ष्य गतः । जनो युवयोः कार्यमालोचयति । जन आवयोः कार्यमालोचयति । एवमपरेऽपि विज्ञेयाः । चिंतायां इति किं ? जनो वः पश्यति । चक्षुषा इत्यर्थः ।

## अथालिङ्गासंख्यानि शब्दरूपाणि उच्यंते ।

३५९ । [1]तत्तस्सात्त्राशःकृत्वस्सुच्वद्धाऽऽम्क्त्वांतुमुसुम्भिडाभत्यन्यक्स्वरादयो झिः । १ । १ । ८८ । तत् तस् सात् त्रा शस् कृत्वस् सुच् वद् धा आम् क्त्वा अम् तुम् इत्येतदन्ताताः सुम्भिङ्प्रतिरूपाः तिसंज्ञा अन्यग्भूताः स्वरादयश्च शब्दा झिसंज्ञा भवंति । तादिति प्रत्या-

---

१ । अस्य स्थाने असंख्यं झिः । १ । इति सूत्रं ।

हारः । कायास्तासित्यारभ्य आएधात् तकारेण । सर्वस्मात् तस्मादिति विगृह्य कायास्तासिति तस् । सर्वतम् त तस् इत्येतस्य क्तित्वात् क्तेरिति सुप उपि पदत्वे सति रित्वविसर्जनीयौ भवतः। सर्वतः । ततः । एवं तस् । पीलु मूलेनैकादिक् पीलुमूलतः । सात् । भस्मसाद्भवति । अत्र जश्त्वं प्रयोजनं । त्रा-राजत्रा वसति । अत्र पदत्वं । शस्-बहुशः । कृत्वम्-शतकृत्वः । सुच्-द्विः । अत्र च रित्वविसर्जनीयौ । वत्-राजवद् वृत्तं । अत्र जश्त्वं । धा-बहुधा । अत्र पदत्वं । आम्-कार्षाचक्रे । अनुस्वारपरस्वत्वे । त्का-कृत्वा । अम्-पूर्वं भोजम् । तुम्-कर्तुम् व्रजति । अत्र विकल्पेन परस्वं । सुम्मिङा[1] भाः-रात्रौ । मात्रायाम् । अस्ति । स्वस्ति । अत्र पदादपादादावित्यादि । त्वि-अद् कृत्य । अत्र कृतमित्यादिना शिनिषेधः । अन्यक्स्वरादि-स्वास्तिष्ठ स्वम् ।[2] अत्र सत्वं सिद्धं । के ते स्वरादयः । स्वर् । अन्तर् । पुनर् । प्रातर् । शुनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋदृक् । ऋत् । युगपत् । आरात् । प्रथक् । ह्यस् । श्वम् । दिवा । सायं । चिरं । ईषत् । मनाक् । ज्योषम् । जोषम् । तूष्णीम् । बहिस् । अदस् । निकषा । समया । मृषा । स्वयम् । नक्तम् । इद्धा । सामि । वता । मनम् । सनात् । तिरस् । अन्तरा ।

---

१ । सुप् च मिङ् च सुम्मिङौ । तौ इव आभा येषां ते सुम्मिङाभाः ।

२ । न्यंचतीति न्यंचः । नन्यंचः अन्यंचः । अन्यंचश्च ते स्वरादयश्च अन्यास्स्वरादयः ।

ज्योकम् । शम् । सना । नाना । विना । अन्यत् । क्षमा । उपांशु । विहायसा । दोषा । मुधा । अमा । मिथ्या । पुरा । मिथो । मिथु । मिथस् । प्रायम् । मुहुस् । प्रवाहु । आर्य । अलम् । अभिक्ष्णम् । साकद्धर्म । मुहुस् । हिरुक् । अशान् । च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । सूपत् । कूपत् । क्वचित् । नेत् । चेत् । कच्चित् । यत्यनेह । हंत । हाकिर् । नाकिण् । माङ् । नञ् । यावत् । तावत् । त्वै । स्वै । न्वै । कै । रै । शोषत् । वौषत् । स्वाहा । स्वधा । ओम् । हिम् । खलु । किल । अठम् । अथ । स्म । अ । इ । उ । ऋ । लृ । ए । ऐ । ओ । औ । उञ् । उकञ् । आवह । आतङ्क । युवत् । किम् । यत् । तत् । धिक् । हे । है । पाट । पुट् । आंहो । उताहो । हो । अहो । अदो । अहो । मा । नो । ननु । हि । तु । नु । इति । इव । चन । पुंवत् । आप् । शप् । हिकम् । शुकम् । नुकम् । नहिकम । सत्यम् । भूतम् । श्रद्धा । नो । हि । न चेत् । चात् । मर्मा । ईम् । किम् । शिन् । प्र । पर । अप । अव । अथ । आहो । सिल । वै । है । पशु । पटु । सह । अनुपक् । अंग । पुत्र । तो । ओक । अरे । अवे । अयि । वट् । पड् । मुत् । तावट् । हुं । आम् । कुम् । वस । मया । क्लिश् । प्र । पर । अप । सम । अनु । अव । निस् । दुस् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । इति स्वरादयः ।

अथ स्त्र्याः ।

ङ्याप्सूदः, स्त्रियामिति च वर्तमाने—

३६० । [1]अजाद्यतां टाप् । ३ । १ । ४ । अज इत्येवमादीनां अकारांतानां च मृदां वाच्यायां स्त्रियां द्योत्यायां ततष्टाबित्ययं त्यो भवति ॥ बाधकबाधनार्थं अजादीनामुपादानं । अनकारान्तार्थं च । अजा । एडका । अश्वा । चटिका । मूषिका । कोकिला । अत्र जातिलक्षणस्य ङ्यो बाधा । बाला । होढा । पाका । मत्सा । मन्दा । वत्सा । अत्र वयोलक्षणस्य ङ्यो बाधा । पूर्वापहाणा । अपरापहाणा। परप्रहाणा । अत्र टिल्लक्षणस्य निपातनाण्णत्वमाद्योः । त्रिफला । अत्र रलक्षणस्य। क्रुञ्चा । उष्णिहा । देवविशा । अत्र हलंतत्वादत इति अप्राप्तः । अतः खल्वपि । खट्वा । देवदत्ता। या । सा । कारिषगन्ध्या । कोडचा । टाबन्तानां दयाशब्दवद्रूपसिद्धिः ।

३६१ । [2]उग्युगिदृन्नन्ञ्यो: । ३ । १ । ५ । उगिदन्तात् ऋकारान्तात् अञ्चत्यन्ताच्च मृदः स्त्रियां वर्तमानात् ङीत्यो भवति । उगित—गोमत् । गोमती। श्रेयस् । श्रेयसी। विद्वस् । विदुषी । वसो वस्योरु । भवत् । भवती । तत्रभवती । कृतवत् । कृतवती । अतिपुंस् । अतिपुंसी । ऋदितः-महत् । महती । दधत् । दधती । सुदत् । सुदती । इत्यादि । ऋतः-कर्त्री। हर्त्री । धात्री। भर्त्री। भाक्त्री। पवित्री। सवित्री। क्रोष्ट्री।

---

१। अस्य स्थाने अजाद्यतष्टाप् । ३ । १ । ४ । इति सूत्रं ।
२ । अस्य स्थाने—उगिदृतां ङी । ३ । १ । ६ । इति सूत्रं ।

इत्यादि। नः-राज्ञी। तक्ष्णी। दंडिनी। छत्रिणी। करिणी। ब्राह्मणी। इत्यादि। अञ्चोः-प्राची। प्राञ्ची। उदीची। अमुमुईची। तिरश्ची। इत्यादि।

३६२। नेन्स्वस्रादेः। ३। १। ७। इलसंज्ञकेभ्यः स्वस्रादिभ्यश्च स्त्रियां यदुक्तं तन्न भवति। पञ्च रोहिण्यः। सप्त कुमार्यः। नान्तात् ङीप्राप्तः टाप् च न। स्वसा। परमस्वसा। सुस्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः।

३६३। मनो डाप्च। ३। १। ८। मन्नंतात् मृदः स्त्रियां वर्तमानात् डाप् भवति न ङीश्च। एवं द्वैरूप्यं। डकारष्टिलार्थः। पकारः समान्यग्रहणविघातार्थः। दामा। दामे। दामाः। दामा। दामानौ। दामानः। पामा। पामे। पामाः। पामानौ। पामानः। एवं सीमन्अतिमहिमन्नित्यादि।

३६४ अनश्च यात्। ३। १। ६। अनतांच्च बसान्मृदः स्त्रियां वर्तमानान्मृदः डाप् भवति न ङीश्च। शोभनं पर्व यस्यास्तिथेः सा सुपर्वा। सुपर्वे। सुपर्वाः। सुपर्वाणौ। सुपर्वाणः। प्रियश्वा। प्रियश्वे। प्रियश्वाः। प्रियश्वानौ। प्रियश्वानः। सुधर्मा। सुधर्मे। सुधर्माः। सुधर्मा। सुधर्माणौ। सुधर्माणः। प्रियधर्मा। प्रियधर्मे। प्रियधर्माः। प्रियधर्मा। प्रियधर्माणौ। प्रियधर्माणः। इत्यादि।

३६५। पादो वा। ३।१।१५। पाच्छब्दांतान्मृदः स्त्रियां वा ङीर्भवति। पूर्ववद् पद्भावः। द्विपदी। द्विपात्। त्रिपदी। त्रिपाद्।

३६६। टाबृचि। ३।१ ।१६। पाच्छब्दाद् ऋचि स्त्रियां टाप् भवति। द्विपदा ऋक्। त्रिपदा ऋक्। अतः "अनीच." इति वर्तमाने—

३६७। वयस्यनंत्ये। ३। १। २४। वयो बाल्यादिस्तस्मिन् अनंत्येऽचरमे वर्तमानादतोऽनीचो मृदस्त्रियां ङीर्भवति। ऐः ङ्यामित्यकारस्य खं। कुमारी। किशोरी। वधूटी। चिरंटी। तरुणी। कलमी। अनंत्ये इति किं? वृद्धा। स्थविरा। अत इति किं? शिशुः। अनीचः इति किं? प्रियकुमारा।

३६८। रात्। ३। १। २५। रसंज्ञकादतो मृदः स्त्रियां वर्तमानात् ङीर्भवति। पंचपूली। दशमूली। पंचखट्वी। दशखट्वी। पुरुषात्प्रमाणे वेत्यतो वेत्यनुवर्तमाने—

३६९। गुणोक्तोरुतोऽखरुस्फोङः। ३। १। ३०। खरुस्फोङ्वर्जितात् उकारांतात् गुणवाचिनो वा ङीर्भवति। पटुः, पट्वी। मृदुः, मृद्वी। पृदुः, पृद्वी। गुरुः, गुर्वी। गुणोक्तेरिति किं? आखुरियं। उत इति किं? शुचिरियं। असरुस्फोङः इति किं? खरुरियं। पांडुरियं।

३७०। इतोऽक्तेः। ३। १। ३२। क्त्यंतवर्जिताद्रिकारांतात्कृतः स्त्रियां वा ङीत्यो भवति। भूमिः, भूमी। धूलिः। धूली। अंगुलिः। अङ्गुली। सार्मिः, सार्मी। शुचिः। शुची। पदतिः, पदंती। इत्यादि। इत इति किं? हानुः। अक्तेरिति किं? कृतिः।

३७१ । [1]पुंयोगादज्येष्ठादिभ्यः ।३। १ । ४३ । पुमान् यस्मिन् सति पुंस्केत्युच्यते । पुंयोगाद्धेतोः पुंवाचकात्कृतः स्त्रियां ङीत्यो भवति ज्येष्ठप्रकारान् वर्जयित्वा । प्रष्ठस्य भार्या प्रष्ठी । प्रचरी । गणकी । महामात्री । एते प्रष्ठादयः पुंयोगाद्भार्यायां वर्तंते । अज्येष्ठादिभ्य इति किं ? ज्येष्ठस्य भार्या ज्येष्ठा । कनिष्ठा । मध्यमा । गोपालिका । पशुपालिका ।

३७२ । जातेरयोङ्शूद्रात्[2] । ३ । १ । ३३ । यकारोङ्शूद्रवर्जितात् जातिवाचिनो मृदः स्त्रियां वर्तमानादतो ङीत्यो भवति । कुक्कुटी । मयूरी । व्याघ्री । कच्छपी । ब्राह्मणी । वृषली । नटी । सारसी । वानरी । नारी । सिंही । चक्रवाकी । गर्दभी । अयोङ्शूद्रादिति किं ? इभ्या । क्षत्रिया । शूद्रा । अत इति किं ? तित्तिरिः । आखुः ।

३७३ । सख्य[3]शिश्वीनार्यः । ३ । १ । ६९ । सखी अशिश्वी नारी इत्येते शब्दाः निपात्यते । सखिशब्दादितोक्तेरिति विकल्पेन ङीत्ये प्राप्ते सहत्वेन वर्तने इति सखशब्दाद्वापि च प्राप्ते ङीत्यो निपात्यः । सखीयं । नास्याः शिशुरस्तीति वसे ङीत्यः । अशिश्वी । नृनरयोर्ङीत्यः । नारित्यय चादेशः । नारी स्त्री । ङीत्यातः गौरीशब्दवन्नेया ।

---

१ । अस्य स्थाने—पुंयोगादाख्योरगोपालकादेः । ३ । १ । ३८ । इति सूत्रं ।

२ । अस्मिन् सूत्रे "अशूद्रात्" इति नास्ति महावृत्तौ ।

३ । अस्मिन् सूत्रे "नार्य" इति नास्ति ।

३७४ । ऊङुतोऽयोः । ३ । १ । ७६ । युशब्दवर्जितादुकारान्तात् मृदः जातिवाचिनः स्त्रियामूङ्त्यो भवति । कुरूः । इक्ष्वाकूः । ब्रह्मबन्धूः । वीरबन्धूः । अयोरिति किं ? अध्वर्युरियं ।

३७५ । श्वश्रूः । ३ । १ । ७८ । श्वश्रूरिति निपात्यते । श्वशुरशब्दस्य पुंयोगलक्षणे ङीप्रासे अकारोकारयोः समूङ्त्यश्च निपात्यः । श्वशुरस्य भार्या श्वश्रूः ।

३७६ । ऊरुत्योरिवे । ३ । १ । ७९ । ऊरुत्तरपदादिवार्थे वर्तमाने स्त्रियां ऊत्यो भवति । करभाविव ऊरू यस्याः सा करभोरूः । कदलीस्तंभोरूः । ऊरुत्योरिति किं ? हस्तस्वाम्यूरुः । इव इति किं ? पीनोरुः ।

३७७ । यूनस्तिः । ३ । १ । १८२ । युवनित्येतस्मात् स्त्रियां तिरित्ययं त्यो भवति । मृदंते स्वं । युवतिः । मतिदभेयं ।

इति स्त्रीत्याः

संपूर्णा. ।

---

## अथ विभक्त्यर्थः ।

कस्मिन्नर्थे वाः ।—

३७८ । मिडेकार्थे वाः । १ । ४ । ६५ । मिडंतेन पदेन एकार्थे समानार्थे वर्तमानात् ङ्याप्मृदो वा विभक्ती भवति । पूर्ववदेको द्विर्बहुश्चेति संज्ञाः । साधने स्वार्थे इति न

---

१ । अस्य स्थाने—ऊङुतः । ३ । १ । ५६ । इति सूत्रं ।

नियमः । उजकाराविती । वीरः । वीरौ । वीराः । देवः । देवौ । देवाः । कृपा । कृपे । कृपाः । वामोरूः । वामोर्वौ । वामोर्वः । नौ । नावौ । नावः । तीर्थं । तीर्थे । तीर्थानि । तत्वविद् । तत्वविदौ । तत्वविदः । इत्यादि । यथासंभवं क्रिया च योज्या ।

३७९ । संबोधने बोध्यं । १ । ४ । ६६ । संबोधने विहितायाः वायाः बोध्यमिति संज्ञा भवति । तच्च बोध्यांतं पदं गम्यमानक्रियापेक्षया मिडैकार्थं भवति । देवदत्त व्रजाम्यहमित्यादौ तिष्ठ न व्रज त्वमेहि इत्यादिका हि क्रिया गम्यते । क्रियाविशेषणमेतत् । तत्र क्रियाप्राधान्ये सति उपाधावित्यधिकारेण मृदर्थातिरेकात् तायां प्राप्तायां सत्यां वचनमित्येके । एवं जिनदत्त एहि । गुरुदत्त तत्रैव तिष्ठ । अरे विश्वमित्र मागाः । तात मुंच्व । शिशो जैनेंद्रमधीष्व । गौर्याहि । द्विवचने-हंसौ रमेथां । स्तनौ वर्तेथां । कुमारौ स्वैरं क्रीडतं । कोकिलौ कोकूयेथां । बहुवचने-आर्याः श्रोतुमागच्छत । पुत्राः संपद्यध्वे । द्रुतं तपस्विनः क्षमध्वं । पादपाः फलत । इत्यादि नेयं ।

क्व पुनरिब् भवति-

३८० । कर्मणीप् । १ । ४ । १ । क्रियते साध्यते इति कर्म क्रियासाधनं । तत् त्रिविधं । निर्वर्त्यं विकार्यं प्राप्यं चेति । तत्र कर्मणि इप् विभक्ती भवति । कुम्भं करोति । शरं लुनाति । आदित्यं पश्यति । तत् त्रिविधमपि पुनस्त्रिविधं । ईप्सितमनीप्सितमुदासीनं चेति । गुडं भक्षयति । अहिं लंघयति । वने व्याघ्रं

पश्यति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । पुनस्तद् द्विविधमपि मुख्यममुख्यं चेति । अजां नयति ग्रामं । गां दोग्धि पयः । पुनः सप्तधा च । तदुक्तं-

प्राप्यं विषयभूतं च निर्वर्त्यं विक्रियात्मकं ।

कर्तुश्च क्रियया चाप्यमीप्सितानीप्सितेतरत् ॥१॥ इति ।

क्रियते कटः । कृतः कटः । शत्यः कटः । प्रासादको ग्राम इत्यत्र भिड्कृत्हत्तैरविहिते ऽभिधेयाभावान्मिक्रार्थत्वाच्च न भवति । प्रधानं चाभिहितमिति ।

३८१ । [1]हांतरांतरेणातिधिङ्निकषासमयाभिश्रोपाधौ । १ । ४ । २ । हा अन्तरा अन्तरेण अति धिक् निकषा समया इत्येतैर्भिसंज्ञकैर्योगे उपाधौ परार्थे द्याम्भदः इव् विभक्ती भवति । परार्थमुपकारकं विशेषणं अप्रधानं । प्रधानं विशेष्यमुपकार्यं । यदर्थमन्यदुपाधीयते स उपाधिः । दशाविदौ । हा देवदत्तं वर्तयते व्याधिः । अंतरा निषधं नीलं च विदेहाः । अन्तरेण पुरुषकारं न किंचित् । अतिवृद्धं कुरून्महद्बलं । धिग् देवदत्तमयशः प्रवृद्धं । निकषा पर्वबमती । समया ग्रामं ग्रामाः । हा तात धिङ् मातरित्यादौ संबोधनतया विवक्षा न हादियोगे बाधा इति नेब् भवति । चकारोऽनुक्तसमुच्चयार्थस्तेन बुभुक्षितं न प्रतिभाति किंचित् । बुभुक्षितं मद्रे प्रतिभाति यत्त्वामित्यादि सिद्धं ।

---

१ । अस्य स्थाने महावृत्तौ वार्तिकमुपलभ्यते । अंतरांतरेण योगे । १ । ४ । ३ । इति सूत्रं च ।

३८२। [1]पर्यभिसर्वोभयैस्तस्यैः । १ । ४ । ३ । परि अभि सर्व उभय इत्येतैः शब्दैः तस्त्यांतैर्योगे उपाधौ इब् भवति । परितो ग्रामं वसति । अभितो ग्रामं । सर्वतो ग्रामं । उभयतो ग्रामं वनानि।उपाधाविति किं ? प्रधाने वनादौ माभूत्।

३८३ । द्विरुक्तैरधोऽभि[2]: । १ । ४ । ४ । द्विरुक्तैः कृताद्वित्वैः अधोध्युपरिभिः शब्दैर्योगे उपाधौ इब् विभक्ती भवति । अधोधोग्रामं ग्रामाः । अध्यधिग्रामं ग्रामाः । उपर्युपरि ग्रामं ग्रामाः । द्विरुक्तैरिति किं ? उपरि शिरसः शिखा ।

३८४ । [3]कालाध्वन्यभेदे । १ । ४ । ५ । काले अध्वनि च उपाधौ वर्तमानात् ङ्याम्मृदः अभेदे अत्यंतसंयोगे द्रव्यादिना योगे इब् विभक्ती भवति । मासं गुडापूपाः । क्रोशं पर्वतः । अत्र द्रव्येनाभेदः । मासं कल्याणी । क्रोशं कुटिला नदी । अत्र गुणेनाभेदः । मासमधीते । क्रोशमधीते । अत्र क्रियाऽभेदः । ताया ईपो वा प्राप्तौ—

३८५ । कर्मैवाधिशीङ्स्थासः । १। २।४० । अधिपूर्वाणां शीङ् स्था आस इत्येतेषां आधारो यस्तत्कारकं कर्म संज्ञमेव भवति । ग्राममधिशेते । पर्वतमधितिष्ठति । प्रासादमध्यास्ते॥ क्वपुनर्मा विभक्ती भवति । संज्ञो मा दे, इत्यनुवर्तमाने-

---

१ । अस्य स्थाने वार्तिकं महावृत्तौ ।

२ । अस्यापि स्थाने वार्तिकं ।

३ । अस्य स्थाने कालाध्वन्यविच्छेदे । १ । ४ । ४ । इति सूत्रं ।

३८६ । **कर्तृकरणे**[1] । १ । ४ । ३२ । कर्तरि करणे च कारके उपाधौ भा विभक्ती भवति । कर्तरि-देवदत्तेन कृतं । गुरुदत्तेन भुक्तं । जायाभ्यां पीड्यते निस्वः । कन्याभ्यां कम्प्यते बुधः । शत्रुभिः महता मूर्खः । करणे-दात्रेण लुनाति।परशुना छिनत्ति।लोचनाभ्यां बाधते बाला शृंगारैर्हन्यते मनः।

३८७ । [2]**प्रकृत्यादिभ्यः** । १ । ४ । ३३ । प्रकृत्यादिभ्यो भा भवति । प्रकृत्याभिरूपः । प्रायेण वैयाकरणः । गोत्रेण काश्यपः ।

३८८ । **सहार्थेन** । १ । ४ । ३४ । सहार्थेन योगे उपाधौ भा भवति । स च तुल्ययोगो विद्यमानता च । तत्र जात्यादिसंबंधे सति तुल्ययोगेवत्सेन सह गौः । पुत्रेण सहागतः । पुत्रेण सह स्थूलः । पुत्रेण सह श्रीमान् । मातृपितृभ्यां सह धनवान् । पुत्रैस्सह गार्गः । सद्यया योगे-सहैव दशभिः पुत्रैर्भारं वहति रासभी ।

३८९ । **येनांगिविकारेत्थंभावौ** । १ । ४ । ३५ । येन अंगिविकारो विकृतत्वमित्थंभावोऽनेन प्रकारेण भवनं च लक्ष्यते तस्मादुपाधौ भा भवति । अक्ष्णा काणः । पाणिना कुणिः । पादेन खंजः । शिरसा खलतिः । इत्थंभावे-अपि भवान् कमंड-

---

१ । अस्मिन् सूत्रे "भा" इत्यधिकं महावृत्तौ ।

२ । अस्य स्थाने प्रकृत्यादिभ्य उपसंख्यानमिति वार्त्तिकं तच्च कर्तृकरणे भा । १ । ४ । ३२ । इत्यस्मिन् पूर्वतः भाशब्दस्यानुवृत्तौ सिद्धायां पुनर्भाग्रहणेन लभ्यते ।

लुना छात्रमद्राक्षीत् । अपि भवान् अवदाताभ्यां नयनाभ्यां कुमारमैक्षिष्ट । छत्रचामरैरर्हतं श्रद्दधाति स्म । छात्रत्वादिप्रकारमापन्नो मनुष्यः कमंडल्वादिना लक्ष्यते ।

३६० । हेतौ[1] । १ । ४ । ३६ । हेतौ वर्तमानात् ङ्याम्मृदो भा भवति । दानेन कुलं । विद्यया यशः । कन्यया शोकः । चित्ताचित्ताभ्यां परिग्रहाभ्यां क्रुश्यते लोकः । फलैर्भज्यते वृक्षः ।

३६१ । संप्रदानेऽप् । १ । ४ । २४ । संप्रदाने कारके अप् विभक्ती भवति । उपाध्यायाय गां ददाति । जिनदत्ताय कन्यां प्रयच्छति । मातरपितराभ्यां करिणं वितरति । शस्त्रेभ्यस्तोयं राति । देवदत्ताय श्लाघते । देवदत्तायापह्नुते । तुभ्यं रोचते मोदकः । मह्यं स्वादते घर्मः । देवदत्ताय शतं धारयति । देवदत्ताय राध्यति । देवदत्ताय प्रतिशृणोति । देवदत्ताय प्रतिगृह्णाति । देवदत्ताय क्रुध्यति । देवदत्ताय द्रुह्यति ।

३६२ । [2]तादर्थ्ये । १ । ४ । २५ । यन्निमित्तं किंचिद् विवक्ष्यते तदर्थः । तस्य भावस्तादर्थ्यं । तस्मिन्नर्थे अप् विभक्ती भवति । रथाय दारुः । कुण्डलाय हिरण्यं । संयमाय श्रुतं धत्ते, पुमान् धर्माय संयमं ।

---

१ । लौकिकफलसाधनयोग्यपदार्थो हेतुः कारणं निमित्तमित्यर्थांतरं ।

२ । अस्य स्थाने नास्ति सूत्रं परं – अप्तदर्थाधवलहितसुखरक्षितैः ।१।३। ३१। अनेन तदर्थेऽप्विभक्तया सवचनमेव ज्ञापकमप् विभक्ती तदर्थे भवतीति ।,,

धर्मं मोक्षाय मेधावी धनं दानाय भक्तये ॥ १ ॥

३९३। [1]**शक्तार्थनमःस्वस्तिस्वाहावषड्स्वधाहितैः। १। ४। २९।** शक्तार्थैः शब्दैः नमस्स्वस्तिस्वाहावषड्स्वधाहित इत्येतैश्च योगे उपाधौ अप् विभक्ती भवति। शक्तो जिनदत्तो देवदत्ताय। मल्लो मल्लाय प्रभवति। नमोस्तु परमेष्ठिने। स्वस्ति मातृपितृभ्यां। इन्द्राणीभ्यां स्वाहा। वषड् अग्निभ्यः। स्वधा उपाध्यायेभ्यः। हितं मातृपितृभ्यां। पस्य वा कर्तरीत्यतो वेति वर्तमाने–

३९४। [2]**भद्रक्षेमायुःशंहितार्थार्थैराशिष्यप्। १। ४। ८६।** भद्रार्थैः क्षेमार्थैरायुरार्थैः शमर्थैर्हितार्थैश्च शब्दैर्योगे उपाधौ वर्तमानात् ङ्याप्मृदोर्वाऽप्विभक्ती भवति आशीर्विषये पक्षे ता भवति। भद्रमस्तु जिनशासनाय। भद्रमस्तु जिनशासनस्य। भद्रमस्तु जैनाय। भद्रमस्तु जैनस्य। कल्याणमस्तु जैनस्य। क्षेममस्तु संघाय। क्षेममस्तु संघस्य। कुशलमस्तु संघाय। निरामयमस्तु संघाय। संघस्य वा। दीर्घमायुरस्तु भव्याय। बहुजीवितमस्तु भव्याय। भव्यस्य वा। शमस्तु प्रजाभ्यः। शुभमस्तु प्रजाभ्यः। शर्म अस्तु प्रजाभ्यः। प्रजानां वा। हितं

---

१। अस्य स्थाने—नमःस्वस्तिस्वाहास्वधालंवषड्योगे। १। ४। २६। इति।

२। अस्य स्थाने—चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः। १। ४। ७७। इति सूत्र॥

मृयान्मित्राय । पथ्यं मृयान्मित्राय । हृद्यं भूयान्मित्राय । मित्रस्य वा । अर्थो भवतु जैनाय । प्रयोजनं भवतु जैनाय । कार्यं भवतु जैनाय जैनस्य वा । क्व पुनः का—

३९५ । कापादाने । १ । ४ । ४१ । अपादाने कारके का विभक्ती भवति । ग्रामादैति । आमादागच्छति । पर्वतादवरोहति । अश्वाद्धावतः पतति । गच्छतः सार्थाद्‌वहीनः । देवदत्तो जिनदत्तादागतः । मेषौ परस्परतोऽपसर्पतः । शृगाच्छरो जायते । बीजादङ्कुरो रोहति । तस्मादात्मानं प्रतिलभमानो निःसरतीति प्रतीयते । गंगा हिमवतः प्रभवति । महाहिमवतो रोहित् प्रभवति । तत्र प्रथममुपलभ्यमाना ततो निःसरतीति प्रतीयते । कुतो भवान् । पाटलिपुत्रात् । कुतो भवानागच्छति । पाटलिपुत्रादागच्छामीति प्रतीयते । गवेधुमतः शाकास्य चतुर्षु योजनेषु । ततो निष्क्रम्य गतेषु भवतीति प्रतीयते । कार्तिक्या आग्रहायणी मासे । ततः प्रभृति मासे गते भवतीति प्रतीयते । अधर्माज्जुगुप्सते । अधर्माद्विरमति । अधर्मात् मीमांसते । धीमान् अधर्मो दुःखहेतुरिति बुद्ध्या ततो निवर्तते इति प्रतीयते । धर्मात् प्रमाद्यति । मोनमात् पराजयते । अध्ययनात्पराभवति । भावेन ततोऽन्यो निभूय निवर्तते इति प्रतीयते । व्याघ्राद्बिभेति । चौरेभ्यः त्रस्यति । चेतसः क्षोभपूर्वकं ततो निवर्तते इति प्रतीयते । चौरेभ्यः रक्षति । दस्युभ्यस्त्रायते । तदुपघातविषयप्रतिकारेण ततो निवर्तते इति प्रतीयते । यवेभ्यो गा वारयति । अकार्यात्

सुतं वारयति । कूपादंधं प्रतिषेधयति । ततो निवर्तयतीत्यर्थः । कुशूलात् पचति । आगमाच्छंसति । ततो गृहीत्वेत्यर्थः । बलाहकात् विद्युत् द्योतते । ततो निःसृत्य ज्योतिः विद्योतते । विद्योतमान वा ततो निर्द्धावतीत्यर्थः । उपाध्यायादंतर्धत्ते । उपाध्यायाल्लीयते । ततोऽदृश्यतयाऽपैतीत्यर्थः। माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः। देवदत्ताज्जिनदत्तः पटुः। अयमस्माद्विलीयतेधिकः । अयमस्मादूनः । माथुरादयः पाटलिपुत्रकादिभिः आढ्यत्वादिना समृद्धास्ततोऽतिशयादिना धर्मेण विभक्ताः प्रतीयते । विभागश्चापायः । तद्विवक्षायामेव भवति । विवक्षांतरे तु यथाप्राप्तविभक्त्यो भवंति । शृंगं शरो जायते । अधर्मं जुगुप्सते । शत्रून् पराजयते । ग्रंथिकस्य शृणोति । चौराणां बिभेतीत्यादि ।

३६६ । ल्यब्लोपे कर्माधारे । १ । ४ । ४२ । ल्यल्लोपे सति कर्मण्याधारे च कारके का भवति । प्रासादात्प्रेक्षते । आसनात् प्रेक्षते । यागात् प्रेक्षते । अत एव वचनात् ल्यल्लोपं द्रष्टव्यं । ल्यल्लोप इति किं ? प्रासादमारुह्य प्रेक्षते । आसने निविश्य प्रेक्षते । कर्माधारे इति किं ? पात्राय प्रदाय गतः ।

३६७ । दिक्शब्दान्यार्थाञ्चुदुत्वाहीतराराद्बहिर्युक्ते । १ । ४ । ४३ । दिक्शब्दैरन्यार्थैरञ्चुषु च आहि इतर आरात् बहिस् इत्येतैः शब्दैर्युक्ते उपार्थे का विभक्ती भवति । इह दृष्टाः दिक्शब्दाः इति देशकालादिवृत्तावपि दिक्शब्दा एव अत एव शब्दशब्दोपादानं । पूर्वो

ग्रामात्। अपरो ग्रामात्। पूर्वो, वसंतात् । अपरो वसंतात्। अन्यार्थैः--अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरो देवदत्तात् । अञ्चुत्--प्राग्ग्रामात् । प्रत्यग्ग्रामात् । अवाग् ग्रामात् । उदग्ग्रामात् । आ-दक्षिणा ग्रामात् । उत्तरा ग्रामात्। आहि-दक्षिणाहि ग्रामात् । उत्तराहि ग्रामात्। इतर-इतरो देवदत्तात्। अस्य द्वितीय इत्यर्थः । आरात्-आरात् ग्रामात्। आरात् पर्वतात्। वहिस्--वहिर्ग्रामात्।

३६८ । **स्तोकाल्पकृच्छ्रकतिपयाकरणे का वाऽसत्त्वे । १ । ४ । ४६ ।** स्तोक अल्प कृच्छ्र इत्येतेभ्योऽसत्त्ववाचिभ्यः करणे का विभक्ती वा भवति । पक्षे भा । स्तोकान्मुक्तः, स्तोकेन मुक्त । अल्पेन मुक्तः । कृच्छ्रान्मुक्तः । कृच्छ्रेण मुक्तः । कतिपयेन मुक्तः। कतिपयान्मुक्तः। असत्त्व इति किं ? स्तोकेन विपेण हतः ।

**४००। ता शेषे। १।४।६८।** शेषेऽर्थे विशेषे ता विभक्ती भवति। कारकाणामविवक्षा शेषः। ततो मृदर्थादतिरेकः स्वस्वाम्यादिर्वा। नटस्य शृणोति। ग्रंथिकस्य शृणोति।स्वस्वामिसंबंधसमीपसमूहविकारावयवस्थानादयस्तार्थाः। राज्ञः पुरुषः। मद्राणां राजा।

प्रियाणां मधुरं वाक्यं कवीनां रसवद्वचः।
गुरूणां वचनं हृद्यं साधूनामुत्तमं वचः॥ १॥

ग्रामस्य समीपं। माषाणां राशयः। वारीणां वीचयः। देवदत्तस्य हस्तः। गवां स्थानं।

**४०१। कर्तृकर्मणोः कृति। १। ४। ७९।** कर्तरि कर्मणि च कारके ता विभक्ती भवति कृति युक्ते। भवतामासिका। भवतां शायिका। स्त्रीलिंगे भावे पर्यायार्हणोत्पत्तौ णवुरिति ण्वुः। कर्मणि-वर्षशतस्य पूरकः। पुत्रपौत्रस्य दर्शकः। अपां स्रष्टा। पुरां भेत्ता। कृति किं ? कृतपूर्वी कटं।

**४०२। [1]न भिनलोकखार्थान्वुणाम् १।४।८२।** भि त ल उ उक खार्थ आन् वुण् इत्येतेषां प्रयोगे ता विभक्ती न भवति। कर्तृकर्मणोः कृतीति ता प्राप्ता प्रतिषिध्यते। भि-ओदनं भुक्त्वा। शक्तून् पायं पायमादीयते। त-कृतः कटो देवदत्तेन। ल-ओदनं पचति। चैत्यालयं कारयामास। उः-कन्यामलंकरिष्णुः। धर्मं चिकीर्षुः। उक-ग्राममागामुकः।

---

१। अस्य स्थाने न ङितलोकखार्थतृनां। १।४।७२। इति सूत्रं।

ग्रामात् । अपरो ग्रामात्। पूर्वो. वसंतात् । अपरो वसंतात्। अन्यार्थैः—अन्यो देवदत्तात् । भिन्नो देवदत्तात् । अर्थान्तरो देवदत्तात् । अञ्चुः—प्राग्ग्रामात् । प्रत्यग्ग्रामात् । अवाग् ग्रामात् । उदग्ग्रामात् । आ-दक्षिणा ग्रामात् । उत्तरा ग्रामात् । आहि-दक्षिणाहि ग्रामात् । उत्तराहि ग्रामात् । इतर-इतरो देवदत्तात् । अस्य द्वितीय इत्यर्थः । आरात्-आरात् ग्रामात् । आरात् पर्वतात् । बहिस्—बहिर्ग्रामात् ।

३६८ । स्तोकाल्पकृच्छ्रकतिपयात्करणे का वाऽसत्त्वे । १ । ४ । ४६ । स्तोक अल्प कृच्छ्र इत्येतेभ्योऽसत्त्ववाचिभ्यः करणे का विभक्ती वा भवति । पक्षे भा । स्तोकान्मुक्तः, स्तोकेन मुक्तः । अल्पेन मुक्तः । कृच्छ्रान्मुक्त. । कृच्छ्रेण मुक्तः । कतिपयेन मुक्तः। कतिपयान्मुक्तः । असत्त्व इति किं ? स्तोकेन विषेण हतः ।

३६६ । [1]का चारादर्थैः । १ । ४ । ५२ । आरादर्थैर्दूरार्थैरंतरार्थैश्च शब्दैरसत्त्ववाचिभिर्युक्ते का भवति ता च । दूरं ग्रामात् । दूरं ग्रामस्य । दूरं ग्रामाभ्यां । दूरं ग्रामयोः । दूरं ग्रामेभ्यः । दूरं ग्रामानां । विप्रकृष्टं ग्रामात् । विप्रकृष्टं ग्रामस्य । अंतरं ग्रामात् । अंतरं ग्रामस्य । अभ्यासं ग्रामात् । अभ्यासं ग्रामस्य ।

क्व पुनस्ता—

---

१ । यस्य स्थाने-दूरांतिकार्थैस्ताच । १ । ४ । ५२ । इति सूत्रं ।

४०० । ता शेषे । १ । ४ । ६८ । शेषेऽर्थे विशेषे ता विभक्ती भवति । कारकाणामविवक्षा शेषः । ततो मृदर्थादतिरेकः स्वस्वाम्यादिर्वा । नटस्य शृणोति । अधिकस्य शृणोति ।स्वस्वामिसंबंधसमीपसमूहविकारावयवस्थानादयस्तार्थाः । राज्ञः पुरुषः । मद्राणां राजा ।

प्रियाणां मधुरं वाक्यं कवीनां रसवद्वचः ।
गुरूणां वचनं हृद्यं साधूनामुत्तमं वचः ॥ १ ॥

ग्रामस्य समीपं । माषाणां राशयः । वारीणां वीचयः । देवदत्तस्य हस्तः । गवां स्थानं ।

४०१ । कर्तृकर्मणोः कृति । १ । ४ । ७६ । कर्तरि कर्मणि च कारके ता विभक्ती भवति कृति युक्ते । भवतामासिका । भवतां शायिका । स्त्रीलिंगे भावे पर्यायार्हणोत्पत्तौ एवुरिति ण्वुः । कर्मणि-वर्षन्नतस्य पूरकः । पुत्रपौत्रस्य दर्शकः । अपां स्रष्टा । पुरां भेत्ता । कृति किं ? कृतपूर्वी कटं ।

४०२ । [1]न ञिनलोकस्वार्थानव्युणाम् १ । ४ । ८२ । ञि न ल उ उक स्वार्थ अान् वुण इत्येतेषां प्रयोगे ता विभक्ती न भवति । कर्तृकर्मणोः कृतीति ता प्राप्ता प्रतिषिध्यते । ञि-ओदनं भुक्त्वा । सक्तून् पायं पायमादीयते । त कृतः कटो देवदत्तेन । ल-ओदनं पचति । चैत्यालयं कारयामास । उः-कन्यामलंकरिष्णुः । धर्मं चिकीर्षुः । उक-ग्राममागामुकः ।

१ । अस्य स्थाने न ञितलोकस्वार्थतृनां । १।४।७२। इति सूत्रं ।

स्वार्थः-सुकरः कटो भवता । सुज्ञानं तत्त्वं भवता । आनिति प्रत्याहारः । पूङ्यजोः शान इत्यारभ्य तृनो नकारेण । लोकं पवमानः । वदिता जनापवादान् । वुण्-एषामामाहारको भजति।

क्व पुनरीप् ।

४०३ । ईबाधारे [1]च । १ । ४ । ५४ । कर्तुः कर्मणो वा क्रियाश्रयस्याधिकरणमाधारस्तत्र ईप् विभक्ती भवति । तेभ्यश्चारादर्थेभ्यः । आसने आस्ते । स्थाल्यां पचति । गंगायां घोषः । गुरौ वसति । तिलेषु तैलं । दधिषु सर्पिः ।

स्तनयोः पतिते नेत्रे नेत्रयोः पतितं मनः ।
भूभृत्सु पादपाः सन्ति सन्ति गंगासु बालुकाः ॥ १ ॥
वार्तासु वर्तते बुद्धिः प्रियधर्मकथासु न ।
अन्यस्त्रीषु मनो याति कुलस्त्रीषु न गच्छति ॥ २ ॥

तेभ्यः-दूरे ग्रामस्य । अन्तिके ग्रामस्य ।

४०४ । [2]क्तेनः कर्मणि । १ । ४ । ५५ । क्तस्य इन्विषयस्य कर्मणि ईब्विभक्ती भवति । व्याकरणमधीतमनेनेति विगृह्य-इन्पूर्वादित्यादिना इन् । अधीती व्याकरणे । आम्नीती छंदसि । परिगणिती वियद्गणिते । क्तग्रहणं किं ? कृतपूर्वी कटं । भुक्तपूर्वी ओदनं । इन्ग्रहणं किं? अतिशयितो गुरुं देवदत्तः।

---

१ । अस्य स्थाने ‘ईबधिकरणे च । १ । ४ । ४४ । इति सूत्र ।

२ । अस्य स्थाने इन्विषयस्य क्तस्य कर्मणि ईब्वक्तव्या इति वार्तिक ।

४०५ । हेतौ[1] तद्युक्ते । १ । ५ । ५६ । कर्मणा युक्ते हेतौ ईब्विभक्ती भवति ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरं ।
केशेषु चमरीं हन्ति सीम्नि सीमलको हतः ॥ १ ॥

४०६ । यद्भावाद् भावगतिः । १ । ४ । ५७ । यस्य संबंधिनो भावात् क्रियातो भावान्तरस्य गतिः प्रतिपत्तिर्भवति तस्मिन् ईब्विभक्ती भवति । गोषु दुह्यमानासु गतः । दुग्धास्वागतः । प्रसिद्धेन गोदोहनभावेन गमनभावो गम्यते । एवं नादितुर्येषु वाद्यमानेषु गतः । देवार्चनायां क्रियमाणायां आगतः । आम्रेषु कषायमानेषु गतः । पक्वेष्वागतः । जातेष्विति क्रियासामर्थ्यात् गम्यते । गम्यमानोऽपि भावः सुबुत्पत्तिनिमित्तं भवति । यथा ग्रामे वृत्तः । वृत्ते स्वास्तवि ।

४०७ । ता चानादरे । १ । ४ । ५८ । यद्भावाद्भावान्तरगतिस्तत्र ता भवति ईप् च अनादरे अवज्ञाने गम्यमाने । रुदतो लोकस्य प्राव्राजीत् । रुदति लोके प्राव्राजीत् । क्रोशतो बन्धुवर्गस्य प्राव्राजीत् । क्रोशति बन्धुवर्गे प्राव्राजीत् । किमपि बहूनां वदत्सु यमय याति साधुमार्गेण । किमपि बहुषु वदत्सु याति साधुमार्गेण । तस्मिन्नाक्रोशति तपसानादृत्य प्राव्राजीत् । कथं मनुष्याणां क्षत्रियाः शूरतमाः । अध्वगानां धावन्तः शीघ्रतमाः । गवां कृष्णाः गाः संपन्नक्षीरतमाः इति वा । जातिक्रियागुणैः

---

१ । अस्यापि स्थाने वार्तिकं ।

समुदायादेकदेशनिर्द्धारणं प्रतिसंबंधावक्तायां ता भवति आधार-विवत्तायां ईप् च। यथा वृत्तस्य शाखा । वृत्ते शाखा इति । व्यस्य वेत्यनुवर्तमाने–

४०८ । तुल्यार्थैर्भा । १ । ४ । ८८ । तुल्यार्थै-रुपमेयवचनैर्युक्ते उपाधौ उपमाने भा भवति ता च । मात्रा तुल्यः । मातुः तुल्यः । पित्रा समानः । पितुः समानः । देवदत्तेन सदृक् । देवदत्तस्य सदृक् । इप्चैनेनेति अनुवर्तमाने–

४०९ । काचर्ते । १ । ४ । ४६ । ऋतेशब्देन युक्ते का विभक्ती भवति इप्च । ऋते धर्मात्कुतः सुखम् । ऋते धर्मं कुतः सुखम् ।

४१० । प्रथग्नाना भा च[१] । १ । ४ । ७ । प्रथग्नाना इत्येताभ्यां युक्ते उपाधौ भा भवति का च । प्रथग् देवदत्तेन जिनदत्तः । प्रथग् देवदत्तात् । नाना देवदत्तेन देवदत्तात् ।

४११ । विना तिस्रः । १ । ४ । ८ । विनाशब्देन युक्ते उपाधौ अनंतरोक्ता भाकेपः विभक्तयः भवंति । विना ध्यानेन । विना ध्यानात् । विना ध्यानं कुतो मोत्तः ।

४१२ । [२]हेतौ, सर्वाःप्रायः । १ । ४ । ४० । हेता-वित्यर्थनिर्देशपरोनुर्तते । अयं तु शब्दनिर्देशः । हेतुः कारणं निमित्तं प्रयोजनमिति पर्यायः । हेतुशब्दपर्यायप्रयुक्ते हेत्वर्थे

१ । अस्य स्थाने–प्रथग्विनानानाभिर्भा वा ।१। ४ । ४१ । इति ।
२ । अस्य स्थाने का हेतौ । १ । ४ । ३५ । इति सूत्रं ।

तद्वाचिनो इयाम्सूद: सर्वाः विभक्त्यः प्रायेण भवंति। धनेन हेतुना वसति। धनाय हेतवे वसति। धनाद्धेतोर्वसति। धनस्य हेतोर्वसति। धने हेतौ वसति। एवं कारणनिमित्तप्रयोजनशब्दैरपि योगे नेयं। इत्याद्यनेकभेदभिन्नो विभक्त्यर्थोऽधिगंतव्यः।

इति विभक्त्यर्थसिद्धिः।

एवं प्रक्रियावतारे नामद्वितीयं समाप्तं।

———

## अथ समवृत्तमनुवर्णयिष्यामः॥

तच्च सुबन्तत्वात् सुबंतपदाश्रितत्वाच्च पदविधिः। स च समर्थपदसंबंधित्वात् समर्थः। तत् सामर्थ्यं द्विधा। एकार्थीभावो व्यपेक्षा च। तत्र पृथगर्थानां परस्परसंबंधिनां पदानामेकार्थीभवनमेकार्थीभावः। समासो यः पदैरुच्यते स च "स" इति सामान्यसंज्ञां लभते। ह ष य र ब द्वंद्वा इति विशेषसंज्ञाश्च। पदानां परस्परं प्रत्याकांक्षा व्यपेक्षा वाक्यविषया। तत्र हस्त्रिविधः। पूर्वपदार्थप्रधान उत्तरपदार्थप्रधान अन्यपदार्थप्रधानश्च। तत्र पूर्वपदार्थप्रधाने-अधि स्त्री। दुस् यवन। सु मद्र। निस् मक्षिका। निस् शीत। अति कमल। इति पूज्यपाद। अनु रथ। अनु रूप। सह वन। प्रति अर्थ। अनु ज्येष्ठ। सह-चक्री। सह वृत्त। सह तृण। उप कुम्भ। सह प्राभृत। इति स्थिते-अधिप्रभृतिभ्य पूर्वपदेभ्यो ङिभ्य. झेरुत्त्रित्सुव्यचनसामर्थ्यादेकवचन सु। स्त्रीशब्दात्सुप्। यवनादिभ्यस्ता। मागे चानुप्रतिपरिणा इति अर्थशब्दादिप्। चक्रतृणाभ्यां टा। प्राभृतशब्दादिप्। सुप्

सुपेत्याधिकृत्य स इति संज्ञा क्रियते । पदाश्रयं कार्यमिदमित्युदस्थितमिदं परिभाषासूत्रं ।

४१३ । समर्थः पदविधिः । १ । ३ । १ । पदयोः पदानां वा यो विधिर्विधीयते स समर्थानामेव यथा स्यादिति सति सामर्थ्ये द्विधा वाक्यपरिसमाप्तिर्लक्ष्यते लोकवत् । प्रत्येकं, समुदाये च । तत्र प्रत्येकं तावत् देवदत्तगुरुदत्तजिनदत्ताः परिधाप्यंतामित्युक्ते प्रत्येकं परिधानक्रिया परिसमाप्यते न समुदाये । गर्गाः शतं दंड्यंताम् इति राजानो हिरण्यार्थिनो भवंति समुदायेन दण्डयंति न प्रत्येकं । तथा शास्त्रेऽपि क्वचित् प्रत्येकं परिसमाप्यते । यथा आदैजैप् इत्याकारादिषु ऐप्संज्ञा न समुदाये । तथा ससंज्ञा समुदाये न प्रत्येकमिति समुदायस्य संज्ञायां सत्यां–ह इत्यधिकृत्य–

४१४ । ङिः[1] सुप्व्यृद्ध्यर्द्धयर्थाभावातीत्यसंप्रतिशब्दाख्यातिपश्चाद्यथायुगपत्संपत्साकल्यांते । १ । ३ । ५ । सुबिति सुवर्थोऽधिकरणादिः । व्यृद्धिः ऋद्धेरभावः । ऋद्धिः विभूतेराधिक्य । अर्थाभावः धर्मिणोऽसत्त्वं । अतीतिरतीतत्वं । असंप्रति उपभोगादेर्वर्तमानकालप्रतिषेधः । शब्दस्य ख्यातिः प्रथा । पश्चात् पाश्चात्यः । यथार्थाः योग्यतासादृश्यवीप्सोत्तरपदार्थानतिवृत्तयः । युगपद् युगपदर्थः । संपत् अन्यूनत्वं । साकल्यमनविशेषः । अन्तोऽभ्यासोऽवसानं च । एतेष्वर्थेषु

---

१ । अस्य स्थाने ङिः विभक्त्यभ्यासद्धर्थाभावानीत्यसप्रतिशृद्धिशब्दप्रभवपश्चाद्यथानुपूर्व्ययौगपद्यसंपत्साकल्यांतोक्तौ । १।३।५ । इति सूत्रं महावृत्तौ ।

वर्तमानं ञिसंज्ञकं सुबंतं समर्थं सुबंतेनोत्तरपदेन समर्थेन सह समस्यते । विवक्षायां दि इति विशेषसंज्ञा च भवति । तत्र वेति विकल्पाधिकाराभावादसति स्वपदवाक्ये तदर्थद्योतनोपायेनास्वपदविग्रहेणार्थः प्रदर्श्यते । स्त्रीषु वर्तते । यवनानां व्यृद्धिः । मद्राणां ऋद्धिः । मक्षिकाणामभावः । शीतस्यात्ययः । कंबलस्यायमकाल. । पूज्यपादस्य शब्दस्यातिः । रथानां पश्चात् । रूपस्य योग्यं । भतस्य सदृशं । अर्थमर्थं प्रति । ज्येष्ठाना अनतिक्रमः । चक्रिणा युगपत् । इतस्य सपत् । तृणेन सह । कुंभस्य समीपं । प्राभृतमतं कृत्वेत्येवं हसंज्ञायां सत्यां—कृद्वृत्ता इति मृतसंज्ञामतिलभात् सुपो घुमृदोरिति सुप उप् ।

४१५ । वोक्तं पूर्वं[1] । १ । ३ । १०६ । साधिकारे यथा निर्दिष्टं पूर्वं प्रयोक्तव्य । इति अधिप्रभृतीनां पूर्वनिपातः । हथ्वनि नर् । भो नर्पाति मांदश- । ड्याम्मृद इत्याधिकृत्य पुन. स्वादिविधिः ।

४१६ । हात् । १ । ४ । १३९ । हमविर्षेहचरम्य सुप उप् भवति । अधिस्त्रि ।

४१७ । नाताम्स्वकाद्याः । १ । ४ । १७० । हादकारांतात् परस्य सुप उप् न भवति अमादेशस्तु भवति अकाया' । दुर्यवनं । सुमद्रं । निर्मक्षिकं । नि-शीतं । अतिकंबलं । इति पूज्यपादं । अनुरथं । अनुरूपं । सहस्य सः । यथावित्रि

1 । यस्य स्थाने वोक्तं न्यक् । १ । ३ । ९३ । पूर्वं । १ । ३ । ९७ । इति सूत्रद्वय ।

वर्तमाने—

४१८। हेऽकाले। ४। ३। २४८। हसे सहस्य सादेशो भवति अकालवाचिनि धौ परतः। इति सादेशः। सव्रतं। प्रत्यर्थं। अनुज्येष्ठं। सचक्रि। सवृत्तं। सतृणं। उपकुंभं। समाभृतं। एवं सर्वत्र सुप्सु योज्यं।

४१९। [1]भाया वा। १। ४। १७१। हसादकारांतात् परस्या भाया अमादेशो वा भवति। दुर्यवनं कृतं। दुर्यवनेन कृतं। दुर्यवनाभ्यां, दुर्यवनैः कृतं। अकाया इति वचनात् काया अम भवति। दुर्यवनात्। दुर्यवनाभ्यां। दुर्यवनेभ्यः।

४२०। [2]ईपः। १। ४। १७२। हादकारांतात् परस्या ईपो वा अमादेशो भवति। दुर्यवनं निधेहि। दुर्यवने, दुर्यवनयोः, दुर्यवनेषु निधेहि।

४२१। स्यिनदृद्धेः। १। ४। १७३। स्यिसंज्ञाया नदीलक्षणात् ऋद्धिलक्षणाच्च हादकारांतादीपो नित्यममादेशो भवति। एकविंशति भारद्वाजं। पंचाशतगौतमं। नदी- त्रियमुनं। सप्तगोदावरं। ऋद्धि- सुमद्रं निधेहि। सुमगधं निधेहि॥ यावन् ओदन। यथा वृद्ध इति स्थिते—उभयत्र वाः। यावान् ओदन। ये ये वृद्धा इति विगृह्य—

४२२। [3]यावद्यथैचानिवे। १। ३। ६। यावद्

१। २। अनयोः स्थाने - ईबभयोर्विभाषा। १।४।१५३। इति सूत्रं महावृत्तौ।

३। यावद्यथावधृत्यसादृश्ये। १।३।६। इति सूत्रमस्य स्थाने।

यथा इत्येतौ शब्दौ सुबन्तौ एवार्थेऽनिवार्ये च गम्यमाने सुबन्तेन सह हसो भवति । प्रसक्तम्य परिमाणावधारणमेवशब्दार्थः । सादृश्याभावोऽनिवशब्दार्थः । पूर्ववदन्यत् । यावदोदनमतिथीन् भोजय । यथावृद्धं साधूनर्चय ॥ उत्तरपदार्थप्रधाने-सूप प्रति इति स्थिते– सूपशब्दाद् डम् । प्रतिशब्दात्सुः । सूपस्य मात्रा इति विगृह्य–

४२३ । प्रतिनाऽल्पे[1] । १।३।७ । प्रतिशब्देन अल्पेऽर्थे वर्तमानेन सुबन्तेन सुबन्तं पूर्वपदं समस्यते । स इति सामान्यसंज्ञा ह इति विशेषसंज्ञा भवति । पूर्ववदन्यत् । सूपप्रति । एवं शाकप्रति । घृतप्रति । इत्यादि ।

४२४ । परिणा स्यक्षशलाकाः[2] । १ । ३ । ८ । स्थिसंज्ञमक्षशब्दशलाकाशब्दौ च सुबन्तं सुबन्तेन परिणा सह समस्यते हसो भवति । स्थि- एकेनेदं न तथा वृत्तं यथाजये एकपरि । द्विपरि । त्रिपरि । चतुष्परि । अक्षेणेदं न तथा वृत्तं यथाजये अक्षपरि । शलाकया ऽेदं तथा वृत्त यथा जये शलाकापरि । परिणेति किं ? मा भूत् सुबंतमात्रेण । स्यादय इति किं ? पाशकेनेदं न तथा वृत्तं यथा जये । अन्यपदार्थप्रधाने नदीभिश्चेति वर्तमाने–

४२५ । स्यौ[3] । १।३।१८ । सुबंतं नदीवाचिभिः सुबंतैः

१ । अस्य स्थाने - स्तोके प्रतिना । १ । ३ । ७ । इति सूत्रं ।
२ । अस्य स्थाने-परिणाऽक्षशलाकासंख्याः । १।३।८ । इति सूत्रं ।
३ । अस्य स्थाने - व्यावन्यपदार्थे । १ । ३ । १८ । इति सूत्रं ।

सह हसो भवति सुविषये। प्रतिपदे नात्र संज्ञा गम्यते। इति नित्यः साविधि.। सादृश्यमात्रेणार्थकथनाय विग्रहः। उन्मत्तगंगा यस्मिन्निति उन्मत्तगंगं। लोहितगंगं। शनैर्गंगं। तूष्णींगंगं। एवं नामानो देशाः॥ केश केश। दण्ड दण्ड। इति स्थिते-सर्वतो जस्। केशाश्च केशाश्च परस्परस्य ग्रहणं यस्मिन् युद्धे। दण्डाश्च दण्डाश्चान्योन्यप्रहरणं यस्मिन् युद्धे इति विगृह्य-

४२६। [1]ग्रे ग्रहणे प्रहरणे च सरूपं युद्धे।१।३।१६। गृह्णंति यस्मिन् तत् ग्रहणं। प्रहरंति येन तत् प्रहरणं। आर्थे कर्मव्यतिहारे वर्तमाने ग्रहणे प्रहरणे च समानश्रुतिकं सुवंतं प्रत्यासत्त्या तत्रैव वर्तमानेन सुवंतेन सह हसो भवति युद्धेऽभि-धेये। पूर्ववदन्यत्। सांत इति वर्तमाने—

४२७। ग्र इच्। ४।२।२०१। आर्थे यः साविधिरुक्तः तदंत इच् स्यो भवति। चकारः तिष्ठद्ग्वादिषु इजिति विशेषणार्थः। एरित्यकारस्य खं।

४२८। इच्यात्।४।३।२६८। ग्र इजिति य इजुक्तस्तदंते घौ पूर्वस्य प्रायः आकारो भवति। ततः स्वादयः। केशेषु च केशेषु च गृहीत्वा युध्यंते तत् केशाकेशीत्युच्यते। एवं कचाकचि। दंडैश्च दंडैश्च प्रहृत्य युध्यंते तद् दंडादंडि। मुष्टामुष्टि। प्राय इति किं? अस्यसि। प्राय इत्याधिकारात् क्वचिदाकारो न भवति॥

इति हसः।

---

१। अस्य स्थाने - तत्रेदमिति सरूपे। १। ३। ८९। इति सूत्रं।

### अथ षः ।

षसो द्विप्रकारः । पूर्वपदार्थप्रधान उत्तरपदार्थप्रधानश्चेति ।
तत्र पूर्वपदार्थप्रधानो यथा- पूर्व काय इति स्थिते- पूर्वशब्दात्सुः ।
कायशब्दात् ङस् । पूर्व कायस्येति विगृह्य—

४२९ । **पूर्वापराधरोत्तरमभिन्नेनांशिना** । १ । ३ ।
६७ । अंशोऽवयव एकदेशस्तद्वान् अंशी । पूर्वादीनि सुबंतानि
अंशवाचीनि अंशिवाचिना सुबंतेनाभिन्नेन सह षसो भवति ।
पूर्ववदन्यत् । पूर्वकायः । एवमपरकायः । अधरकायः । उत्तरकाय ॥
अर्द्ध पिप्पल्या इति विगृह्य—

४३० । **अर्द्धन्नप्** । १ । ३ । ६८ । अर्द्धमित्येतन्नपुं-
सकलिंगं अंशवाचि सुबंतं सुबंतेनांशिवाचिना सह षसो भवति
न चेत्सोंऽशी भिन्नः । पूर्ववदन्यत् । स्त्रीगोर्नीच इति प्राप्ते "प्रासः
नाशीयसो वे"-इति प्रतिषिद्धः । अर्द्धपिप्पली । अर्द्धकोशातकी ।
अर्द्धखट्वा ॥ उत्तरपदार्थप्रधानो यथा- धर्म श्रित इति स्थिते-
धर्मशब्दादम् । श्रितशब्दात्सुः । धर्म श्रित इति विगृह्य—

४३१ । **[1]इप्नच्छ्रितादिभिः** । १ । ३ । २२ । इबंतं
पूर्वपदं ताभ्यां प्राप्तापन्नाभ्यां श्रितादिभिश्च सुबंतैः सह षसो
भवति । पूर्ववच्छेषं । श्रितशब्दस्य क्रियावाचित्वाद्वाच्यलिंगता ।
धर्मश्रितः । धर्मश्रिता । धर्मश्रितं । एवं दुःखातीतः । इत्यादि ॥
शंकुला खण्डवदिति स्थिते- शंकुलाशब्दाट्टा । खण्डवच्छब्दात्सुः ।

---

१ अस्य स्थाने-द्वितीया श्रितातीतपतितगतात्यस्तैः । १ । ३ । २१ ।
इति सूत्रं महावृत्तौ ।

शकुलया कृत सडवानिति विगृह्य-

४३२। [1]भा तत्कृतयार्थेनोनै । १ । ३ । २८ ।
मात मातार्थकृतार्थया गुणोक्त्या अर्थशब्देन ऊनवाचिभिश्च सह पसो वा भवति । गुणोक्तोर्विन्मतोरुप् । शकुलाखड । वृत्तौ कृतशब्दार्थोऽनर्भूत इति न कृतशब्द प्रयुज्यते । एव गिरिकाण । क्षारशुक्लः । पदपटु । धान्यार्थ । माषोन । माषविकल ॥ आत्मन् कृत । दात्र लून इति स्थिते आत्मनृछात्रशब्दाभ्या टा । कृनलूनशब्दाभ्या सु । आत्मना कृत । दात्रेण लून । इति विगृह्य-

४३३। साधनं कृता बहुलं। १ । ३ । ३०। साधन कारक क्रियानिर्वर्त्तक तद्वाचि भात पूर्वपद कृतेन सह पसो भवति बहुल। शेष पूर्ववत्। नो मृदते समिति नख। आत्मकृत। दात्रलून । एव परकृत । परशुच्छिन्न ॥ रथाय दारु । कुडलाय हिरण्य । इति विगृह्य—

४३४। [2]अप्रकृतितदर्थार्थादिभिः । १ । ३ । ३१ ।
प्रकृति परिणामि द्रव्य । तद्वाचिना सुनतेनोत्तरपदेन अर्थाद् विकृतिवाचिपूर्वपद अभत तदर्थार्थशब्देन तदादिभिश्चान्यै सह पसो भवति । अन्यत् पूर्ववद् । रथदारु । कुडलहिरण्य । एव पित्रे इद पित्रर्थं। देवाय बलि देवबलि । प्रजाभ्यो हित प्रजाहित। इत्यादि ॥ चकात् मी । चौरेभ्यो भयमिति विगृह्य—

१। अस्य स्थाने भा गणोक्त्यार्थनोनै ।१।३।२७। इति सूत्र।
२। अप् तदर्थार्थबलिहितसुखरक्षितै । १ । ३। ३१। इति सूत्र।

४३५ । का भ्यादिभिः[1] । १ । ३ । ६३ । कांतं पूर्वपदं भी इत्येवमादिभिः सुवंतैः सह षसो भवति । पूर्ववच्छेषं । वृकभीः । चौरभयं । मृत्युभयं ॥ मोक्षस्य मार्गः । स्वर्गस्य सुखमिति विगृह्य--

४३६ । ता । १ । ३ । ७० । तांतं पूर्वपदं सुपंतेन सह षसो भवति । पूर्वमिवान्यत् । मोक्षमार्गः । स्वर्गसुखं । एवं जिनधर्मः । राज्ञः पुरुषः राजपुरुषः । एव राज्ञः गोक्षीरं राजगोक्षीरं ॥ अक्षेषु शौंडः । पानेषु शौंडः इति विगृह्य—

४३७ । ईप् शौंडादिभिः[2] । १ । ३ । ३५ । ईबंतं पूर्वपदं शौंडादिभिरुत्तरपदैः सुपंतैः सह षसो भवति वा । अन्यत् पूर्ववत् । अक्षशौंडः । पानशौंडः । एवं अक्षे धूर्तः अक्षधूर्तः । इत्यादि ॥ नञ् गो । नञ् अश्व । इति स्थिते- ञकार इत् नञोऽनिति विशेषणार्थः । उभयत्रापि सुः । न गौः । न अश्वः । इति विगृह्य-

४३८ । नञ् । १ । ३ । ६५ । नञित्येतद् सुबंतं सुबंतेन सह षसो भवति ।

४३९ । नञोऽन् । ४ । ३ । २४१ । नञः अनादेशो भवति षौ परतः । अचीति पुनरनादेशसामर्थ्यात् अचि नत्व न भवति । अदोऽनञ इति निर्देशात् डमुडागमो न भवति ।

---

१ । अस्य स्थाने - का भीभिः । १ । ३ । ३७ । इति सूत्रं ।
२ । ईप् शौंडैः । १ । ३ । ३५ । इदमस्य स्थाने सूत्रं ।

अगौः । अनश्व ॥ इति सामान्यषः ॥

### अथ यसः ।

यसो द्विप्रकारः । उत्तरपदार्थप्रधानः पूर्वपदार्थप्रधानश्चेति । तत्रोत्तरपदार्थप्रधानो यथा-पूर्वं स्नातः पश्चादनुलिप्त. । इति विगृह्य-

**४४० । पूर्वकालैकसर्वजरत्पुराणनवकेवलं यश्चैकाश्रये । १ । ३ । ४२ ।** पूर्वः कालो यस्य स पूर्वकालः । तद्वाचि एक सर्व जरत् पुराण नव केवल इत्येतानि च सुबंतानि सुबतैः सह य. संज्ञः सो भवति यसश्च एकाश्रये समानाधिकरणे । पूर्ववदन्यत् । स्नातानुलिप्तः । एवं पूर्वं कृष्टः पश्चान्निधिकृतः । एकश्च स पुरुषश्च स एकपुरुषः । सर्वे च ते देवाश्च ते सर्वदेवाः । जरती च सा गौश्च सा जरद्गवी । पुराणश्च स पुरुषश्च स पुराणपुरुषः । नवं च तत् अन्नं च नवान्नं । केवलं च तत् ज्ञानं च केवलज्ञानं । यसंज्ञायां पुंवद्यजातीयदेशीय इति पुंवद्भावः । पसंज्ञायां च पेंऽगुलेरित्यधिकृत्य गोरदृधृदुपीति टः सिद्धः । नीलं च तत् उत्पलं चेति विगृह्य—

**३४१ । विशेषणं विशेष्येणेति । १ । ३ । ४८ ।** अनेकप्रकाराधारतया प्रतीतं वस्तु विशेष्यं । प्रकारांतरेभ्यो व्यावृत्यैकत्र प्रकारे व्यवस्थापनप्रवणं विशेषणं । विशेषणवाचि सुबंतं विशेष्यवाचिना सुबंतेन सह यसो भवति पसश्च एकाश्रये । पूर्वमिवान्यत् । नीलोत्पलं । एवं कृष्णतिलः । कृष्णकम्बलः । इत्यादि । कडारश्च स जैमिनिश्च स इति विगृह्ये-यसे सति नित्यं पूर्वनिपाते प्राप्ते—

४४२ । ये कडारादय[1] । १ । ३ । १२६ । यसे कडारादयः पूर्वं वा प्रयोक्तव्याः । इति विकल्पेन पूर्वनिपातः । कडारजैमिनिः । जैमिनिकडारः ॥ पूर्वपदार्थप्रधानो यथा-क्षत्रियश्च स भीरुश्च स इति विगृह्य—

४४३ । कुत्स्योऽपापा[2]णकैः । १ । ३ । ४५ । पापाणकवर्जितैः सुबंतैः अर्थात् कुत्स्यैः सह कुत्स्यवाचि सुबंतं यसो भवति यसश्च एकाश्रये । पूर्ववदन्यत् । क्षत्रियभीरुः । भिक्षुविटः । वैयाकरणखसूचीत्यादि ॥ विशेष्यत्वात् क्षत्रियादेरत्र प्राधान्यं । मयूरश्च स व्यंसकश्चेति विगृहे—

४४४ । मयूरव्यंसकादयश्च । १ । ३ । ६३ । मयूरव्यंसक इत्येवं प्रभृतयः कृतवृत्तिपूर्वनिपाता निपात्यते । मयूरव्यंसकः । एवं धातृव्यंसकः । इत्यादि ॥ इति यसः ।

### अथ रसः ।

रसस्त्रिविधः । तद्धितविषयः, सुपरः, समाहारार्थश्चेति । तत्र तद्धितविषये यथा-पंचन् कपाल इति स्थिते उभयत्रापि सुप् । पंचसु कपालेषु संस्कृतमिति विगृह्य— संस्कृतेऽर्थे तद्धितस्यण्'नद्धितः प्रागेव—

४४५ । स्यि[3]ः समाहारे च रश्चाऽज्ञौ । १।३।४४ । स्यिसंज्ञावाचि सुबंतं सुबंतेन सह यसो भवति यश्च एकाश्रये

१ अस्य स्थाने-ये कडाराः । १ । ३ । १०४ । इति सूत्रं ।
२ । अस्य स्थाने-कुत्स्यं कुत्सनैः । १ । ३ । ५८ । पापाणके कुत्स्यैः । १ । ३ । ५७ । इति सूत्रद्वयं ।
३ । अस्य स्थाने स्यिसंख्यं वा । १ । ३ । ५० । [illegible] । १ । ३ । ४७ । इति सूत्रद्वयं ।

यौ च परतः स्वद्विषये समाहारे चार्थेऽभिधेये रसंज्ञकश्च न चेत्सोयं खौ भवति । यः प्रासः । तत्रेति वर्तमाने–

४४६ । **संस्कृतं भक्ष्यः**[1] । ३ । २ । १८ । तत्रेति ईप् समर्थात् संस्कृतमित्येतस्मिन्नर्थे यथाविहितं स्यो भवति यत् तत् संकृतं भक्ष्यश्चेद्भवति । प्राग् द्रोरणं । सुप उप् । अणस्तु--

४४७ । **राद्वयनपत्ये** । ३ । १ । १०६ । रादनुवंतात् परो यः प्राग्द्वीयोऽपत्यवर्जितोऽजादिर्हृत् तस्योप् भवति । इत्युप् । ततः स्वादयः । पंचकपालः पुरोडाशः । पंचसु गुरुषु भव. पंचगुरुर्नमस्कारः ॥ द्युपरो यथा-पंचन् गो धन इति स्थिते- पंचन्गोशब्दाभ्यां जस् । धनशब्दात् सु । पंच गावो धनमस्येति विगृह्य एकार्थमिति त्रिपदो बसः । धनशब्दे यौ-पंचन्-शब्दस्य गोशब्देन षसो रसश्च । ततः पेऽङ्गुलेरिति वर्तमाने गोरहृदुपीति टः सांतः । अवादेशः । यौ च सविधि. । द्यु च सविधौ भवतीति नित्य. सविधिः । किं द्युः ?

४४८ । **उत्तरपदं द्युः** । ३ । १ । १२७। से यदुत्तरपद तत् द्युसंज्ञं भवतीति द्युः । पंचगवधन. । एवं पंच गावः प्रिया अस्येति पंचगवप्रियः । गावो रादिति टः । समाहारे- अनेकस्य कथंचिदेकत्वं समाहारः । तदर्थे यथा-पंचानां पूलानां समाहार. इति विगृह्य समाहारार्थे यसे रसे च सुप उप् । रः समाहारे''स्त्रय पात्रायादिति स्त्रीलिंगत्वात् रादिति टीः । येड्योमित्यकारस्य स

---

१ । अस्य स्थाने संस्कृतं भक्षाः । ३ । २ । ११ । सूत्रं ।

ततः स्वादिः । पंचपूली । दशपूली । षण्णगरी । इत्यादि ॥

इति रसः ।

---

## अथ बसः ।

समस्चतुर्विधः । पूर्वपदार्थप्रधान उत्तरपदार्थप्रधान उभयपदार्थ प्रधान अन्यपदार्थप्रधानश्चेति । तत्र पूर्वपदार्थप्रधानो यथा-आसन्नाः दशानामिति विगृह्य-अवाच्यार्थेऽनेकं बामिति वर्तमाने-

४४६ । संख्येये[1] स्यिनासन्नादूराधिकाध्यर्द्धार्द्धादिटड् च । १ । ३ । ८२ । आसन्न अदूर अधिक अध्यर्द्ध इत्येतानि अर्द्धपूर्वडडंतानि क्रिसंज्ञानि च सुबन्तानि संख्येये वर्तमानेन स्यिसंज्ञावाचिना सह बसो भवति । पूर्ववदन्यत् । स्यिधाडवह्रोरिति डः । डिति टेः खं । ततः स्वादयः । आसन्नदशाः । एवं अदूरा दशानामिमे अदूरदशाः । अधिकदशाः । इत्यादि । उत्तरपदार्थप्रधाने यथा- द्वि दशन् इति स्थिते-द्विशब्दात् कालाध्वन्यभेदे इतीप् । दशन्शब्दाज्जस् । द्वौ वारौ दशेति विगृह्य-

४५० । स्यि[2]: सुज्वार्थे । १ । ३ । ६७ । सुजर्थे वाऽर्थे च स्यिसंज्ञावाचि सुबंतं संख्येये वर्तमानेन स्यिसंज्ञावा-

---

१ अस्य स्थाने संख्येये संख्यया व्ययासन्नादूरसंख्ये । १ । ३ । ८७ । इति योगो महावृत्तौ ।

२ । अस्य स्थाने नास्त्यपरं सूत्रं परसूत्रमेव सूत्रे संख्यासद-ज्ञात् सो विहितः ।

चिना सुबंतेन वसो भवति । सुजर्थो वारः काल इत्युच्यते स चाभ्यावर्तमानया क्रियया सह संबध्यमानो द्विः संख्यायते अत्र भवतिक्रियाभ्यावृत्तिः। दशभावो हि द्विरावर्तते । द्व्यर्थ पुनः पुनः पाठ आवृत्तिः। पूर्ववदन्यत् । स्यिवादबहोरिति डः डिति टेः खं च । वसस्याश्रयलिंगत्वात् त्रिष्वपि लिंगेषु नेया द्विदशाः पुमांसः । द्विदशाः स्त्रियः । द्विदशानि वस्त्राणि । वि तिरित्यर्थः । एवं त्रीन् वारान् दश त्रिदशाः । चतुरो वारान् द चतुर्दशाः । पंचदशाः । इत्यादि ॥ उभयपदार्थप्रधानो यथा द्विशब्दादेः । त्रिशब्दाज्जस् । द्वौ वा त्रयो वा इति विगृ सुज्वार्थे इत्यनेन वार्थे संशये विकल्पे वा वसो भवति । पू वच्छेपं । द्वित्राः स्त्रियः । द्वित्राणि वस्त्राणि । अत्र संशय्यमा विकल्प्यमाना वा पूर्वापरपदार्था इत्यर्थः । अन्यपदार्थप्रधा यथा-सु धर्म इति उभयत्र सुः । शोभनो धर्मो यस्येति विगृह-

४५१ । [1]एकार्थं । १ । ३ । ६० । एकः समानोऽन्य द्रव्यमधिकरणमस्य तदेकार्थं समानाधिकरणमनेकं सुबन्तं भव अवान्यार्थेऽभिधेये । ततः सुबुप् । गुणस्त्रिष्विबे इति सुप

---

१ । अस्य स्थाने नास्ति किमपि सूत्रं । परं ईन्विशेष्ये बहुव्री ।। १ । ३ । १०१ । अनेन बहुव्रीहौ ईनस्य पूर्वनिपातो भा ति व्यधिकरणेऽपि बहुव्रीहिर्भवतीति महावृत्तौ । अत्र तु अने समानाधिकरणः । यथान्यार्थेनेकं वमित्यनेन व्यधिकरणत्वेन कं काल इत्यादयः सिध्यंति । एवं च ईनस्य पूर्वनिपातविधायकं शास्त्र प्रत्याख्यातं ।

ब्दस्य पूर्वनिपातः । स्वांगाद्वेक्षिसक्थ्न इति वर्तमाने धर्मात् केव-
लादनिति बसांतोऽन् । मत्येत्याधिकृत्य-एरित्यत्वं । सुधर्मा ।
सुधर्माणौ । सुधर्माणः । इत्यादि सुचर्मन्शब्दवत् । एवमनन्त-
धर्मेत्यादयः । दर्शनीया भार्या अस्य इति विगृह्य बसः सुप्लुप् ।
पुंवादिति वर्तमाने—

४५२ । [1]स्त्र्युक्तपुंस्कादनूङेकार्थेऽडङ्प्रियादौ
स्त्रियां । ४ । ३ । १८८ । उक्तपुंस्काद् परो यः स्त्र्यः
ऊङ्वर्जितस्तदंतशब्दः स्त्रियां वर्तमाने डडंतप्रियादिवर्जिते
धावेकार्थे समानाधिकरणे पुंवद् पुंलिंगवद् भवति । इति दर्शनीया
शब्दस्य पुंभावः । मो नपीति वर्तमाने—

४५३ । स्त्रीगोर्नीचः । १ । १ । १३ । स्त्र्यंतस्य
गोशब्दस्य च न्यग्भूतस्य मो भवति । इति भार्याशब्दस्य मः ।
दर्शनीयभार्यः । एवं शोभनभार्यः । चित्रा गावो यस्य स
चित्रगुः । शबलगुः । इत्यादि । प्राप्तमुदकं यं । ऊढो रथो येन ।
उपहृता बलिर्यस्मै । उद्धृत ओदनो यस्याः । आसिर्द्वितीयो यस्य ।
वीराः पुरुषाः यस्मिन् । इति विगृह्य अवान्यार्थेषु बसः । पूर्व-
वच्छेषं । प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतबलि-
र्यक्षी । उद्धृतौदना स्थाली । अत्र से कृते टाप् । असिद्वितीयः
पुरुषः । वीरपुरुषो ग्रामः । अत्र शेषाद्वेति कप्सांतः । पकारो

---

१ । अस्मिन् सूत्रे पुंवदित्यधिकं । अत्रतु पुंवदिति भिन्नमधि-
कारसूत्रं ।

न कपीति विशेषणार्थः । उच्चैर्मुखं यस्य । अस्ति क्षीरं यस्याः इति विगृह्य—

४५४ । भ्रि[१] । १ । ३ । ९१ । भ्रिसंज्ञं सुबंतं वसो भवति । उच्चैर्मुखः पुरुषः । अस्तिक्षीरा गौः । परचाद्वाप् । कण्ठे कालो यस्येति विगृह्य- वैयधिकरणेऽपि—

४५५ । [२]अंचान्यार्थेऽनेकं । १ । ३ । ८९ । याविभक्त्यन्तवर्जितस्य अन्यपदार्थस्यार्थेऽनेकं सुबंतं वसंज्ञः यो भवति ।

४५६ । ईपोद्ल्लः । ४ । ३ । १५५ । अकारांतात् हलंताच्च परस्या ईपोऽनुप् भवति वौ परतः । इत्यनुप् । कण्ठेकालः । उरसिलोमा । धर्मात्केवलादनिति वचनाद् त्रिपदोऽपि वसो भवति । त्रयः कालाः गोचरा यस्य तत् त्रिकालगोचरं द्रव्यं । एवं लोहिततक्षकमियः पुरुषः ॥ इति वसः ।

---

## अथ द्वंद्वः ।

द्वंद्वो द्विप्रकारः । इतरेतरयोगः समाहारश्चेति । तत्र पृथग्भूतानामर्थानामेककालविषयाक्रियाभिसंबंधेनान्योन्यानतिक्रमलक्षणोऽवयवप्रधान इतरेतरयोगः । स एव समुदायप्रधानः समाहारः । तद्यथा- प्लक्षश्च न्यग्रोधश्चेति विगृह्य—

४५७ । चार्थे द्वंद्वः । १ । ३ । ९६ । चशब्दोर्थश्चार्थस्तस्मिन्नर्थे वर्तमानमनेकं सुबन्तं द्वन्द्वसंज्ञः सो भवति । चत्वार-

---

१ । अस्य स्थाने वार्तिकं ।

२ । अस्य स्थाने अन्यपदार्थेऽनेकं यं । १ । ३ । ८८। इति सूत्र।

श्चार्थाः । तत्र क्रमयौगपद्याभ्यामनियतानामर्थानामेकस्मिन् अध्यारोपः समुच्चयः । गामश्वं पुरुषं पशुमहरहर्नयमानो वैवस्वतो न तृप्यति मद्येनेव दुर्मदीति । प्रधानाप्रधानविवक्षायामन्वाचयः भो पटो भिक्षामट यदि पश्यासि गां नयेति यथा । तयोश्चां- तरेण प्रयोगादसामर्थ्याच्च वृत्तिर्नास्तीति । इतरेतरयोगे द्वन्द्वः । सुलुप् । द्वंद्वे घिस्त्वेकमिति वर्तमाने—

४५८ । अल्पाच्तरं । १ । ३ । ११४ । द्वंद्वे से अल्पाच्तरं पदमेकं पूर्वं प्रयोक्तव्यं । इति प्लक्षशब्दस्य पूर्वनिपातः ।

४५९ । द्वंद्वे युवल्लिंगं । १ । ४ । ११९ । द्वंद्वेऽवयवप्रधानलक्षणे योरिव लिंगं भवति । इति पुंलिंगं । द्व्यर्थत्वाद् द्विवचनं । प्लक्षन्यग्रोधौ । एवं बहुत्वविवक्षायां बहुवचनं । धवखदिरपलाशाः । समाहारविवक्षायां पाणी च पादौ चेति विग्रह—

४६० । [1]प्राणितूर्यांगद्वंद्व एकवत्तुल्यं । १।४।९० । प्राण्यंगानां तूर्यांगानां च तुल्यानां द्वंद्व एकवद् भवति ।

४६१ । [2]द्वंद्वे घिस्त्वेकं । १ । ३ । ११२ । द्वंद्वे मे घिसंज्ञं सुसंज्ञं चैकं प्रयोक्तव्यं । इति पाणिशब्दस्य पूर्वप्रयोगः ।

४६२ । स नप् । १ । ४ । १०६ । स एकवद्भावो नपुंसकलिंगो भवति । इति नपुंसकलिंगं । पाणिपादं । एवं दंतोष्ठं ।

---

१ । अस्य स्थाने-प्राणितूर्यसेनांगानां द्वंद्व एकवत् ।१।४।७८ इति ।
२ । अस्य स्थाने द्वंद्वे सु । १ । ३ । ९८ । इति सूत्रं ।

शसपटह । भेरिमृदग ॥ कुड च वदर चेति विगृह्य—

४६३ । अप्राणिजाते । १ । ४ । ६४ । प्राणिवर्जित द्रव्यजातिवाचिना द्वद्वो एकवद्भवति । पूर्ववदन्यत् । कुडवदर । धानाशष्कुलि ॥ वदराणि च आमलकानि चेति विगृह्य—

४६४ । [1]फलसेनांगक्षुद्रजीवं बह्वर्थांशं ।१।४।६६। बहवोऽर्था अभिधेया येषा ते वह्वर्था । बह्वर्था अशा यस्य स । फलाश सेनागाश क्षुद्रजीवश्च बह्वर्थांशो द्वद्व एकवद्भवति । पूर्ववदन्यत् । वदरामलक । एव अश्वाश्च रथाश्च अश्वरथ । यूकाश्च रिक्षाश्च यूकारिक्ष ॥ प्लक्षाश्च न्यग्रोधाश्चेति विगृह्य—

४६५ । [3]वा तरुमृगतृणधान्यपाक्षि । १।४।११० । तरुमृगतृणधान्यपक्षिवाचिनो ये बह्वर्थांशा तेषा बह्वर्थांशाना द्वद्व एकवद्भवति वा । प्लक्षन्यग्रोध । प्लक्षन्यग्रोधा । धव खदिर । धवखदिरा । एव रुरुपृषत । रुरुपृषता । कुशकाश । कुशकाशा । व्रीहियव । व्रीहियवा । हसचक्रवाक । हसचक्रवाका । बह्वर्थांशामिति किं [2] प्लक्षन्यग्रोधौ ॥ दधि च पय श्चेति विगृह्य—

४६६ । न दधिपयआदिः [3]। १ । ४ । १०३ ।

---

१ । अस्य स्थाने नास्ति सूत्र परं वा तरुमृगे यादिसूत्रे येति व्यवस्थितविभाषात कार्यसिद्धि । २ । अस्य स्थाने या तरुमृगतृणधान्यव्यजनपश्वश्ववडवपूर्वापराधरोत्तरपक्षिण । १।४।८८। इति सूत्र । ३ । अत्र आदीनीति पाठो महावृत्तौ ।

दधिपय इत्येवमादिः कृतद्वंद्वो नैकवद्भवति ॥ पूर्ववच्छेषं। दधिपयसी। दीक्षातपसी। आद्यवसाने।

इति द्वंद्वः।

सुबन्तसमुदायेऽपि सविधिर्यथा— त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वाधिगमसमर्थविज्ञानविशेषसमर्थः। त्रयः काला गोचरा येषां ते त्रिकालगोचराः। इति त्रिपदो बसः। न विद्यतेऽतो येषां ते अनंताः। इत्येषोऽपि बसः। अनंताश्च ते पर्यायाश्च ते अनंतपर्यायाः। इति विशेषणयसः। त्रिकालगोचराश्च ते अनंतपर्यायाश्च ते त्रिकालगोचरानंतपर्यायाः। इत्येषोऽपि यसः। त्रिकालगोचरानंतपर्यायैरुपचितानि त्रिकालगोचरानंतपर्यायोपचितानि। इति साधनं कृतेति यसः। जीव आदिर्येषां तानि जीवादीनि। इति बसः। तानि च तानि द्रव्याणि च तानि जीवादिद्रव्याणि। इति यसः। त्रिकालगोचरानंतपर्यायोपचितानि च तानि जीवादिद्रव्याणि च तानि त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्याणि। इति यसः। त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्याणां तत्त्वं त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वं। इति षसः। त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वस्याधिगमः त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वाधिगमः। इति तासः। त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वाधिगमस्य समर्थः। त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वाधिगमसमर्थः। इत्येषोऽपि तासः। विज्ञानमेव विशेषः विज्ञानविशेषः। इति यसः। त्रिकालगोच-

रानंतपर्यायोपचितजीवादिद्रव्यतत्त्वाधिगमसमर्थः विज्ञानविशेषो यस्य स भवति त्रिकालगोचरानंतपर्यायोपचितजीवादिद्रव्यतत्त्वाधिगमसमर्थविज्ञानविशेषः। इति बस.। कोऽसौ श्रीवर्द्धमानः। एवं भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरप्रभाप्रहतमिथ्यावादांधकारः। भव्याश्च ते जनाश्च ते भव्यजनाः। इति यसः।, कमलानां आकराः कमलाकराः। इति तासः। भव्यजनाश्च ते कमलाकराश्च ते भव्यजनकमलाकराः। इति यसः। भव्यजनकमलाकराणां अवबोधनं भव्यजनकमलाकरावबोधनं। इति तास.। भव्यजनकमलाकरावबोधनं कुर्वंतीत्येवं शीलाः भव्यजनकमलाकरावबोधनकराः। इति थागमिडिति यसः। नयाश्च ते कराश्च ते नयकराः। इति यसः। भव्यजनकमलाकरावबोधनकरा नयकराः यस्य स भव्यजनकमलाकरावबोधनकरनयकरः। इति बसः। दिनं करोतीत्येव शील. दिनकरः। इति वासः। स्याद्वादश्च स दिनकरश्च स स्याद्वाददिनकर.। इति यस.। भव्यजनकमलाकरावबोधनकरनयकरश्चासौ स्याद्वाददिनकरश्च भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरः। इत्यपि यसः। भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरस्य प्रभा भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरप्रभा। इति तासः। मिथ्यावाद एवांधकारः मिथ्यावादांधकार.। इति यसः। भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरप्रभया प्रहतः। भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरप्रभाप्रहतः। इति साधनं कृतेति यसः। भव्य-

जनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरप्रभाप्रहतो मिथ्यावादाधकारो येन स भव्यजनकमलाकरावबोधनकरनयकरस्याद्वाददिनकरप्रभाप्रहतमिथ्यावादाधकार । इति वम । कोऽसौ श्रीशान्तिनाथ ।

### अथ द्वन्द्वापवाद एकशेषः ।

वक्रश्च कुटिलश्चेति विग्रहे द्वन्द्वे प्राप्ते तदपवाद —

४६७। [1]समानामेक । १।३।६७ । समाना तुल्यार्थाना शब्दानां चार्थे वर्तमानानामेक एव प्रयोक्तव्य । सुबुपमर्दत्वैव द्वन्द्वापवादोऽयमेकशेष क्रियते । इति नाशावयवसुपो नाश सभवति । वक्रौ कुटिलौ वा प्रयुज्यमान शब्दोऽप्रयुज्यमानाना शब्दाना अर्थ ब्रूते । इतरथा चार्थे वृत्त्ययोगादिति द्विवचनबहुवचनेऽपि भवत । वक्रौ कुटिलौ वा । वाक्यवद् वक्रकुटिलौ इति न भवति ॥ अक्षश्च शकटाक्ष । अक्षश्च देवनाक्ष । अक्षश्च विभीतकाक्ष । इति विगृह्य—

४६८। सुप्यसंख्येयः । १ । ३ । ६८ । सुपि सर्वत्र ये समा एकरूपा शब्दास्तेषा द्वन्द्वे प्राप्ते एक एव प्रयोक्तव्य सख्येयवाचि शब्दरूप वर्जयित्वा । अक्षा । एव पादश्च पादश्च पादश्च पादा । विंशतिश्च विंशतिश्च विंशतिश्च विंशतय । असख्येय इति किं ? एकश्च एकश्च । द्वौ च द्वौ च ।

---

[1] । स्वाभाविकत्वादभिधानस्यैकशेषानारम्भ । १ । १ । १०० । इति पाणिनीये एकशेषविधिरेव न विहित ।

द्वंद्वोऽप्यनभिधानान्न भवति । स च देवदत्तश्चेति विगृह्य–

४६६ । त्यदादेः । १ । ३ । ६६ । त्यदादिनाऽन्येन च सह त्यदादेर्द्वंद्वे प्राप्ते त्यदादिरेक एव प्रयुज्यते । तौ । अयं च देवदत्तश्च इमौ । त्यदादीनां मिथो यद् यद् परं तद् तदेवैकं प्रयुज्यते । सं च त्वं च युवां । त्वं च अहं च आवां ॥

इति सविधिसिद्धिः ।

---

## अथानुब्विधिः ।

क्वचित् सविधौ सत्यपि सुप् श्रूयते । स किं सविधिरसविधिर्वेत्यारेकोपजायते । तन्निवृत्त्यर्थः सुपोऽनुप् प्रकम्यते । स्तोक मुक्त । अल्प मुक्त । कृच्छ्र मुक्त । कतिपय मुक्त । दूर आगत । अतिक आगत । इति स्थिते-स्तोकादेः "स्तोकाल्पेत्यादिना का । दूरादेः "का चारादर्थे" इति का । मुक्तागताभ्यां सुः ।

४७० । [१]स्तोकारादर्थकृच्छ्रं क्तेन । १ । ३ । ३४ । स्तोकाराद् इत्येवमर्था शब्दाः काताः कृच्छ्रशब्दश्च क्तान्तेन सह समस्यते षसो भवति । इति षसः । सुपो धुमृदोरिति सुप उपि प्राप्ते-यावनुबित्यनुवर्तमाने–

४७१ । कायाः स्तोकादेः । ४ । ३ । १४८ । स्तोकादेः परस्याः कायाः षौ परतोऽनुब्भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । कृच्छ्रान्मुक्तः । कतिपयान्मुक्तः । दूरादागतः ।

---

१ । अस्य स्थाने - स्तोकांतिकदूरार्थकृच्छ्रं क्तेन । १ । ३ । ३४ । इति सूत्रं ।

अतिकादागतः ॥ ओजस् कृत । अंभम् कृत । तपम् कृत । अजम् कृत । इति स्थिते- ओजसादिभ्य. कर्तरि करणे वा भा। कृनाल्तुः । साधन कृनेति षस । सुप उपि प्राप्ते-

४७२ । [1]ट ओजसमहोंभस्तपोऽजसः । ४ । ३ । १५१ । ओजसादिभ्य परस्य भेकवचनस्य याबनुभ्भवति । ओजसाकृत । सहसाकृतं । अभसाकृत । तपसाकृत । अंजसाकृत । तमोंजस इत्येके । तेषा तमसाकृत ॥ पर पद । आत्मन् पद इति स्थिते—परा मन्शब्दाभ्या "तादर्थ्ये" इत्यप् । परस्मै पदं । आत्मने पद । इति विगृह्य— अप्प्रकृतितदर्थार्थादिभिरिति तादर्थ्ये षस । सुप उपि प्राप्ते स्ताविति वर्तमाने—

४७३ । डेः परा[2]त्मनः । ४ । ३ । १५६ । परात्मन् शब्दाभ्यां परस्य डेरेकवचनस्य यावनुभ्भवति स्तौ विषये । परस्मैपद । आत्मनेपद । एव परस्मैभाष. । आत्मनेभाष । स्ताविति किं ? परहित ॥ अरण्य तिलक । त्वच् सार । इति स्थिते- अरण्यादेरीप् । तिलकादेर्वाः । अरण्ये तिलका । त्वचि सार इति विगृह्य—

४७४ । ग्नो । १ । ३ । ३७ । सुविषये ईयत सुपतेन षसो भवति । ततः सुप उपि प्राप्ते—

४७५ । ईपोऽद्धल । ४ । ३ । १७७ । अकारान्तात्

---

१ । अस्य स्थाने - भाया ओजस्सहोम्भस्तमोंजस । ४ । ३ । १०२ । इति सूत्र । २ । अस्य स्थाने - ङे: र्धा परात्म । ४।३।... इति सूत्र ।

हलंताच्च मृदः परस्या ईपः खुविषये यौ अनुप् भवति। अरण्येतिलकाः। एवं अरण्येमाषकाः। वनेहरिद्राः। त्वचिसारः। एवं दृषदिमाषकाः॥ स्तूप शाण, दृषद् माषक इति स्थिते- स्तूपादेरीप्। शाणादेः सुः। स्तूपे स्तूपे शाणो दातव्य इत्यादि विगृह्य- स्वाविति षः। सुलुपि प्राप्ते-

४७६। कारे [1]प्राचां हलि। ४। ३। १५८। प्रजानां रक्षार्थं राज्ञे धर्म्यं देयं करः। अदंतात् हलंताच्च मृदः परस्या ईपोऽनुब्भवति हलादौ यौ परतः प्राचां देशे कारविषये। स्तूपेशाणः। दृषदिमाषका। एवं मुकुटेकार्षापणः। समिधिमाषकः। ईप्साधनार्थयोर्वृत्तावंतर्भावः। कार इति किं? अभ्याहितपशुः। प्राचां इति किं? यूथपशुः॥ मध्ये गुरुः। अन्ते गुरुः। इति विगृह्य-ईप्शौण्डादिभिरिति षसः। मध्ये गुरुर्यस्य अन्ते गुरुर्यस्येति वा बसः। सुप उपि प्राप्ते-

४७७। मध्यांताद् गुरौ। ४।३।१५९। मध्यांताभ्यां परस्याः ईपोऽनुप् भवति गुरौ यौ परे। मध्येगुरुः। अंतेगुरुः॥ कंठे कालो यस्य। उरसि लोमानि यस्येति विगृह्य-अवान्यार्थेऽनेकं बमिति बसः। ततः सुप उपि प्राप्ते-

४७८। अकामेऽमूर्द्धमस्तकात्स्वांगात्।४।३।१६०। मूर्द्धमस्तकशब्दवर्जितात् स्वांगवाचिनो मृदोऽद्धलंतात् परस्याः

---

१। अस्य स्थाने कारे प्रायः। ४। ३। १२८। हलि। ४। ३। १२९। इति सूत्रद्वय।

ईपोऽनुप् भवति अकामे घौ परतः। कंठेकालः। उरसिलोमा। एवं वहेगडुः। शिरसिशिखा॥ अकाम इति किं? मुखे कामो यस्य स मुखकामः। अमूर्द्धमस्तकादिति किं? मूर्द्धशिखः। मस्तकशिखः॥ हस्ते वद्ध इति विगृह्य-ईपूर्छाडादिभिरिति यस.। हस्ते बंधो यस्य इति वा चमः। ततः सुप उपि प्राप्ते–

४७६। [1]धंवे वञि वा। ४। ३। १३१। अद्धलंतात् परस्या ईपः घञेन वञ्नातौ घौ परतोऽनुब्भवति वा। हस्तेबंधः। हस्तबंधः। एवं चक्रेबंधः। चक्रबंधः। घञीति किं? हस्तबंधनं॥ स्तम्बे रमः। कर्णे जपः इति स्थिते वागमिदिति नित्यः यसः। ततः उपि प्राप्ते–

४८०। घे कृति बहुलं। ४। ३। १३२। अद्धलंतात् परस्या ईपः घसे कृदते घौ अनुब्भवति बहुलं। तेन क्वचित् प्रवृत्तिः। स्तम्बेरमः। कर्णेजपः। एवं भस्मनिन्हुतं। क्वचिदप्रवृत्तिः। मद्रचरः। ग्रामचरः। क्वचिद्विभाषा। सरसिरुहं। सरोरुहं। क्वचिदन्यदेव। हृदयं स्पृशति इति हृदस्पृक्। पद्दन्नोमास्हन्निशसन्यूषन्दोषन्यकन्शकन्नुदन्नासंश्चाधे इति हृदयस्य हृदादेशः। एवं दिवं स्पृशतीति दिविस्पृक्। इमर्थे ईप्। तदनुप् च। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदंति। खे शेते इति खशयः। खेशयः। विले शेते इति

---

१। अन्य कार्ये धे कृति बहुलं। ४। ३। १३२। अग्रस्य बहुलपदसामर्थ्यात् कृतं।

विलशयः । विलेशयः । वने वासि । वनवासि । ग्रामे वासः ग्रामवासः । इत्यत्रापि वागमिडिति पसः । ततः सुबुपि प्राप्ते-

**४८१ । [1]शयवासिवासेऽकालात् । ४ । ३ । १६७ ।** अकालवाचिनः परस्या ईपः शयवासिवास इत्येतेषु घुषु वानुब् भवति । अकालादिति किं ? पूर्वाह्णशयः । अद्धल इति किं ? गुहाशयः । भूमिशयः ॥ चौरस्य कुलं । दासस्य भार्या । दास्याः पतिरित्यत्रापि तासे कृते सुबुपि प्राप्ते-

**४८२ । तायाः शापे[2] । ४ । ३ । १७१ ।** शापे आक्रोशे गम्यमाने तायाः घावनुब् भवति । आक्रोशः क्षेपो निंदा। अन्यत्र चौरकुलं । दासभार्या । दासिपतिः ॥ दास्याः पुत्रः दासिपुत्रः । वृषल्याः पुत्रः वृषलिपुत्रः । इत्यत्रापि तासे कृते सुबुपि प्राप्ते-

**४८३ । पुत्रे वा । ४ । ३ । १७२ ।** पुत्रशब्दे घौ परतः ताया वानुब् भवति शापे गम्यमाने । अन्यत्र दासिपुत्रः । वृषलिपुत्रः ॥ वाचो युक्तिः । दिशो दंडः । पश्यतो हर इत्यत्रापि तासे सति ततः ऽपि प्राप्ते—

**४८४ । [3]वाग्दिक्पश्यतो युक्तिदंडहरे ।४।३।१७३।** वागादिभ्यः परस्याः तायाः यथासंख्यं युक्त्यादिषु घुषु अनुब् भवति । होतुः पुत्रः । होतुरंतेवासी । पितुः पुत्रः । पितुरंते-

१ । अस्यापि कार्यं बाहुल्यात् । २ । अत्र "आक्रोश" इति महावृत्तौ । ३ । अस्य स्थाने वार्तिकं ।

त्रासी । इत्यत्रापि तासे कृते उपि प्राप्ते—

४८५ । [1]ऋतां विद्यायोनिसंबंधात् । ४।३।१७६ । ऋकारांतानां विद्याकृतात् योनिकृताच्च संबंधात् प्रवर्तमानानां संबन्ध्यास्तायाः सामर्थ्यात् विद्यायोनिकृतसंबंधनिमित्ते एव धाव नुप् भवति । अन्यत्र भर्तृगृहं । भर्तृशिष्यः ॥ होतुः स्वसा । होतृ-स्वसा । दुहितुः पतिः । दुहितृपतिः । इत्यत्रापि तासे उपि प्राप्ते—

४८६ । वा स्वसृपत्योः ।४।३। १७७ । विद्यायोनिसंबंधाद्धेतो प्रवर्तमानानां ऋकारांतानां संबंधिन्यास्तायाः स्वसृपति-शब्दयोर्योनिसंबंधनिमित्तयोर्धौ अनुब्भवति वा ॥ मातुः स्वसा । पितुः स्वसेत्यत्रापि उपि प्राप्ते-तेनैव विकल्पेनानुपि यदा उप् तदा—

४८७ । मातृपितुः स्वसुः । ५ । ४ । ६६ । मातृपितृभ्यां परस्य स्वसृशब्दस्य पत्वं भवति । इति पत्वं । यदा तु अनुप् तदा वानुनिति विभाषया षत्वं । मातृष्वसा । मातुःष्वसा । मातुःस्वसा । पितृष्वसा । पितुःष्वसा । पितुःस्वसा ॥ माता च पिता च इति विगृह्य-[2] द्वंद्वे से सत्युपि च कृते—

४८८ । [3]ङान् द्वंद्वे । ४ । ३ । १७८ । विद्यायोनिसंबंधात् प्रवर्तमानानां ऋकारांतानां यो द्वंद्वस्तस्मिन् पूर्वपदस्य ङा-नादेशो भवति धौ । ङकारोऽन्त्यविध्यर्थः । नकारो रंतनिरासार्थः । मातापितरौ । एवं होता च पोता च होतापोतारौ । नेष्टा च उद्गाता च नेष्टोद्गातारौ । होतापोतारौ च नेष्टोद्गातारौ च होता

१ । एतद्वर्तनमत्रमहावृत्तौ । २ । अस्य स्थाने आनङ् द्वंद्वे । ४ । ३ । १३८ । इति सूत्रं ।

# अथ हृद्विधिः ।



श्रीवीर सन्मति शम्भु सिद्ध बुद्ध जितेन्द्रिय ।
वन्द चतुर्मुख विष्णु वन्देह लोकमगल ॥ १ ॥

अथ सुबन्तपदाश्रितत्वात् सुबन्ते स्वद्धिकल्प. सक्षेपेणोपक्रम्यते । तत्तो द्विविधाः । मृदर्थादर्थान्तरवृत्तय. स्वार्थिकाश्चेति । तत्राद्या द्विप्रकारा । अनेकार्था· एकार्थाश्चेति । अनेकार्था. अणादय । एकार्था इञादयः । स्वार्थिका अपि द्विप्रकारा । प्रकृत्यर्थविशेषप्रकाशिनस्तावन्मात्रवृत्तयश्चेति । तत्राद्या द्विप्रकारा । मृदर्थप्रधाना सुबर्थप्रधानाश्चेति । मृदर्थप्रधानाश्च ठडादय । सुबर्थप्रधाना ह्यादय । तावन्मात्रवृत्तयोऽपि पूर्ववद् द्विप्रकारा । तत्र मृदर्थप्रधानाष्टञणादय । सुबर्थप्रधानास्तसादय । प्रकृत्यर्थ एव ये भवति ते स्वार्थिका ॥ उपगोरपत्यमिति विगृह्य-अपत्यार्थविवक्षाया वाधात् समर्थादिति प्राद्वीरणित्येवमादिके चानुवर्तमाने—

४९३ । तस्यापत्यं । ३ । १ । १११ । तस्येति तास मर्थात् सूत्रे प्रथममुक्तादपत्यमित्येतस्मिन्नर्थे यथाविहित अणादय स्त्या भवन्ति वा । यो यतो विहित. स ततो भवतीत्यर्थ । वेत्य-धिकाराद् वाक्यमपि साधु भवति । तत्र सामान्यचोदनाश्च विशे

वृद्धमित्येवं विगृह्य-पौत्राद्यपत्यमापरमप्रकृतेः पूर्वेषामपत्यं भवतीति तत्संबंधविवक्षायामनंतरादिभ्योऽपि त्यः प्राप्तः स आद्यान्मूल-प्रकृतेरेवेति नियमान्निवर्तते। पुनरनेन त्यप्रसंगे एक इत्यनेन नियम्यते ततः उपगोरेव अणेव भवति। औपगवः। एवं कापटवः। युवापत्यविवक्षायां–

४९८। [1]सनि वंश्ये युवाऽस्त्री। ३। १। ११५। वंशे भवो वंश्यः पित्रादिरात्मनः कारणं। पौत्रादेर्यदपत्यं चतुर्थादिकं स्त्रीवर्जितं सति जीवति वंश्ये तद् युवसंज्ञं भवति। उपगोरपत्यं युवेति विगृह्य–

४९९। ततो यूनि। ३। १। ११४। ततो वृद्धत्यांतात् यून्यपत्ये विवक्षिते सत्याद्यात् वृद्धप्रकृतेरेक एव च त्यो भवति। त्ययुवापि नियमः। ततो न परमानंतरयुवप्रकृतेर्भवति। औपगवशब्दादकारांतात् तस्यापत्यमिति प्रस्तुत्य–

५००। [2]इञतः। ३। १। ११६। अकारांतान्मृदन्ता-समर्थाद् अपत्येऽर्थे इञ् त्यो भवति। अणोपवादः। ञकार ऐवर्थः। पूर्ववदन्यत्। औपगविर्युवा। दक्षस्यापत्यमिति पूर्ववदिञ्। एरित्यस्तं। दाक्षिः। स्त्रियां–

५०१। [3]नुरितः। ३। १। ७५। नृजातिवाचिनः इतः स्त्रियां ङीर्भवति। दाक्षी। दक्षस्यापत्यं वृद्धमिति वृद्धापत्यवि-

---

१। अस्य स्थाने–जीवति तु वंश्ये युवाऽस्त्री।३।१।८२। इति सूत्रं।
२। अस्य स्थाने–अद्वाह्वादेरिञ्।३।१।८५। इति महावृत्तौ,
३। अस्य स्थाने – इतो मनुष्यजातेः। ३।१।६५। इति महावृत्तौ।

येष्ववतिष्ठंते इति तस्य विशेषेभ्यस्तेभ्यो यथाविहितं त्यो भवति। कोऽसौ त्यः। "त्यः" परः "ङ्तः" इत्यधिकृत्य—

४६४। प्रागद्रोरण्। ३। १। ६२। द्रोः प्राग् येऽर्थाः वक्ष्यंते तेषु त्यः परो ङ्तसंज्ञकः अणित्यधिकृतो वेदितव्यः। तेनोक्तार्थत्वात् अपत्यशब्दस्य निवृत्तिः। णाकार इत्संज्ञः ञ्णित्यच इति ह्यक्ष्वादेरिति विशेषणार्थः। कृद्धृत्साः इति मृत्संज्ञा। सुपो धुमृदोरिति सुवुप्। यत्ये तदादिगुरिति गुसंज्ञायां-गोः मृजेरैबि-त्यधिकृत्य-ञ्णित्यच इत्यनुवर्तमाने—

४६५। [1]ह्यत्यदचादेः। ५।२।१५। गोरक्ष्वादेरचो ह्यति ञ्णिति परत ऐप् भवति। स्वासन्न इत्युकारस्य औकारः। स्वादावधे इति पदत्वे प्राप्ते-यचि भ इति भत्वात्-भस्येति ह्यतीति च भस्तुरय-

४६६। कद्र्वोरोऽस्वयंभुवः[2]। ४।४। १४७। कद्रू-शब्दस्य उवर्णांतस्य च गोर्भस्य ओकारादेशो भवति ह्यति परतः स्वयंभुशब्दं वर्जयित्वा। इत्युकारस्यौकारः। अवादेशः। ततः स्वादिः। औपगवः। एव कापटवः। स्त्रियामिञ्टिड्ढाणञित्या-दिना ङी भवति। औपगवी। ह्यद्विवक्षायां-

४६७। पौत्रादि वृद्धं। ३। १। ११२। परमप्रकृते-रपत्यवतो यदपत्यं पौत्रादि तत् वृद्धसंज्ञं भवति। उपगोरपत्यं

---

१। अस्य स्थाने-ह्यचामादेः। ५। २। ५। इति सूत्रं।
२। कद्रूशब्दस्याप्युवर्णांतत्वेन सिद्धे पृथग्वचनं ढे ज्ञापनार्थं। कद्रूशब्देऽत्र उश्च कद्र्वौ तयोः।

वृद्धमित्येवं विगृह्य-पौत्राद्यपत्यमापरमप्रकृतेः पूर्वेषामपत्यं भवतीति तत्संबंधविवक्षायामनंतरादिभ्योऽपि त्यः प्राप्तः स आद्यान्मूलप्रकृतेरेवेति नियमान्निवर्तते । पुनरनेन त्यप्रसंगे एक इत्यनेन नियम्यते ततः उपगोरेव अणेव भवति । औपगवः । एवं कापटवः । युवापत्यविवक्षायां-

४९८ । [1]साति वंश्ये युवाऽस्त्री । ३ । १ । ११५ । वंशे भवो वंश्यः पित्रादिरात्मनः कारणं । पौत्रादेर्यदपत्यं चतुर्थादिकं स्त्रीवर्जितं साति जीवति वंश्ये तद् युवसंज्ञं भवति । उपगोरपत्यं युवेति विगृह्य-

४९९ । ततो यूनि । ३ । १ । ११४ । ततो वृद्धत्यांतात् यून्यपत्ये विवक्षिते सत्याद्यात् वृद्धप्रकृतेरेक एव च त्यो भवति । त्ययुवापि नियमः । ततो न परमानंतरयुवप्रकृतेर्भवति । औपगवशब्दादकारांतात् तस्यापत्यमिति प्रस्तुत्य—

५०० । [2]इञतः । ३ । १ । ११९ । अकारातान्मृदन्ता-समर्थात् अपत्येऽर्थे इञ् त्यो भवति । अणोपवादः । अकार ऐदर्थः । पूर्ववदन्यत् । औपगविर्युवा । दक्षस्यापत्यमिति पूर्ववदिञ् । एरित्यखं । दाक्षिः । स्त्रियां-

५०१ । [3]नुरितः । ३ । १ । ७५ । नृजातिवाचिनः इतः स्त्रियां ङीर्भवति । दाक्षी । दक्षस्यापत्यं वृद्धमिति वृद्धापत्यवि-

१ । अस्य स्थाने-जीवति तु वंश्ये युवाऽस्त्री ।३।१।८१। इति सूत्रं।
२ । अस्य स्थाने-अद्भवाह्वादेरिञ् । ३ । १ । ८५ । इति महावृत्तौ,
३ । अस्य स्थाने - इतो मनुष्यजातेः । ३।१।५५ । इति महावृत्तौ ।

वद्धाया पूर्ववद् प्रकृतित्यनियमान्मूलप्रकृतेरेव दक्षशब्दादिञेव भवति । दाक्षि । दक्षस्यापत्य युवेति यून्यपत्ये विवक्षिते ततो यूनीति नियमान्नडादिभ्य फण् इत्यधिकृत्य–

• ५०२ । यञिञो । ३ । १ । १३२ । यजतादिञताच्च वृद्धे वर्तमानाद्यून्यपत्ये फण् भवति । णकार ऐवर्थ ।

५०३ ।[1]फढखछघ आयनेयीनीयिय् । ५ । १।२ । फढखछघ इत्येतेषा वर्णाना गोनिमित्तभूताना यथासख्य आयन् एय ईन् ईय् इय् इत्येते आदेशा भवति । इति फस्यायन् । परिस्थ-त्व । णत्व । दाक्षायण । गर्गस्यापत्यमिति विगृह्य पूर्ववदिञादि । गार्गि । गर्गस्यापत्य वृद्धमिति विगृह्य–

५०४ । गर्गादेर्यञ् । ३ । १ । १३६ । गर्गादिभ्यो वृद्धेऽपत्ये विवक्षिते यञ् भवति । पूर्ववच्चेष ॥ गार्ग्य । गार्ग्यौ । बहुषु बहुष्वस्त्रियामिति वर्तमाने–

५०५ ।[2]यञञोऽगोपवनादे । १ । ४ । १५८ । य ञतस्य इञतस्य च बहुत्वे गोत्रे वर्तमानस्य यस्त्यस्तस्याऽस्त्रियामु ब्भवति गोपनादिभ्यो विहित वर्जयित्वा । गर्गा । स्त्रिया–

५०६ । यञोऽपावटात् । ३ । १ । १६ । यञतात् स्त्रिया वर्तमानात् ङीर्भवति न चेत् स यञ् पकारादवटशब्दाच्च परो भवति । इति ए ङ्यामिति स ।

---

१ । अस्य स्थाने आयनेयीनीयिय फढखछघा स्यादीना ।८ । १ । २ । इति । २ । अस्य स्थाने इञो यद्यद्य प्राच्यभरतेषु । १ । ४ । १३७ । न गोपवनादे । १ । ४ । १३८ । इति सूत्रद्वय ।

हित ष्यो भवति । इत्यण् । पूर्ववच्छेषः । कौसुम्भः पटः । कौसुम्भं
वस्त्र । कौसुम्भी शाटी । एव—काषाय. । हारिद्रः ॥ लाक्षया रक्तमिति
विगृह्य—

५१२ ॥ लाक्षारोचनाट्ठण् । ३ । २ । २ । लाक्षारोच-
नाभ्यां भासमर्थाभ्यां रक्तेऽर्थे ठण् भवति ।"इकु ठः" इति ठस्येकादेशः ।
लाक्षिकः । एव—रौचनिकः । पूर्ववत् त्रिषु लिंगेषु योज्य । शकलेन रक्त-
मिति विगृह्य—

५१३ ॥ शकलकर्दमाद्वा । ३ । २ । ३ । शकलकर्दम
इत्येताभ्यां भासमर्थाभ्यां रक्तार्थे ठण् वा भवति । पक्षेऽण् । पूर्ववद-
न्यत् ॥ शाकलिकः, शाकलः । एव—कार्दमिकः, कार्दमः ॥
गुरूदयेन पुष्येण युक्तः संवत्सरः इति विगृह्य—तेनेति वर्तमाने—

५१४ ॥ गुरूदयाद् भाद् युक्तोऽब्दः । ३ । २ । ५ ।
गुरुर्बृहस्पतिरुदेति यस्मिन् नक्षत्रे तद्वाचिनो भासमर्थात् युक्त
इत्येतस्मिन्नर्थे यथाविहितं ष्यो भवति योऽसौ युक्तः स चेदब्दः संव-
त्सरः स्यात् । इत्यण् । एरिकारः । "तिष्यपुष्ये भे" इति यख । पौषः संव
त्सरः, पौषं वर्षं । एव—फाल्गुनः संवत्सरः, फाल्गुनं वर्षं ॥ चद्रा-
पेतेन पुष्येण युक्तः कालः इति विगृह्य—

५१५ ॥ चंद्रोपेतात्कालः । ३ । २ । ६ । यस्य नक्षत्रस्य
क्षेत्रे चद्रो वर्तते तन्नक्षत्रं चद्रोपेत । तद्वाचिनो भासमर्थात् युक्त
इत्येतस्मिन्नर्थे यथाविहितं ष्यो भवति योऽसौ युक्तः स चेत् कालो
भवति । पूर्ववदन्यत् । पौषः कालः, पौषोऽहोरात्रः, पौषमहः,
पौषी रात्रिः । एव—माघः कालः, माघोऽहोरात्रः, माघमहः, माघी
रात्रिः ॥ पौषी पौर्णमासी अस्य मासस्य इति विगृह्य—

५१६ ॥ सास्य पौर्णमासीति खौ ३।२।२३ । सेति प्रथमान्तसमर्थादस्येति तार्थे यथाविहित त्यो भवति यद् तद् वात सा चेत् पौर्णमासी । इतिशब्दो विवक्षार्थस्तेन 'मासेऽर्द्धमासे संवत्सरे संज्ञायामस्मर्पणि वा त्य । त्यांतेन चेत्संज्ञा गम्यते । पूर्ववच्छेत्र । पौषो मास', पौषोऽर्द्धमास', पौष संवत्सर । एव-माघ. ॥'अर्हन् देवताऽस्येति विगृह्य—सास्यति वर्तमाने—

५१७ ॥ देवता । ३ । २ । २६ । सेति प्रथमान्तसमर्थादस्येति तार्थे यथाविहित त्यो भवति यद् तद् वात सा चेत् देवता भवति । पूर्ववदन्यत् । आर्हत्त । एव-जैनः । ऐन्द्र हवि ॥ अग्निश्च विष्णुश्च देवताऽस्येति विगृह्य द्वंद्वे ङानि च कृते देवतार्थेऽण् । "द्विरसिंधुस्तेर्वा द्वयो"इति वर्तमाने—

५१८ ॥ देवतानां ङानि ५।२।२६ । देवताना द्वयो पदयो ङानि नित्यम् ऐत् भवति । आग्नावैष्णव । ए- — आग्निवारुण । "नैष्यविष्णित्रे"इति ङानीत्वयोर्निषेधे । ... तऽस्येति विगृह्य—अण् ।

५१९ ॥ नेंद्रवरुणस्यात् । ५ । २ । २७ । अवर्णान्तात् देवतार्थात् परस्य इन्द्रशब्दस्य वरुणस्य चाचामादेरच ऐप् न भवति । आग्नेन्द्रः । एव-ऐन्द्रावरुण । त्रिलिंगिष्वपि योज्य ॥ महेन्द्रो देवताऽस्येति विग्रहे—

५२० ॥ महेन्द्राद् घाण् च । ३ । २ । ३१ । महेन्द्रशब्दाद्देवतार्थे घ अण् इर्सतो त्यो भवत चकाराच्छश्च । घस्य इय्, छस्य ईय् । महेन्द्रिय' । माहेन्द्रः । महेन्द्रीय ॥ को देवताऽस्येति विग्रहे—

५२१ ॥ कसोमाद्य्यण् । ३। २ । ३२ । कसोमाभ्या दे-

वताऽर्थे व्यण् स्यो भवति । टकारो ङ्यर्थः । णकार ऐवर्थः । एः खात्परत्वादैप् । कायं हविः । एवं—सौम्यं । स्त्रियां टित्वान्ङी । कायी दिक् । सौमी । "हलो ह्रतः" इति यखं ॥ वृकाणां समूह इति विग्रहे—

५२२ ॥ तस्य समूहः ३ । २ । ३८ । तस्येति तासमर्थात् समूह इत्येतस्मिन्नर्थे, यथाविहितं त्यो भवति । इत्यण् । पूर्ववच्चैपं । वार्कं । एवं-काकं । बार्हस्पत्यं । वानस्पत्यं । "यमदित्यदित्यादित्य-पतिचोर्ण्योऽणपवादे चास्ते" इति ण्यः । आग्नेयः—कल्यग्नेर्ढणिति ढण्, एय् । हस्तिनां समूह इति विग्रहे—

५२३ ॥ हस्तिकवच्यचिताच ठण् । ३ । २ । ४३ । हस्तिन् कवचिन् शब्दाभ्यां अचित्तवाचिभ्यः केदारशब्दाच्च तस्य समूह इत्यस्मिन् विषये ठण् भवति । ठस्य इक् । भस्याऽनोऽखं । "टिति टेः" इतीति च वर्तमाने—

५२४ ॥ नः ४ । ४ । १४२ । नकारांतस्य गोर्भस्य टेः ख भवति इति परतः । हास्तिकं । एवं—कवचिनां समूहः काव-चिकं । अचित्तेभ्यः—अपूपानां समूहः—आपूपिकं । शाष्कुलिकं । केदाराणां समूहः—कैदारिकं ।

५२५ ॥ धेनोरनञः ३ । २ । ४४ । धेनुशब्दात् समूहेऽर्थे ठण् भवति न चेत्स धेनुशब्दो नञः परो भवति ।

५२६ ॥ दोसिसुसुगत्रभदकस्मात्तः कः ५ । २ । ६१ । दोसुशब्दात् इसुस् इत्येतस्मताद् उगंताच्च शब्दद् सकस्माद् शब्द-वार्जितात् तकारांताच्च परस्य ठस्य ककारादेशो भवति । धैनुकं । अनञ इति किं ? आधेनवं ॥ निनित्तं वेत्तीति विगृह्य—

५२७ ॥ तद् वेत्त्यधीते । ३ । १ । ७२ । तदिति इप्-समर्थात् वेत्तीत्यस्मिन् अधीते इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । इत्यण् । नैमित्तः । एवं–मौहूर्तः । व्याकरणं वेत्तीति विगृह्य–तेनैवाणि–आदैरैपि प्राप्ते–

५२८ ॥ पदे य्व ऐयौव् । ५ । २ । ९ । पदे परतो ऽचामादेरचः स्थाने निष्पन्नयोर्यकारवकारयोरैय् औव् इत्येतावादेशौ भवतो इति ञ्णिति परतः । वैयाकरणः । एवं–सौवागमः । तैह्नातः । छान्दसः ॥ उदुम्बरा अस्मिन् देशे सन्तीति विगृह्य–

५२९ ॥ सोऽत्रास्तीति देशः खौ ३ । ३ । ८४ । स इति वासमर्थात् अत्रेतीत्यर्थे यथाविहितं त्यो भवति, योऽसौ थांतः स चेदस्ति, यः ईपानिर्दिष्टः स चेद्देशः, समुदायेन चेत्संज्ञा गम्यते । औदुंबरं राष्ट्रं । एवं–बाल्वजं, पार्वतं ॥ कुशाम्बेन निर्वृत्तेति विगृहे–

५३० ॥ तेन निर्वृत्तः ३ । २ । ८५ । तेनेति भा-समर्थात् निर्वृत्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति देशः खौ । इत्यण् । कौशाम्बी नगरी । ककंदेन निर्वृत्ता काकंदी । मकंदेन निर्वृत्ता माकंदी । सगरैः सागरः ॥ अर्जुनावो निवासः इति विगृह्य–

५३१ ॥ तस्य निवासादूरभवौ ३ । २ । ८६ । तस्येति तासमर्थान्निवास इत्यस्मिन् अदूरभव इत्यस्मिन्नर्थे यथाविहितं त्यो भवति । इत्यण् । आर्जुनावं नगरं । उदिदस्य निवास औदिदः । सकलाया निवासः साकलं नगरं । अदूरे भवोऽदूरभवः ।

तत्र–वराणसाया अदूरभवा वाराणसी नगरी । विदिशाया अदूरभवं वैदिशं नगरं ॥ चक्षुषा गृह्यते इति विगृह्य–

५३२ ॥ शेषे । ३ । २ । ९९ । अपत्यादिभ्यश्चतुरर्थान्तेभ्योऽन्यः शेषः । तस्मिन् शेषेऽर्थे विशेषे यथाविहितं त्यो भवति । इत्यण् । चाक्षुषं रूपं । एवं–श्रावणः शब्दः, रासनो रसः, दार्शनं, स्पार्शनं च द्रव्यं, दृषदि पिष्टा दार्षदाः सक्तवः ॥ सर्वस्मिन् लोके जातः कृतो भवो वेति विगृह्य–

५३३ । लोकदूरध्यात्मादिभ्यष्ठण् ३ । २ । १६८ । लोकदूरध्यात्मादिभ्यश्च शेषे ठण् भवति । ठस्य इकः ।

५३४ ॥ अनुशतिकादीनां ५ । २ । २४ । अनुशतिक इत्येवमादीनां गूनामवयवयोः पूर्वोत्तरपदयोरचामादेरच ऐप् भवति इति ञ्णिति परतः । सार्वलौकिकः । पारलौकिकः । ऐहलौकिकः ॥ आत्मन्यधीति विगृह्य–सुबर्थे हसे "अनः" इत्यः सातः । "नः" इति टेः खे कृते–अध्यात्मं भवः–आध्यात्मिकः । एवं–आधिदैविकः । आधिभौतिकः ॥ समाने भव इति विगृह्य–

५३५ ॥ समानात्तदादेश्च ३ । २ । १६९ । ठण् । पूर्ववदन्यत् । सामानिकः । एवं–सामानग्रामिकः । एवं–सामानदेशिकः ॥ स्रुघ्ने जात इति विगृह्य–

५३६ । तत्र जातः ३ । ३ । १ । तत्रेति ईप्समर्थात् जात इत्यस्मिन्नर्थे यथाविहितमणादयस्त्या भवति । स्वजन्मन्यनपेक्षितपरव्यापारः कर्तृभूतो जातः । प्राग् दीरण्–स्रौघ्नः । एवं माथुरः ॥ उत्से जातः ।

५३७ ॥ उत्सादेश्चाञ् । ३ । १ । ९७ । औत्सः । एवं औदपानः ॥ राष्ट्रे जातः–

ष्ठ्यः । एव—ओष्ठ्यः, दन्त्य, पाण्य, पद्यः ॥ अतरगारे भव इति विगृह्य—हादिति वर्तमाने—

५४४ ॥ अंतःपूर्वाट्ठञ् ३ । ३ । ४० । हसादतःशब्दपूर्वात् भवार्थे ठञ् भवति । अगारस्यातः अतरगारं । "पारेमध्येऽन्तः-न्मया" इति हसः । पूर्ववदन्यत् । आतरगारिक । एव-आतर्गेहिक, आत पुरिक. ॥ श्रुन्नादागत इति विगृह्य—

५४५ ॥ तत आगतः । ३ । ३ । ५६ । तत इति कासमर्थात् आगत इत्यस्मिन्नर्थे यथाविहित त्यो भवति । शेष पूर्ववत् । श्रौघ्नः, राष्ट्रिय, नादेयः ॥ शुल्कशालाया आगतमिति विगृह्य—ठणिति वर्तमाने—

५४६ ॥ आयस्थानात् । ३ । ३ । ६० । स्वामिग्राह्यो भाग आयस्तस्योत्पत्तिस्थानवाचिनः कासमर्थात् आगतेऽर्थे ठण् भवति । पूर्ववच्छेष । शौल्कशालिक । एव-आपणिक । आकरिक । गौल्मिक ॥ श्रुघ्नो निवासोऽस्येति विगृह्य—

५४७ ॥ सोऽस्य निवासः । ३ । १ । ७४ । स इति वासमर्थात् निवास इत्यस्मिन्नर्थे यथाविहित त्यो भवति । श्रौघ्नः । राष्ट्रिय । नादेयः । भद्रबाहुणा प्रोक्तमिति विगृह्य—

५४८ ॥ तेन प्रोक्तं । ३ । ३ । ८५ । तेनेति भासमर्थात् प्रोक्तमित्यस्मिन्नर्थे यथाविहित त्यो भवति । प्रकर्षेण व्याख्यातम-ध्यापित वा प्रोक्त । भाद्रबाहवाण्युत्तराध्ययनानि ॥ पाणिनिना प्रोक्तमिति विगृह्य—

५४९ ॥ दोश्छः । ३ । २ । १२५ । दुसञ्ज्ञकाच्छैषिकेऽर्थे छो भवति । छस्य ईय । को दुः ?

५५० ॥ यस्याऽस्वादेर्वृद्धः । १ । १ । ८३ । यस्य शब्दस्याचां मध्ये आदिरजैप् भवति स दुसञ्ज्ञो भवति । इत्यादिना विहितः । पूर्ववच्छेण । पाणिनीय । पूज्यपादीय । पाणिनीयं वेत्त्यधीते वेति विगृह्य—तद्वेत्त्यधीते'' इत्यण् । प्रोक्तादिल्लुप् । पाणिनीयः छात्रः । एव- पूज्यपादीयदछात्रः ॥ समतभद्रेण कृतमिति विगृह्य—

५५१ ॥ कृते ग्रंथे । ३ । ३ । ९९ । तेनेति भासमर्थात् कृते ग्रंथेऽर्थे यथाविहित स्यो भवति । सामतभद्र वार्त्तिक । वारदचानि वाक्यानि ॥ उपगोरिदमिति विगृह्य—

५५२ ॥ तस्य स्वं । ३ । ३ । १०२ । तस्येति तासमर्थात् स्वमिति द्वितीये सबधिनि यथाविहितमणादयस्त्या भवति । पूर्ववच्छेय । औपगवं । एव—कापटव । औत्स । नाग । बार्हस्पत्य । राष्ट्रिय । कात्रेयक । नादेय ॥ भस्मनो विकार इति विगृह्य—

५५३ ॥ तस्य विकारः । ३ । ३ । १२३ । तस्येति तासमर्थात् विकार इत्यस्मिन् अर्थे यथाविहितमणादयो भवति । तस्येति वर्तमाने पुनस्तस्यग्रहण शेष इत्यस्य निवृत्यर्थं । "न." इति टेः ख प्राप्त " अन " इति प्रतिषिद्ध । भास्मनः । एव—मार्त्तिकः ॥ अक्षैर्दीव्यतीति विग्रहे—प्राग्वाद्वणिति वर्तमाने—

५५४ ॥ तेन दीव्यत्खनज्जयज्जितं । ३ । ३ । १५३ । तेनेति भासमर्थात् दीव्यति खनति जयति जिते चार्थे ठण् भवति । आक्षिक' । एव—शालाकिकः । अभ्रया खनति आभ्रिक' । एव कौद्दालिकः । पाशकैर्जयति जितो वा पाशकिकः । आक्षिक. ।

तेनाति करणे सेपा नान्यत्रानभिधानत ॥ दध्ना संस्कृतमिति विगृह्य—

५५५ ॥ संस्कृतं । ३ । ३ । १५४ । तेनेति भासमर्थात् संस्कृतमित्यस्मिन्नर्थे ठण् भवति । सत उत्कर्षाधान संस्कार । दाधिक । एव-शाङ्गवरिक । मारीचिक । औपाध्याय. शिष्य । वैदिक ॥ उडुपेन तरति इति विगृह्य—

५५६ ॥ तरन् । ३ । ३ । १५६ । तेनेति भासमर्थात् तरत्यर्थे ठण् भवति । औडुपिक. । काण्ड्याविक । गौपुच्छिक । हस्तिना न उर्तीति विगृह्य—

५५७ ॥ चरन् । ३ । ३ । १५८ । तेनेति भास-मर्थात् चरति गच्छति भक्षयति चार्थे ठण् भवति । हास्तिक. । एव शाकटिक । दध्ना भक्षयति दाधिक । एव-शाङ्गवरिक ॥ शब्द करोतीति विगृह्य—

५५८ ॥ शब्ददर्दुरललाटकुक्कुटत्द् रूढौ । ३ । ३ । २०१ । शब्द दर्दुर ललाट कुक्कुट इत्येतभ्य इत्यसमर्थेभ्यष्ठण् भवति रूढा रूढिक्रियाभिधे विषये । शाब्दिक वैयाकरण । शब्दम विनष्ट जानन्नुच्चरतीत्यर्थः । एव दर्दुर करोति पचतीति दार्दुरिक । ललाट पश्यतीति लालाटिक सेवक । कुक्कुटीं पश्यतीति कौक्कु-टिक । कुक्कुटीपातेन देशेन गच्छन् सवधा निक्षुरुच्यते ॥ अपूपा पण्यमस्येति विगृह्य—

५५९ ॥ तदस्य पण्यं । ३ । ३ । २०६ । तदिति वासमर्थात् अस्येति तार्थे ठण् भवति यत्तद् तान तच्चेद् पण्य भवति । आपूपिक । शाष्कुलिक । लाडुकिक. । पण्यार्थस्य वृत्त्यन्तर्भावात् तदप्रयोग ॥ वृत्त जिज्ञासमिति विगृह्य—त दिति वर्तमान—

५६० ॥ शिल्पं । ३ । ३ । २०९ ॥ 'तदिति' वासमर्थात् अस्येति तार्थे ठण् भवति यद् तद् वात तच्चेच्छिल्पं विज्ञानं भवति । नार्तिकः । वादनिकः । मृदङ्गवादनं शिल्पमस्येति मार्दङ्गिकः । मौरजिकः । पाणविकः । वादनशिल्पार्थयोर्वृत्तावतर्मोत्तदप्रयोगः ॥ अपूपाः शिल्पमस्येति-तदस्येति वर्तमाने–

५६१ ॥ शीलं । ३ । ३ । २१६ । तदिति वा समर्थात् अस्येति तार्थे ठण् भवति यत्तद्वात तेच्चच्छील स्वभावो भवति । आपूपिकः । तद्भक्षणशील इत्युच्यते । तत्स्थस्य ताच्छब्द्यात् । एव-शाष्कुलिकः । ताम्बूलिकः ॥ छत्रं शीलमस्येति विग्रहे–

५६२ ॥ छत्रादेरञ् । ३ । ३ । २१७ । छत्र इत्येवमादिभ्यस्तदस्य शीलमित्यस्मिन् विषये अञ् भवति । छात्रः । छत्रवत् गुरोश्छिद्राच्छादनप्रवृत्तः शिष्यः उच्यते । एव शिक्षाशीलः शैक्षः । भिक्षाशील भैक्षः । शुल्कशालाया नियुक्त इति विग्रह–

५६३ ॥ तत्र नियुक्तः । ३ । ३ । २२६ । तत्रेतीप्समर्थात् नियुक्त इत्यस्मिन्नर्थे ठण् भवति । नियुक्तोऽधिकृतो व्यापृत इत्यर्थः । शौल्कशालिकः । आपणिकः । आक्षपटलिकः । दौवारिकः–"द्वारादेः" इत्यैच् । रथं वहतीति विग्रह–

५६४ ॥ तद् वहन् रथप्रासंगात्यः ॥ ३ । ३ । २३२ । तदितीप्समर्थात् रथशब्दात् प्रासङ्गशब्दाच्च वहत्यर्थे यस्प्रत्ययो भवति । रथ्यः । वत्सानां स्कन्धे प्रासज्यते इति प्रासङ्गो युगः । तद्वहति प्रासङ्ग्यः ॥ धुरं वहतीति विगृह्य–

५६५ ॥ धुरो ढण् च ३ । ३ । २३३ । धुर इत्येतस्मादीप्समर्थात् वहत्यर्थे ढण् भवति यश्च । धौरेयः । धुर्यः ॥ सामनि साधुरिति विगृह्य–

५५६ ॥ तत्र साधुः ३ । ३ । २४९ । तत्रेतीप्समर्थात् साधुरित्यस्मिन्नर्थे यो भवति । "नः" इति टेः खं प्राप्तं—

५६७ ॥ येऽङ्गौ ४ । ४ । १७८ । भवकर्मभ्यामन्यत्र ये टिखं न भवति । सामन्यः । एवं-वेमन्यः । कर्मण्यः । शरण्यः । मन्यः । साधुः समर्थः प्रवीणः उपकारको वा । वत्सेभ्यो हितमिति विग्रहे-

५६८ ॥ तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः ३ । ४ । ७ । तस्मा इत्यप्समर्थात् राजादिवर्जितात् हित इत्यस्मिन्नर्थे यथाविहितं प्राक् ठणश्छ इत्यादिस्त्यो भवति । वत्सीयः । करभीय· । उष्ट्रीयः । गिरीयः ।

५६९ ॥ युगाद्योर्यः । ३ । ४ । ३ । युगादेरुगणोताञ्च मृदो यस्त्यो भवति । युग्यः । पिचव्यः कार्पासः ।

५७० ॥ प्राण्यंगरथखलयवमाषनृपब्रह्मतिलाद्यः । ३ । ४ । ८ । प्राण्यंगवाचिभ्यो रथादिभ्यश्च तस्मै हित इत्यस्मिन् विषये यो भवति । दंतेभ्यो हितः दंत्यः । एवं-कर्ण्यं । चक्षुष्य । नाभ्य तैल । रथ्या भूमिः । खल्यमीप्रदक्षणं । यव्यस्तुषारः । माष्यो वारः । नृष्यं क्षीरपानं । ब्रह्मण्यो देशः । तिल्यं यात्या ॥ सप्तत्या क्रीतमिति विग्रहे-

मर्थात् वाप इत्यस्मिन्नर्थे यथाविहितं त्यो भवति । इति ठण् । प्रास्थिकं । कौटुम्बिकं । द्रौणिकं ॥ राजानमर्हतीति विग्रहे–

५७३ ॥ इपोऽर्हे वत् कल्ये । ३ । ४ । १३२ इप इतीपसमर्थात् अर्हे इत्यस्मिन् अर्थे वत् भवति यत्तदर्हं इति तच्चेत्कार्य कर्तव्य क्रिया भवति । राजवत् वृत्तमस्य राज्ञः । राजतायाग्यमस्य राज्ञः वृत्तमित्यर्थः । एव–कुर्वनिवत् । साधुवत् ।

५७४ ॥ सुप इवे । ३ । ४ । १३३ । सुबन्तादिवार्थे वत् भवति । सादृश्यमिवार्थः । तच्चेद् सादृश्य कृत्य क्रिया विषय भवति । क्षत्रिय इव क्षत्रियवद् युध्यते । देवमिव देववद् गुरु पश्यति । साधुनेव साधुवदाचरित देवदत्तेन । पात्राय इव पात्रवद् अपात्राय दत्त । पर्वतादिव पर्वतवत् कुतुपादवरोहति ।

५७५ ॥ तत्र । ३ । ४ । १३४ । तत्रेतीप्समर्थात् इवार्थे वद् भवति । मथुरायामिव मथुरावन्मान्यखेटे प्रासादाः । पाटलिपुत्रवत् साकेते परिखा । अक्रियार्थोऽयमारम्भः ।

५७६ ॥ तस्य । ३ । ४ । १३५ । तस्येति तासमर्थात् इवार्थे वद् भवति । देवदत्तस्येव देवदत्तवत् जिनदत्तस्य गात्रः । राजवत् जिनदत्तस्य दताः ।

५७७ ॥ भावे त्वतल् । ३ । ४ । १३६ । तस्येति तासमर्थात् भावेऽभिधेये त्वतल् इत्येतौ त्यौ भवत. । भवतोऽस्मादभिधानप्रत्ययौ इति भावः । शब्दस्य यत्प्रवृत्तिनिमित्त स भावः । त्वान्तस्य भावतो नपुंसकलिंगं । तदन्तः स्त्रीलिंगः । गोर्भावः गोत्व । गोता । अत्र सामान्यं भावः । शुक्लत्व, शुक्लता पटस्य–अत्र गुणः । शुक्लत्वं शुक्लता स्वस्य–अत्र गुणसामान्यं । पाचकत्व पाचकता । औप-

गुणत्व । औपगवता । राजपुरुषत्व । राजपुरुषता । अत्र सत्रच । देवदत्तत्व । देवदत्तता । डित्थत्व । डित्थता–अत्र सज्ञासज्ञित्व सत्रच. । शब्दस्वरूप जात्यादिपर्यायान्वयवस्तुस्वरूप वा भाव ॥ सुराज्ञो भाव कर्म वा इति विगृह्य–

५७८ ॥ राजपत्यन्तगुणोक्तिराजादिभ्यः कृत्ये च ३ । ४ । १४१ । राजान्तम्य पत्यन्तभ्यो गुणवाचिभ्यो राजादिभ्यश्च शब्देभ्यस्तस्येति तातेभ्य कृत्ये कर्तव्ये कर्मणि क्रियाया भावे च ष्यण् भवति । चकारो ह्यर्थ ।

५७९ ॥ आत्वादगडुलादेः । ३ । ४ । १३७ । गडुलादिवर्जितात् त्वतलावधिकृतावाब्रह्मणत्व इति त्वशब्दात् पूर्वे । इति पक्षे त्वतलौ भवत । सौराज्य । न इति टित्व । सुराजत्व । सुराजता । एव–यौवराज्य । युवराजत्व । युवराजता । पत्यन्तेभ्य – बृहस्पतेर्भावः कृत्य कर्म वा बार्हस्पत्य । बृहस्पतित्व । बृहस्पतिता । गुणे उक्तिर्येषा ते गुणोक्तय । गुणद्वारेण च ये द्रव्यवृत्तयस्तेभ्य जडस्य भाव. कृत्य वा जाड्य । जडत्व । जडता । मौर्ख्यं । मूर्खत्व । मूर्खता । राज्ञो भावः कृत्य वा राज्य, राजत्व । राजता । कवेर्भाव कृत्य वा काव्य । कवित्व । कविता ॥ तारका सजाता अस्य इति विगृह्य—

५८० ॥ तदस्य संजातं तारकादिभ्य इतः । ३ । ४ । १९७ । तारकादिभ्यस्तदस्य सजातमित्यस्मिन् विषये इत इत्यय त्या भवति । तारकित नभ । पुष्पित । कुसुमित । पल्लवित ॥ ऊरु प्रमाणमस्येति विगृह्य–

५८१ ॥ प्रमाणे मात्रट् । ३ । ४ । १९९ । तदिति वा समर्थात् प्रमाणे वर्तमानात् अस्येति तार्थे

५८६ ॥ वैतदो घः । ३ । ४ । २०८ । एतदः परस्य घतोरादेर्घकारस्य वकारादेशो भवति ।

५८७ ॥ आः । ३ । ४ । २०८ । यत्तद्दृग्दशदक्षेषु परत पूर्वस्याल भवति । इति दकारस्यात्व । एतन्मानमस्येति विग्रहे— एतावान्निष्क । एतावद्धान्य । एतावती शाटी । एतावतो गुणिन ।

५८८ ॥ यत्तदः । ३ । ४ । २०९ । यत्तद्भ्या परस्य घतोर्घकारस्य वकारादेशो भवति । पूर्ववच्छेष । यन्मानमस्य यावान् । यावत् । तावान् । तावत् । ज्ञापकमिदमवादेशवचनमेतत् - यत्तदभ्यो घतुर्भवतीति ॥ चत्वारोऽवयवा अस्येति विग्रह्य— स्येरिति वर्तमाने—

५८९ ॥ अवयवे तयट् । ३ । ४ । २११ । स्यिसज्ञावाचिनोऽवयवे वर्तमानात् वातात् अस्येति तार्थेऽन्यथिनि तयट् भवति । टकारो ङ्यर्थ । खादावषे इति पदत्वे रेफस्य "छवि"इति सत्व ।

५९० ॥ मात्सुपस्त्ये । ५ । ४ । ७८ प्रापरस्य सकारस्य सुनताद्विहिते तकारादो त्ये परत षत्व भवति । इति षत्व । चतुष्टय । चतुष्टय समन्तभद्रस्य । चतुष्टयशब्दाना प्रवृत्ति । पचतयो यम । दशतयो धर्म ॥ एकादशाना पूरण इति विग्रहे—

५९१ ॥ तस्य स्यिपूरणे डट् । ४ । १ । १ । तस्येति तासमर्थात् स्यिसस्यावाचिन स्यिसज्ञापूरणेऽभिधेय डट् त्यो भवति । टकारो ङ्यर्थ । डकारष्टिखार्थ । एकादश । एव—द्वादश । त्रयोदश । एकादशी तिथि ॥ पचाना पूरण इति विग्रहे—

५९२ ॥ नोऽसे मट् । ४ । १ । २ । नकारान्तात् स्थिसंज्ञावाचिनो मृदः स्थिपूरणे मडित्ययं त्यो भवत्यसे । पञ्चम । सप्तमः । पञ्चमी तिथि. ॥ षण्णां पूरणमिति विगृह्य—

५९३ ॥ षट्कतिकतिपयस्य थुक् । ४ । १ । ५ । षट् कति कतिपय इत्येतेषां थुगागमो भवति डटि परतः । दुत्व । षष्ठः । षष्ठी तिथिः । कतिथः । कतिपयथः । ज्ञापकमिदमेव डटि थुग्वचन-कतिपयादपि डट् भवतीति ॥ चतुर्णां पूरण इति विगृह्य—

५९४ ॥ चतुरः । ४ । १ । ६ । चतुर् इत्येतस्य थुगागमो भवति डटि परतः । चतुर्थः । चतसृणा पूरणी चतुर्थी । तसादित्वात् पुम्भावः ।

५९५ ॥ छयौ चलुक्च । ४ । १ । ७ । चतुर् इत्येतस्मात् छयौ त्यौ भवतश्चकारस्य ख । तुरीयः । तुरीया । तुर्यः । तुर्या । एव चतुरस्त्रैरूप्य ॥ द्वयोः पूरण इति विग्रहे—

५९६ ॥ द्वेस्तीयः । ४ । १ । ८ । द्वि इत्येतस्मात् तीयो भवति । डटोऽपवादः । द्वितीयः । द्वितीया ॥

५९७ ॥ त्रेस्तृ च । ४ । १ । ९ । त्रि इत्येतस्मात् तीयो भवति त्रेश्च तृ इत्ययमादेशो भवति । त्रयाणा पूरणः तृतीयः । तृतीया ॥ गावोऽस्य सन्तीति विगृह्य—

५९८ ॥ तदस्यास्त्यस्मिन्निति मतुः । ४ । १ । ४० । तदिति वासमर्थात् अस्तीत्येवमर्थविशिष्टात् अस्येति तार्थे अस्मिन्नितीवर्थे वा मतुर्भवति । उकार उगिद्कार्यार्थः । पूर्वरच्छेप । गोमान् । एव-श्रीमान् । वृक्षा अस्मिन् सन्ति-वृक्षवान् ,प्लक्षवान् पर्वत

५९९ ॥ मयोट्प्रयो मतोर्वोऽयवादिभ्यः । ५ । ३ । ४६

मकारांतादवर्णांतान्मकारोडेऽवर्णोडे: अयंताच्च परस्य मतोर्वकारादेशो भवति यवादीन् वर्जयित्वा । किंवान् । गुणवान् । शालावान् । शमीवान् । अहंवान् । विदुत्वान् । इति करणे विवक्षार्थः । तेन—

भूमनिंदाप्रशसासु नित्ययोगेऽतिशायने ।
ससर्गेऽस्तिविवक्षाया प्रायो मत्वादयो मताः ॥

भूमा प्राचुर्य तस्मिन् भूम्नि—गोमान् । निंदायां—ककुदावती । प्रशसायां—शीलवती । नित्ययोगे—क्षीरिणो वृक्षाः । अतिशायने—उदरिणी कन्या । ससर्गे—दंडी । छत्री । भूमादिदर्शन प्रायः किं ? सत्तामात्रेऽप्यय दृश्यते । व्याघ्रवान् पर्वतः । स्पर्शरसगधवर्णवंतः पुद्गलाः । वागस्यास्त्यस्मिन् वेति विग्रहः—

६०० ॥ वाचो ग्मिन् । ४ । १ । ४९ । वाच् इत्येतस्मात् मत्वर्थे वा ग्मिन् भवति । अत्र गकार इत् । गकारादित्वात् 'ले' इति सूत्रेण पूर्वस्य अनुनासिकादेशो न भवति । गकारो नासिक्यनिवृत्त्यर्थः । वाग्मी । वाग्वान् ।

६०१ ॥ क्षिप्यालाटौ । ४ । १ । ४६ । वाच् इत्येतस्माद् मत्वर्थे क्षिपि क्षेपे गम्यमाने आल-आट इत्येतौ त्यौ भवतः । वाचालः । वाचाटः । यः फल्गु भाषते स एव क्षिप्यते ॥ माया अस्यास्त्यस्मिन्निति वा विग्रहः—

६०२ ॥ मायाऽऽमयमेधास्रक्तपोऽसो विन् । ४ । १ । ७४ । माया आमय मेधा स्रज् तपस् इत्येतेभ्योऽसतेभ्यश्च मृद्भयो मत्वर्थे विन् वा भवति । मायावी । आमयावी । अत एव निपातनादीत्व । मेधावी । स्रग्वी । तपस्वी । यशस्वी । वर्चस्वी । पयस्वी । मत्वर्थे स्तावित्ति भसंज्ञया पदकार्यं रित्वादि न भवति ।

पक्षे तु मतुः । मायावान् । आमयावान् । मेधावान् । स्रग्वान् । ताप-स.—ज्योत्स्नादित्वादण् । यशस्वान् । यशस्वी । सरस्वती ॥ नौर-स्यास्त्यस्मिन्निति वा विगृह्य— ।

६०३ ॥ **नौशिखादिभ्यां ठन्नौ** । ५ । १ । ७९ । नावादिभ्यश्शिखादिभ्यश्च यथासंख्यं मत्वर्थे ठ इन् इत्येतौ त्यौ वा भवतः । पूर्ववच्छेष । नाविकः । नौमान् । कुमारिकः । कुमारीवान् । एवं-शिखी । शिखावान् । माली । मालावान् ।

६०४ ॥ **अतोऽनेकाचः** । ४ । १ । ७६ । अकारान्ता-दनेकाचो मृदो मत्वर्थे वा ठनौ त्यौ भवतः । दन्तोऽस्यास्तीति दन्तिकः । दन्ती । दन्तवान् । छत्रिकः । छत्री । छत्रवान् ॥ अतः परं प्रायशः स्वार्थिकास्त्याः । तत्र विशेषणं प्रकृतेर्विज्ञायते । तच्च त्येन द्योत्यते ।

६०५ ॥ **किंस्त्र्यबहोरद्व्यादिवैपुल्यात्** । ४ । १ । १०८ । किम्शब्दात् स्त्रिसञ्ज्ञकात् द्व्यादिवर्जितात् बहुशब्दा-द्वैपुल्यवाचिनो वक्ष्यमाणास्त्याः भवति । इत्ययमधिकारः "ते सुपः" इत्यतः प्राग् वेदितव्यः इति वर्तमाने-

६०६ ॥ **कायास्तस्** । ४ । १ । ११३ । किमादि-भ्यः कातंभ्यस्तस् भवति । कस्मादिति विगृह्य—तस् । पूर्वस्य सुपः लुप् । "ते सुपः" इति सुप्सञ्ज्ञाया पुनस्त्यदादिकार्यं । कुत्तसोरिति कादेशः । कुतः । एवं—सर्वस्मात्—सर्वतः । विश्वतः । यतः । ततः । अस्मात्—इतः । इदम इशिति इशादेशः । एतस्मात् अतः ।

६०७ ॥ **अश्** ४ । १ । ११२ । एतदोऽशित्यादेशः स्यात् । शकारः सर्वादेशार्थः । बहुभ्यः—बहुतः । तसादाविति पुंभावे स्त्रिया-मप्येवं रूपं । तसादन्तस्य ञित्वात् सुप लुप् ॥

६०८ ॥ ईपत्रः । ४ । १ । ११६ । किमादिभ्यो-ऽक्ष्यादिवर्जितादीबंतात् त्र इत्ययं त्यो भवति । सर्वस्मिन् सर्वत्र । यत्र । तत्र । बहुषु बह्वीषु वा बहुत्र ॥

६०९ ॥ किमोऽश्च । ४ । १ । ११७ । किम्शब्दा-दीबंतात् अश् इत्ययं त्यो भवति त्रश्च । कस्मिन् क । कुत्र ॥

६१० ॥ इदमो हः । ४ । १ । ११८ । इदम्शब्दा-दीबतात् ह इत्ययं त्यो भवति । अस्मिन्-इह । त्रापवादोऽयं ।

६११ ॥ भवत्वायुष्मदीर्घायुर्देवानांप्रियैकार्थाच्च । ४ । १ । ११९ । भवत् आयुष्मद् दीर्घायुस् देवानांप्रिय इत्येतत्समानाधिकरणात् किंस्विबहोरक्ष्यादिवैपुल्यात् सुम्मात्रातात् त्रत्यो भवति तश्च । स भवान् । तत्र भवान् । ततो भवान् । स आयुष्मान्, तत्रायुष्मान्, तत आयुष्मान्। स दीर्घायुः, तत्र दीर्घायुः, ततो दीर्घायु। । स देवानांप्रियः, तत्र देवानांप्रियः, ततो देवानां-प्रियः । एवमुत्तरत्रापि योज्यं । सर्वविभक्तीषु नेय ॥

६१२ ॥ कालेऽनद्यतने र्हिः । ४ । १ । १२० । किमादेरीबतादनद्यतने काले यथासंभवं वर्तमानात् र्हित्यो भवति । कस्मिन् अनद्यतने काले कर्हि । यर्हि । तर्हि । काले इति किं ? कस्मिन्नद्यतने भोजने-कुत्र । यत्र । अनद्यतने इति किं ? कस्मिन् काले-कदा । यदा ॥

६१३ ॥ इदमः । ४ । १ । १२१ । काले वर्तमाना दीबंतात् इदमो र्हित्यो भवति । अस्मिन् काले एतर्हि ।

६१४ ॥ एतेतौ र्थोः ॥ ४ । १ । ११९ । रेफादौ थकारा-दौ च त्ये परतः इदमः एतेतादेशौ भवतः ॥

६१५ ॥ अधुना । ४ । १ । १२२ । काले वर्तमानादीवंतात् इदमः अधुना त्यो भवति । अस्मिन् काले-अधुना । इदम इश् । एरिति ख ।

६१६ ॥ दानीं । ४ । १ । १२३ । काले वर्तमानादिदम ईवंतात् दानीमित्यय त्यो भवति । अस्मिन् काले इदानीं ।

६१७ ॥ तदः । ४ । १ । १२४ । तच्छब्दात् काले वर्तमानादीवतात् दानीमित्ययं त्यो भवति । तस्मिन् काले तदानीं ।

६१८ ॥ यत्किंतत्सर्वैकान्याद्दा । ४ । १ । १२५ । यत् किम् तत् सर्व एक अन्य इत्येतेभ्यः काले वर्तमानेभ्यः ईवंतेभ्यो दात्यो भवति । यस्मिन् काले यदा । कदा । तदा । सर्वदा । एकदा । अन्यदा । काले इति किं ? यत्र । क्व । तत्र ।

६१९ ॥ सदासद्यः । ४ । १ । १२६ । सदा सद्यस् इत्येतौ शब्दौ निपात्येते । सर्वशब्दादीवतात् काले वर्तमानात् दात्यो निपात्यः सभावश्च । सर्वस्मिन् काले सदा । सद्यः इति समानशब्दाद् यस्त्यः सभावश्च, समाने काले सद्यः । समानेऽहनि इति वा सद्यः ।

६२० ॥ प्रकारे था । ४ । १ । १३१ । यथाविहित सुप्संबंधः । सामान्यस्य भेदाभेदांतरानुवृत्तः प्रकारः । तत्र वर्तमानात् किमादेरद्व्यादिवैपुल्याद् यथासंभव सुवंतात् थात्यो भवति । सर्वेण प्रकारेण सर्वथा । यथा । तथा ॥

६२१ ॥ कथमित्थं । ४ । १ । १३२ । कथमित्थमिति किमिदम्यामेतदर्थ प्रकारे थमिति त्यो निपात्यते । केन

प्रकारेण कथं। अनेन, एतेन च प्रकारेण इत्थं। एतेतौ थोरिति इदमेतदोस्थकारादाविदादेशो भवति॥

६२२॥ स्योर्विधार्थे धा। ४। १। १४८। स्यिसंज्ञकाच्छब्दाद् विधार्थे प्रकारे धात्यो भवति। एकेन प्रकारेण एकधा। द्विधा। त्रिधा। चतुर्धा। पंचधा। बहुधा॥

६२३॥ याप्ये पाशः। ४। १। १५४। याप्यंतेऽपनीयंतेऽस्माद् गुणा इति याप्यो निंद्यस्तस्मिन् अर्थे वर्तमानान्मृदः स्वार्थे पाश इत्ययं त्यो भवति। याप्यो वैयाकरणो वैयाकरणपाशः। तार्किकपाशः॥

६२४॥ तमः प्रकृष्टे मिङश्च। ४। १। १६०। मिङंतान्मृदश्च प्रकृष्टे प्रकर्षवत्यर्थे वर्तमानात् स्वार्थे तम इत्ययं त्यो भवति। सर्वे इमे पचंत्ययमेषां प्रकृष्टं पचतीति तमः।

६२५॥ इयेर्मिङ्किंङ्गादामद्रव्ये। ४। २। १८। झिसंज्ञकादेकारांतात् मिङः किमश्शब्दाच्च परो यो झस्तमतरौ तदंतात् आमित्ययं त्यो भवति न चेत्स द्रव्ये वर्तते। इति आम्। पचतितमां देवदत्तः। आमंतस्य झित्वात्सोरुप्। एवं—पचततमां। पचंतितमां॥ सर्वे इमे शुक्लाः अयमेषां प्रकृष्टः शुक्लः शुक्लतमः। आढ्यतमः। साधकतमः॥

६२६॥ द्विविभज्ये तरः। ४। १। १६१। द्वयोरर्थयोस्तद्गुणयोर्मध्ये यः प्रकृष्टस्तस्मिन् विभज्ये विभक्तव्ये च प्रकृष्टेऽर्थे वर्तमानान्मिङंतात् मृदश्च तरस्त्यो भवति। तमोऽपवादः। द्वाविमौ पचतः, अयमनयोः प्रकृष्टं पचति पचतितरां। पठतितरां। अधीतेतरां। पूर्ववदाम्। द्वाविमौ पटू। अयमनयोः प्रकृष्टः—पटुतरः। पाचकतरः।

विमज्ये-मिङः-साकाश्यकेभ्यः पाटलिपुत्रकाः पचतितरा, पचतेतरा। मृदः-साकाश्यकेभ्यः पाटलिपुत्रकाः आढ्यतरा, अभिरूपतराः। व-हव इमे पटवः अयमेषां प्रकृष्टः पटुः, द्वाविमौ पटू अयमनयोः प्रकृष्टः पटुरिति च विगृह्य-पूर्वेण सूत्रद्वयेन विहितयो.-

६२७ ॥ गुणांगाद्वेष्ठेयसू। ४। १। १६३। गुणाग-मप्रधानं यस्य तस्माद् गुणागाद् गुणमभिधाय द्रव्ये वर्तमानाच्छब्दात् तरयोस्तमतरयोः स्थाने यथासंख्य इष्ठ ईयसु इत्येतावादेशौ भवतः। तुरिष्ठेयस्सु"टेरिति टिखं। टकार उगित्कार्यार्थः। पटिष्ठ.। पटीयान्। अघिष्ठः। अघीयान्॥

६२८॥ प्रशस्यस्य श्रः। ४। १। १६४। प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति इष्ठेयसोः परतः। सर्वेषामय प्रशस्यः-श्रेष्ठः। अयमनयोरस्माद् वा प्रशस्यः-श्रेयान्॥

६२९ ॥ प्रशस्ते रूपः। ४। १। १७०। मिङ तान्मृ-दश्च प्रशस्तेऽर्थे वर्तमानात् रूप इत्ययं त्यो भवति। प्रशस्त प-चति-पचतिरूप। पचतोरूप। पचतिरूपं। प्रशस्तो वैयाकरणः, वैया-करणरूपः। पंडितरूपः। दर्शनीयरूपेति तसादित्वात् पुंभावः।

६३०॥ आसिद्देऽज्ञादेर्देश्यदेशीयकल्पाः।४। १। १७१ मिङतात् ङ्याम्मृदश्च ज्ञायतर्जितात् आसिद्देऽर्थे वर्तमानात् स्वार्थे देश्य देशीय कल्प इत्येते त्या भवति। आनिदमीपत्समाप्त पचति पचतिदेश्य। पचतिदेशीयं। पचतिकल्पं। आसिद्ध- पटुः पटुदेश्यः पटुदेशीयः। पटुकल्पः।

६३१ ॥ मिङ्स्त्नेरक् प्राग्टेः। ४। १। १७६। मिङतस्य स्निसञ्ज्ञकस्य च टेः प्राग् अगित्यय त्यो भवति।

कापवादः ।  कुत्सितमज्ञातमल्पं वा पचति पचतकि । पचतकः । पचंतकि । सर्वकः । सर्वकौ । सर्वके । विश्वकः । विश्वकौ । विश्वके । असुकः । असुकौ । असुके । असुकाः । "वासुकः" इत्यकोऽकारस्य पक्षे उकारो निपात्यते । साकोऽपि किमः कादेश इति कः क्व किमित्यादि ।

६३२ ॥ कियत्तदन्याद् द्वयोर्निर्धार्ये डतरः । ४ । १ । १९९ । किं यत् तत् अन्य इत्येतयोर्द्वयोर्निर्धार्येर्थे वर्तमानेभ्यः डतर इत्यय त्यो भवति । समुदायादेकदेशस्य प्रकृष्य निष्कस्य धारण निर्धारणं । को भवतोः कठः कतरो भवतोः कठः पटुः कर्ता देवदत्तो वा । एवं-यतरः । ततरः । अन्यतरः । ■ आगच्छतु ॥

६३३ ॥ वैकात् । ४ । १ । २०० । एकशब्दाद् द्वयोरेकस्मिन् निर्धार्ये वर्तमानात् डतरत्यो वा भवति । एको भवतोः कठः एकतरो भवतोः कठः । पटुः कर्ता वा । वावचनादगपि । एककः ॥

६३४ ॥ बहूनां प्रश्ने डतमश्च । ४ । १ । २०१ । किमादेर्बहूनां मध्ये निर्धार्ये वर्तमानात् प्रश्नविषये डतमो भवति डतरश्च वा । बहुष्वासीनेषु कश्चित् कंचित् पृच्छति-को भवतां मध्ये कठः कतमः कतरो वा भवतां कठः । एवं-यतमः, यतरो वा । ततमः, ततरो वा । अन्यतमः अन्यतरो वा भवतां कठः स आगच्छतु ॥

६३५ ॥ एकात् । ४ । १ । २०२ । एकशब्दात् बहूनामेकस्मिन्निर्धारणे वर्तमानात् डतमो भवति । एकतमो भवतां

कठः । पटुर्गता वा । वाक्चनादगपि । एककः । महाधिकाराद्वाक्यमपि एकः ॥

६३६ ॥ प्रकारोक्तौ जातीयः । ४ । २ । १० । प्रकारोक्तौ वर्तमानात् मृदो जातीयस्त्यो भवति । पटुः प्रकारः पटुजातीयः । मृदुजातीयः । तज्जातीयः । यज्जातीयः । नानाभूतः प्रकारोऽस्य नानाजातीयः । एवंजातीयः । यथाजातीयः । तथाजातीयः ।

६३७ ॥ स्येभ्वारे कृत्वस् । ४ । २ । २१ । ह्यर्थस्यायौगपद्येन वृत्तिस्तत्कालो वारस्तस्मिन्नर्थे वर्तमानात् स्यिसञ्ज्ञकान्मृदः स्वार्थे कृत्वसित्ययं त्यो भवति । पंच वारान् भुंक्ते पंचकृत्वः । षट्कृत्वः । शतकृत्वः । सहस्रकृत्वः । बहुकृत्वः । यावत्कृत्वः ।

६३८ ॥ चतुस्त्रिद्वेः सुच् । ४ । ३ । २२ । चतुर् त्रि द्वि इत्येतेभ्यः स्यिसंज्ञकेभ्यो वारे वर्तमानेभ्यः सुच् इत्यय त्यो भवति कृत्वसोऽपवादः । चतुरो वारान् भुंक्ते चतुर्भुंक्ते । त्रिर्भुंक्ते । द्विर्भुंक्ते । कृत्वसुसुजंतस्य स्त्रिवात्सुपो ह्वेरित्युप् ॥

६३९ ॥ भेषजादिभ्यष्ष्यण् । ४ । २ । २८ । भेषज इत्येवमादिभ्यः स्वार्थे ष्यण् त्यो वा भवति । भिषज्यतीति भेषजं । भिषजः कण्ड्वादिगतत्वात् पचाद्यचि सत्यखे च निपातनादत एव एप् । भेषजमेव भैषज्यं । अनंतमेवानंत्यं । इतिहेत्येव ऐतिह्यं । इतिहेति निसंघात उपदेशपरंपरायां वर्तते । चत्वार एव वर्णाः चातुर्वर्ण्यं । चातुराश्रम्यं । त्रैकाल्यं । शीलमेव शैलीयमाचार्यस्य । कर्मणोऽणिति वर्तते ।

६४० ॥ प्रज्ञादिभ्यः । ४ । २ । ५२ । प्रज्ञ इत्येवमादि-

भ्यः स्वार्थे अण् भवति । प्रजानातीति प्रज्ञः । प्रज्ञ एव प्राज्ञः । प्राज्ञी कन्या । प्रज्ञाश्रद्धार्चावृत्तेर्णः" इति मत्वर्थाण्णादस्य स्त्रिया विशेषः । णे सं प्रज्ञा अस्या अस्तीति प्राज्ञा कन्या इति भवति । एव वणिगेव वाणिजः । मन एव मानसः ।

६४१ ॥ वर्णात् कारः । ४ । २ । ९६ । वर्णवाचिना शब्दः कारस्त्यो भवति स्वार्थे । ल एव लकार. । ककार । इकार । बहुलमित्यनुवर्तमानात् क्वचिन्न भवति । अभिनिष्ठाना विसर्जनाय इति । क्वचिद्विभाषा स्यात्कार, स्याच्छब्द । एवकार, एवशब्दः । क्वचिदन्यदेव रादिफः रेफः । रकार इति साधु ।

६४२ ॥ देवादिभ्यस्त्रेवीभ्यः । ४ । २ । ८२ । इवर्तेभ्य ईवर्तेभ्यश्च देवादिभ्य स्वार्थे त्रात्यो भवति । देवाँस्तुहि । देवत्रा स्तुहि । देवत्रा गच्छति । मनुष्यत्रा गच्छति । देवेषु वसति देवत्रा वसति । मनुष्यत्रा वसति ॥ इत्यादिसर्वो वृद्धिविमहोदधेरधिगन्तव्यः ।

इति प्रक्रियावतारे वृद्धिर्नाम चतुर्थः ॥

---

## अथ मिङधिकारः ।

अथ भवामीत्येवमादिकस्य सामान्याकारेण लोके प्रसिद्धेरुत्पादविगमात्मकत्वान्नित्यतामवलम्बमानस्याव्याख्यानाय विशेषाकारेण करणसन्निपातोपनीतोत्पादविगमात्मकत्वादनित्यतामादधानस्योत्पत्तये च प्रकृत्यादिप्रक्रियावतारो व्यवहाररूपार्थकालकारकसप्रतिपत्तये व्याख्येय । तत्र प्रकृत्यधीनत्वादितरेषा प्रवृत्ते प्रकृतिरेव तावद् व्याख्यायते । प्रथम क्रियत इति प्रकृतिः । सा द्विधा, सकर्मकेतरभेदेन । त्रिधा मन्दो-मयन्द्भेदेन । सप्तधा विकरणभेदेन । दशधा-गणभेदेन । तत्र—भू सत्तायाम् । भू इत्येषा प्रकृति सत्तायामर्थे

वर्तते । इत्युक्तार्थत्वात् मवाशब्दस्य निवृत्तिः । लोके प्रयोगार्हत्वाद् चन्तसामित्वन्यायादुकारस्यावस्थान ।

६४३ ॥ भूवादयो धुः । १ । २ । १ । भू इत्यवमादया वा इत्येनप्रकाराः पाटतोऽर्थतश्च परिच्छिन्नात्मनो धुसञ्ज्ञका भवति ॥ इति धुसञ्ज्ञा । यद्यप्येव क्रियावचनस्य धुत्व सत्ता च द्रव्यधर्म. परिस्पन्दरूपो न भवति । तथापि प्रसिद्धक्रियासाचिषु पचत्यादिष्विवात्रापि कालत्वपामिभ्यक्तिदर्शन । कृषादिनामशब्देष्वनुपलभ्यमान क्रियारूप बुद्ध्युत्पत्तिनिमित्त भवतीति बुवा या सती सत्ता क्रियाव्यपदेशमर्हतीत्यविरोध । धोस्य पर " इत्यनुवृत्तौ त्रिषु कालेषु त्रिषु साधनेषु च यथासमव तव्यादिषु प्राप्तेषु वक्तुर्विवक्षापूर्विका शब्दप्रवृत्ति साध्यानुरूपसाधनोपादानस्य साध्यत्वात् लोकवादेरिति सत्तामात्रादिकस्य निष्पादन य एव योग्यास्तान् एवोपादायत वर्तमानं काल निरूक्षित लडित्यधिकृत्य—

६४४ ॥ सति । २ । २ । ११९ । सति वर्तमानकाले या क्रिया तद्वाचकाद् धो परो लट् भवति । स च वर्तमानकालो द्विविध । परमार्थरूपो व्यवहाररूपश्चेति । तत्र अणोरण्वतरव्यतिक्रमणसमयविभागरूप परमार्थरूप । आरम्भात् प्रभृत्या उपरमाद् व्यवहाररूप । टकार "टिदृदरे" इति विशेषणार्थं । अकारो "विदो लटो वा" इति विशेषणार्थः । क्व कर्तर्यनुवर्तमाने—

६४५ ॥ लः कर्मणि च भावे च धेः । २ । ४ । ५७ । सकर्मकेभ्यो धुभ्य कर्मणि कर्तरि च लकारा भवति, धिसञ्ज्ञकेभ्यो भावे च कर्तरि च लकारा भवति । को धि ?

६४६ ॥ अकर्मको धिः । १ । २ । २ । अविद्यमानकर्मकोऽविवक्षितकर्मको वा या धु स धिसञ्ज्ञको भवति ।

तत्र भिन्नक्षात् कर्तरि लकारस्तस्य कृत्त्वात् कृत्सज्ञायां स्वादि. प्राप्त । वलादेरिडिति इट्, गागयोरित्यप् च । एवमेतेषु विधिषु प्राप्तेषु अनवकाशत्वात् ।

६४७ ॥ लो । २ । ४ । ६४ । विशेषकाननुबधानुत्सृज्य सामान्यस्य लकारमात्रस्य स्थाने वक्ष्यमाणा आदेशा भवति । इत्यधिकृत्य–

६४८ ॥ **मिब्वस्मस्सिप्थस्थतिप्तस्झीइड्वहिमहिथासाथांध्वंतातांझङ्** । २ । ४ । ६८ । मिप् वस् मस् सिप् थस् थ, तिप् तस् झि, इट् वहि महि, थास् आथा ध्व, त आता झङ् इत्येते आदेशा भवति । इत्यनियमेन मिङ्गा प्रसगे नियम. क्रियते ।

६४९ ॥ ङेदितो दः । १ । २ । ६ । ङकारेत एकारेतश्च धोः परस्य लकारस्य स्थाने द एव भवति ।

६५० ॥ डौ । १ । २ । ७ । भावे कर्मणि च द एव भवति । एव प्रकृत्यर्थनियमे कृते मिङामनियमात् पुनरस्य विशेषेण प्राप्तावदिमुच्यते ।

६५१ ॥ मं । १ । २ । ८९ । यत्र म च दश्च प्राप्नोति तत्र ममेव भवति । किं म ?

६५२ ॥ लो मं ॥ १ । २ । १७७ । लस्य स्थाने विधीयमाना आदेशा मसज्ञका भवति । लो म, इडान द इति चानुवर्तमाने–

६५३ ॥ मिङस्त्रिशोऽस्मद्युष्मदन्याः । १ । २ । १७९ । मसज्ञकस्य दसज्ञकस्य च मिङस्त्रीणि त्रीणि वचनानि यथासख्य अस्मद् युष्मद् अन्य इत्येव सज्ञकानि भवति । मिप् वस् मस् इत्य-

स्मद् । सिप् थस् ॥ इति युष्मद् । तिप् तस् झि इत्यन्यः । दस्य खल्वपि-इट् वहि महि इत्यस्मद् । थास् आथां ध्वं इति युष्मद् । त आतां झङ् इत्यन्यः ।

६५४ ॥ एको द्विर्बहुश्चैकशः । १ । २ । १८३ । तेषां अस्मद्युष्मदन्यसंज्ञकानां त्रिकाणामेकैक एको द्विर्बहुरित्येवं संज्ञो भवति । मिबित्येकः । वसिति द्विः । मसिति बहुः । एवं शेषाणामपि योज्यं । तेषां संकरेण प्राप्तौ सत्यां नियमः क्रियते ।

६५५ ॥ साधने स्वार्थे । १ । २ । १८० । तेऽस्मदादयः एकादयश्च स्वार्थे साधने भवति । अस्मत्पदस्यार्थे साधने अस्मत्त्रिकं भवति । युष्मत्पदस्यार्थे साधने युष्मत्त्रिकं भवति । आभ्यामन्यस्य पदस्यार्थे साधने, अन्यत्त्रिकं भवति । तथा एकत्वविशिष्टेऽर्थे साधने एको मिप् भवति । एवमितरत्रापि योज्यं । पकारा इत्संज्ञा गे पीति विशेषणार्थाः । यस्ये तदादि गुरिति पूर्वस्य गुसंज्ञा ।

६५६ ॥ मिङ्शिद् गः । २ । ४ । ९४ । धोर्विहितो यो मिङ् शिच्च स गसंज्ञो भवति । इति परस्य गसंज्ञा । गागयेरित्येप् प्राप्तः " नेटः " इति वर्तमाने—सम्वोऽधस्य मिवीति प्रतिषिद्धः । गे यगिति वर्तमाने—

६५७ ॥ कर्तरि शप् । २ । १ । ८१ । कर्तृवाचिनि गे परतो धोः परतः शबित्ययं त्यो भवति ।

६५८ ॥ ईप्केत्यासन्नः प्राक्परयोः । १ । १ । ६९ । ईवर्थो यत्र निर्दिश्यते तत्र पूर्वस्यासन्नस्य कार्यं भवति । कार्थो यत्र निर्दिश्यते तत्र परस्यासन्नस्य कार्यं भवति । इति पूर्वपरयोः स्थाने

निर्झति-अनवकाशत्वादोर्णेनिर्देशस्य पूर्वस्य स्थाने प्राप्ते त्यः पर एवेति नियमात् पूर्वपरयोर्मध्ये विकरणत्वात् भवति। शकारो मिङ्शिद्र ,, इति विशेषणार्थः। पकारो गेऽपीति विशेषणार्थ। तस्मिन् पूर्वस्य यणादेशः प्राप्तः। बाधित्वा त उवादेशः प्राप्त, । तमपि बाधित्वा परत्वादेप् प्राप्तः। येन नाप्राप्तिस्तद्बाधनमिति यणमेव पुनरप्यनङ्कादौ सावकाशमेप बाधित्वा उवादेश एव प्राप्तः। मध्येऽपवादा पूर्वान् विधीन् बाधते नोत्तरानिति यणमेवोवदेशो बाधते न पुनरेप्। अत मिदेरेविति वर्तमाने-गागयेरित्येप् एक स्थाने भवति। स्थासन्न इत्युकारस्यौकारः। अवादेशः। गारिति "सूभ्वोऽधस्य मिङि" इति च प्रसृत्य—

६५९ ॥ यञ्यतो दीः । ५ । २ । १०५। यञादौ मिङि परतो गोरकारान्तस्य दीर्भवति। गोरिति वर्तमाने—

६६० ॥ ञ्सोऽन्तः । ५ । १ । ३ । ञ इत्येतस्य गोर्निमित्तभूतस्य त्यावयवस्य अत इत्ययमादेशो भवति। स चानजन्तादेश। नकारस्यानुस्वारपरस्वत्वे "एप्यत "इति अकारस्य परस्व व। सुप्मिङन्त पदमिति मिङन्तस्य पदसंज्ञाया पूर्ववद् रिवविसर्जनीयौ। भवामि। भवाव। भवाम। भवसि। भवथ। भवथ। भवति। भवत। भवति। यथैव लोकादिशब्दप्रयोगे सत्यसति चैकादयो भवति। तथा अस्मदादिशब्दप्रयोगे सत्यसति चास्मदादय। तेन-केवलोऽपि प्रयोगस्तैस्सह च भवति। यथा अह भवामि। आवा भवाव। वय भवामः। त्व भवसि। युवा भवथ। यूय भवथ। स भवति। तौ भवत.। ते भवति। यत्र चास्मदादिपद प्रयोक्तु शक्यते तत्रास्मदादयो नान्यत्र। यथा-भवान् भवति। भवतौ भवतः। भवतो भ-

वति । अत्र हि युष्मच्छब्दपर्यायस्य भवच्छब्दस्य प्रयोगे युष्मच्छब्दस्य प्रयोक्तुमशक्यत्वात् सिप्थस्था न भवति ।

६६१ ॥ पूर्वः सहोक्तौ । १ । २ । १८१ । युगपद्वचनेऽस्मदादीना पदापेक्षया यः पूर्वः स भवति । स च त्वं च भवथः । त्वं चाहं च भवावः । स च त्वं च अहं च भवामः । एवं नित्यं मे प्राप्तेऽर्थविशेषणो दो निर्धार्यते । तत्रार्थविशेषाभिव्यक्तये "गर्द्धोर्यत् कार्यं तदंतरगमिति धुर्गिना युज्यते पश्चात् साधनवाचिना स्येनेति कर्मव्यतिहाराभिव्यक्त्यर्थमतिरिक्तव निर्धोः प्राक् प्रयुज्यते । अतिविशिष्टा क्रिया विशिनष्टि इति विरत्यय च गिः । ताभ्यां सुपः । ह्नेरिलुप् । यणादेशः । व्यतिभू इत्यतः पूर्ववल्लट् । तस्य "डेदितो दः" इत्यधिकृत्य—

६६२ ॥ कर्तरि ञे । १ । २ । ८ । ञार्थे वर्तमानात् धोः परस्य कर्तरि विहितस्य लस्य स्थाने दो भवति । कः पुनः ञार्थः ।

६६३ ॥ कर्मव्यतिहारे ञः । २ । ३ । ८५ । कर्मव्यतिहारेऽर्थे ञस्त्यो भवति । इति विहितः । तत्र शब्द कार्यस्यासंभवात् अर्थे कार्यं विज्ञास्यते । इति ञार्थः कर्मव्यतिहारः कृतस्य प्रतिकरणं ग्रहस्य प्रतिग्रहणं हरणस्य प्रतिहरणमित्यर्थः । को दः ?

६६४ ॥ इङानं दः । १ । २ । १७८ । इङिति प्रत्याहारः आन इति सरूपग्रहण । तौ दसंज्ञौ भवतः । इति । इट् थास् आथां ध्व, त आतां झङ्, इत्येते आदेशा भवति पूर्ववदस्मदाद्येकत्वादिनियमः । टकार. "स्तञ्झेटः" इति विशेषणार्थः । ङकारः प्रत्याहारार्थः ।

६६५ ॥ टिद्देरेः । २ । ४ । ६६ । टितो

स्थाने विहितस्य दस्य टेरेकारो भवति। यत्र एक एवाच् तत्र व्यपदे-शिवद्भावेनात्यादित्वे सति टित्व।

६६६॥ थासः सेः। २।४।६७। टितो लका-रस्य स्थाने विधीयमानस्य थासः से इत्ययमादेशो भवति। शबेबदा-देशाः। यप्यतो दीरिति दीत्व। अतो येयित्यधिकृत्य–

६६७॥ आतोऽपः। ५।१।१५६। गोरकारां-तादुत्तरस्य पिद्वर्जितस्य आकारस्य इयादेशो भवति। इत्याधे आते इत्यनयोराकारस्य इयादेशः।

६६८॥ व्योः खं वल्कौ। ४। ३। ६१। वका-रयकारयोः ख भवति त्यावयवे त्यकार्ये च वलि क्वौ च परतः। इति यकारस्य ख। आदेब्रिष्येप्। झोऽत इत्यतादेशः। इटि च एप्यत इति पररूप। व्यतिभवे। व्यतिभवावहे। व्यतिभवामहे। व्यतिभ-वसे। व्यतिभवेथे। व्यतिभवध्वे। व्यतिभवते। व्यतिभवेते। व्यतिभवते। एधै वृद्धौ। ऐकारोऽप्रयोगी दार्थः। ततः "सति" इति दट् पूर्ववर्त्तातिः। एधे, एधावहे, एधामहे। एधसे, एधेथे, एधध्वे। एधते, एधेते, एधते। डुपचाञ् पाके। डुशब्दपकाराकारञकारा इतः। ततो लडादय। पचामि। पचावः। पचामः। पचसि। पचथः। पचथ। पचति। पचतः। पचति। कर्त्रभिप्रफलविवक्षाया–

६६९॥ ञितः फलेशे। १। २। ८१। ञकारेतो धोः परस्य फले कर्तरि वर्तमानस्य लस्य दो भवति। शेषं पूर्ववत्। पचे। पचावहे। पचामहे। पचसे। पचेथे। पचध्वे। पचते। पचेते। पचते। तेभ्य एव धुभ्यः "त्य:,, व्यऽभो भ्वो भूते" इति वर्तमाने—

६७० ॥ अनद्यतने लङ् । २ । २ । १०९ । आन्याय्यादुत्थानादान्याय्यात् संवेशनादेषोऽद्यतन कालः । अहरुभयतोऽर्द्धरात्रं वा । न विद्यतेऽद्यतनोऽस्मिन् स तथा । तस्मिन् भूते वर्तमानाद् धातोर्लङ् भवति । ङकारो "ङितः सस्य" इति विशेषणार्थः । लकारो लुङ्लङ्लृङिति विशेषणार्थः । लस्य पूर्ववत्सर्वविधिः ।

६७१ ॥ मिप्थस्थतसोऽम्तंतताम् । २ । ४ । ८४ । ङितो लकारस्य स्थाने विहितानां मिप् थस् थ तस् इत्येतेषां यथासंख्यं अम् तम् त ताम् इत्येत आदेशा भवन्ति ।

६७२ ॥ ङितः सस्य । २ । ४ । ८२ । अस्मद्संज्ञकस्य ङितः सकारस्य स्य भवति । इत्यत्र सकारस्य ख ।

६७३ ॥ एर्म्ने । २ । ४ । ८३ । ङितो लकारस्य सिपूर्वसंज्ञानामिकारस्य ख भवति । पूर्ववत्स्थानपदेशः । यत्यतीर्दीरति दीर्घ ।

६७४ ॥ लुङ्लङ्लृङ्क्ष्वमाडाट् । ४ । ४ । ७४ । लुङ्लङ्लृङ्विषये गोरडागमो भवति न चेन्माङ् प्रयुज्यते । टकारोऽट्दादिरित्यत्र विशेषणार्थः । अभव । अभवाव । अभवाम । अभवः । अभवत । अभवन । अभवत् । अभवताम् । अभवन् । स्कातस्य जमिति तकारस्य म । ङितामुत्पादस्य टित्वाभावात् "टिदेटेरे" रित्यादि नास्ति । पूर्ववदन्यत् नीति । व्यत्यभवे । व्यत्यभवावहि । व्यत्यभवामहि । व्यत्यभवथा । व्यत्यभवथा । व्यत्यभवध्व । व्यत्यभवत । व्यत्यभवेताम् । व्यत्यभवन्त ॥ अत्तीति वर्तमाने—

६७५ ॥ अटश्च यौ । ४ । ३ । ९० । अट एव जनपजादौ यौ परत । इतप् । एध । ऐधावहि । ऐधामहि । ऐधथाः ।

ऐधेथां । ऐधध्व । ऐधत । ऐधेतां । ऐधत ॥ अपच । अपचाव । अपचाम । अपचः । अपचत । अपचत । अपचत् । अपचतां । अपचन् । अपचे । अपचावहि । अपचामहि । अपचथाः । अपचेथां । अपचध्व । अपचत । अपचेतां । अपचत । तेभ्य एव धुःय –

६७६ ॥ विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थने लिङ् २ । ३ । १९२ । विधिर्नियोगः । अज्ञातज्ञापनमित्येके । निमंत्रण नियोगत कर्तव्य । क्रियास्वाभिमुख्यकरणमित्येके । आमंत्रण यत्कामचारत. कर्तव्य । कर्तव्येष्वनुज्ञापनमित्येके । अधीष्टः सत्कारपूर्विका व्यापारणा । संप्रश्न संप्रसारणा बुभुत्सावेदन । प्रार्थना याञ्चा । एतेषु त्यार्थविशेषणेषु धोर्लिङ् भवति । ङकारो ङित सखमित्ति विशेषणार्थं । इकार "लिं सीयुट्" इति विशेषणार्थः । पूर्ववल्लस्य मिंगादय । ङितः सखमित्यादिकार्यं शववयादेशाश्च । ले. सीयुडिति प्राप्ते—

६७७ ॥ ड्यासुणमे । २ । ४ । ८६ । मविषये लिङादेशाना ड्यासुडागमो भवति । टकारो देशनिर्थ्यर्थं । उकार उच्चारणार्थं । ङकारो ङित्कार्यार्थं ।

६७८ झेर्जुस् । २ । ४ । ९० । लिङादेशस्य झेर्जुसादेशो भवति ॥ जकारो जुसीति विशेषणार्थं । "रुद्भ्यो गे" इत्यधिकृत्य—

६७९ ॥ लिङोऽन्त्यसखं । ५ । १ । १९३ । गविषये लिङोऽन्त्यस्य सकारस्य ख भवति । इति ड्यासुट सख ।

६८० ॥ अतो येय् । ५ । १ । १९४ । गोरकारांतात् परस्य या इत्येतस्य इयादेशो भवति । वक्ष्यति "०याः स वल्को,,

स्मद टावागमो भवति। टपावितौ पूर्ववद् प्रयोजयत । शबेबयादेशा । स्वेको दी' । अरुबिति वर्तमान—

६८७ ॥ अतो हेः । ४ । ४ । १०३ । गोरकारातात् परस्य हरुभ्भवति । भवानि । भवाव । भवाम । भव । भवत । भवत । भवतु । भवता । भवतु । दीर्घौ–टिद्दटारित्यत्व । थास सेभाव ।

६८८ ॥ आमेतः । २ । ४ । ७८ । लाडादेशस्य एकारस्य आमादेशो भवति ।

६८९ ॥ स्वो वाऽम् । २ । ४ । ७९ । लेट सकारवकाराभ्या परस्य एकारस्य यथासख्य व अम् इत्यतावादेशौ भवत । अस्मदद्याप् ।

६९० ॥ एत ऐ । २ । ४ । ८१ । लाडादेशस्यास्मद एकारस्य ऐकारादेशो भवति । व्यतिभवै । व्यतिभवावहै । व्यतिभवामहै । व्यतिभवस्व । व्यतिभवथा । व्यतिभवध्व । व्यतिभवता । व्यतिभवतां । व्यतिभवता । एधै । एधावहै । एधामहै । एधस्व । एधेथा । एधध्व । एधता । एधेता । एधता । पचानि । पचाव । पचाम । पच । पचत । पचत । पचतु । पचता । पचतु । पचै । पचावहै । पचामहै । पचस्व । पचेथा । पचध्व । पचता । पचता । पचता । आशीर्यविवक्षाया–

डित्कार्यं । भवानि । भवाव । भवाम । भवतात् त्वं । भव त्वं । भवत । भवत । भवतात् भवान् । भवतु भवान् । भवतां । भवतु । एवं पचतात् त्वं । पच त्वं । पचतात् भवान् । पचतु भवान् ॥ टुनदि समृद्धौ । इकारटुशब्दावितौ । इदितो नुम् । मकारो देशविधयर्थं । उकार उच्चारणार्थः । ततः पूर्ववल्लुगादयः । नदानि । नदाव । नदाम । इत्यादयः ॥ घसुङ् गतौ । ङकारोकारावितौ । नश्चापदान्ते झल्यनुस्वारः । ङित्वाद् "ङिदितो द" इति दो भवति । घसै । घसावहै । घसामहै । इत्यादि ॥ व्यञ् संवरणे । व्ययानि । व्ययाव । व्ययाम । इत्यादि । ञित्वात् "ञित फलदो" इति दः । व्यये । व्ययावहै । व्ययामहै ॥ लङि—अनदं । अनदाव । अनदाम । इत्यादि । अघसे । अघसावहि । अघसामहि ॥ इत्यादि ॥ अव्ययं अव्ययाव । अव्ययाम इत्यादि । अव्यये । अव्ययावहि । अव्ययामहि ॥ लिङि—नदयं नदेव । नदेम । इत्यादि ॥ घसेय । घसेवहि । घसेमहि ॥ इत्यादि । व्ययेयं । व्ययेव । व्ययेम । इत्यादि । व्ययेय । व्ययेवहि । व्ययेमहि । इत्यादि ॥ लोटि—नदानि । नदाव नदाम । इत्यादि । घसै । घसावहै । घसामहै । इत्यादि । व्ययानि । व्ययाव । व्ययाम । इत्यादि । व्यये । व्ययावहै । व्ययामहै इत्यादि ॥ इति भ्वादि ।

हु दानादनयोः । हु इत्यादयः । भव्य कर्तरि शप् । तस्य—

६९३ ॥ ह्वादेरुलुप् । २ । १ । ८२ । ह्वादरादेश्च परस्य शपो यथासख्यं उलुप् इत्येतावादेशौ भवतः । इयुच । पिलुप् ङित्वात् परस्य गागयोरित्यए । वतादावपि "भेऽपि" इति ङित्वादेए न भवति । पश्चात्—

६९४ ॥ लिङ्गुपकाचि धोः । ४ । ३ । १२ । लिदिउ-

चि कचि च परतो घोरादेरेकाचो द्वे रूपे भवतः । इति द्वित्वं-

६९५ ॥ पूर्वश्चः । ४ । ३ । ११ । तयोर्द्विरुक्तयोर्यः पूर्वः स चसंज्ञो भवति । चस्येत्याधिकृत्य-

६९६ ॥ प्रः ५ । २ । १८२ । चस्य प्रादेशो भवति । इति चस्य प्रः ।

६९७ ॥ कुहोश्चुः ५ । २ । १८७ । चसंबधिनः कवर्गस्य हकारस्य च चवर्गो भवति । इति हकारस्यासन्नो झकारः । झषो जश्,, इति जकारः । "थः" इति थसंज्ञायां—

६९८ ॥ थादत् ५ । १ । ४ । झस्यादादेशोभवत्यतापवादः । "होर्गे वः" । इत्युवादेशापवादो वकारः । जुहोमि । जुहुवः । जुहुमः । जुहोषि । जुहुथः । जुहुथ । जुहोति । जुहुतः । जुह्वति । व्यतिजुह्वे । व्यतिजुहुवहे । व्यतिजुहुमहे । व्यतिजुहुषे । व्यतिजुह्वाथे । व्यतिजुहुध्वे । व्यतिजुहुते । व्यतिजुह्वाते । व्यतिजुह्वते ॥ ओहाङ् गतौ ॥ ततो लडादयः "चस्य,, उचीति च वर्तमाने-शावुञ्चाद्वित्वादिः ।

६९९ ॥ भृञ्हाङ्माभिः । ५ । २ । १९८ । भृञ् हाङ् माङ् इत्येतेषामुचि चस्येकारादेशो भवति । "गेऽतः क्ङिति" वर्तमाने—

७०० ॥ श्नोरातः । ४ । ४ । १०९ । घसञ्ज्ञकस्य श्ना इत्येतस्याकारस्य ख भवति क्ङिति गे परतः । उत्तरत्र हलीति वचनात् इहाचि सम्प्रत्ययः । अभोरित्युत्तरत्र वर्जनात् हल्यपि घुसंज्ञकानां ॥

७०१ ॥ हल्यभोरीः । ४ । ४ । ११० । घुसञ्ज्ञकवर्जितस्य श्नस्य श्ना इत्येतस्य चाकारस्य ईकारादेशो भवति हलादौ क्ङिति परतः, जिहे, जिहीवहे 'जिहीमहे ' जिहीषे , जिहाथे '

जिहीध्वे। जिहीते। जिहाते। जिहते॥ डुधाञ् धारणे च। डुञा-वितौ। अतो लडादयः। शप उचि द्वित्वादिः। झपो जशिति जत्व, धस्नोरात इत्यात्वं। एकाचो वशो भष् झष-स्ध्वोरित्यधिकृत्य—

७०२॥ धः। ८। २। ७४। झषतस्य दधातेर्वशो भष् भवति झशि परतः। इति दस्य भष्भावः। दधामि। दध्वः। दध्मः। दधासि। धत्थः। धत्थ। दधाति। धत्तः। दधति। दधे। दध्वहे। दध्महे। धत्से। दधाथे। धध्वे। धत्ते। दधाते। दधते॥ लङि-झेर्जुसित्यधिकृत्य—

७०३॥ थविल्सेः। २। ४। ९१। थसंज्ञकाद् विदः सेश्च परस्य झेर्जुसादेशो भवति।

७०४॥ जुसि। ८। २। ९०। जुसि परतः इगंतस्य गोरेभवति। इस्पेए। अजुहवं। अजुहुव। अजुहुम। अजुहोः। अजुहुतं। अजुहुत। अजुहोत्। अजुहुता। अजुहवुः। व्यत्यजुह्वि। व्यत्यजुहुवहि। व्यत्यजुहुमहि। व्यत्यजुहुथाः। व्यत्यजुहाथां। व्यत्यजुहुध्वं। व्यत्यजुहुत। व्यत्यजुह्वातां व्यत्यजुह्वत॥ अजिहि। अजिहीवहि। अजिहीमहि। अजिहीथाः। अजिहाथां। अजिहीध्वं। अजिहीत। अजिहातां। अजिहत॥ अदध। अदध्व। अदध्म। अदधाः। अधत्तं। अधत्त। अदधात्। अधत्ता। अदधुः। अदधि। अदध्वहि। अदध्महि। अधत्थाः। अदधाथां। अधद्ध्वं। अधत्त। अदधातां। अदधत॥ लिङि—जुहुया। जुहुयाव। जुहुयाम। जुहुयाः। जुहुयातं। जुहुयात। जुहुयात्। जुहुयातां। जुहुयुः। दस्यपदे"इत्याकारस्य परस्य र। व्यतिजुह्वीय। व्यतिजुह्वीवहि। व्यतिजुह्वीमहि। व्यतिजु-ह्वीथाः। व्यतिजुह्वीयाथां। व्यतिजुह्वीध्वं। व्यतिजुह्वीत। व्यतिजुह्वीयातां।

व्यतिजुह्वीरन् ॥ निहीय । जिहीयहि । जिहीमहि । जिहीथा । जिहायाथा । जिहाध्व । जिहात । जिहीयाता । जिहारन ॥ निपूर्वडुधाञ् । विदध्या । विदध्याव । विदध्याम । विदध्या । विदध्यात । विदध्यत । विदध्यात् । विदध्याता । विदध्यु । विदधीय । विदधीवहि । विदधीमहि । विदधाथा । विदधायाथां । विदधाध्व । विदधात । विदधायाता । विदधीरन् ॥ लोटि—

७०५ ॥ झलहोर्हेर्धिः । ४ । ४ । १०१ । झलन्तात् हु इत्येतस्माच्च गो परस्य हेर्धरादेशो भवति । जुहवानि । जुहवाव । जुहवाम । जुहुधि । जुहुत । जुहुत । जुहोतु । जुहुता । जुह्वतु । आशिषि-जुहुधि जुहुतात् वा । जुहोतु । जुहुतात् वा । व्यतिजुहवै । व्यतिजुहवावहै । व्यतिजुहवामहै । व्यतिजुहुष्व । व्यतिजुह्वाथा । व्यतिजुहुध्व । व्यतिजुहुता । व्यतिजुह्वाता । व्यतिजुह्वता जिहै । जिहावहै । जिहामहै । जिहीष्व । जिहाथा । जिहीध्व । जिहीता । जिहाता । जिहता ।

७०६ ॥ भ्वसो हेच्चखे । ४ । ४ । ११६ । भृसञ्कस्यासेश्च घोर्हकारादौ ही परत एत्वं भवति चस्य च खं । दधानि दधाव । दधाम । धेहि । धत्ताद् वा । धत्त । धत्त । दधातु । धत्तात् । वा । धत्ता । दधतु । दधै । दधावहै । दधामहै । धत्स्व । दधाथा । धद्ध्व । धत्ता । दधाता । दधता । इति ह्वादि ।

अद भक्षणे । ओऽकारोऽनिडर्थः । पूर्ववल्लङादिषु कृतेषु मध्ये कर्तरि शप् । तस्य ह्वादेरदुभिरयुप्—

७०७ ॥ चक्षार ।४ । ४ । १५५ । झ्यां चङ् भवति न्नरि परे । इति चर्त्वे । अद्मि । अद्वः । अद्म । अत्सि । अथः । अत्थ । अत्ति । अत्त । अदति । द्योऽत । "घादत्" इति प्रस्तुत्य—

७०८ ॥ देऽनतः । ५ । १ । ५ । दाभियस्यानकारान्ताद्धा.

७१५ ॥ रुद्भ्योऽट् चादोट् । ५ । २ । १०४ ।
रुदादिभ्यो जक्षपर्यंतेभ्यः केवले हलि पिति गे परतः अडागमो भवति ईट् च । अदेः पुनरडेव भवति । इत्यदेरट् । टकारो देश विपर्ययः । लुङ्लङ्लृङ् इत्यट् । अटश्चेत्यैप् । आदं, आद्व । आद्म । आदः । आत्त । आत्त । आदत् । आत्तां । आदन् ॥ व्यत्यादि । व्यत्याद्वहि । व्यत्याद्महि । व्यत्यात्थाः । व्यत्यादाथा । व्यत्याद्ध्व । व्यत्यात्त । व्यत्यादातां । व्यत्यादत । अशयि । अशेवहि । अशेमहि । अशेथाः । अशयाथां । अशेध्व । अशेत । अशयानां । अशेरत ॥ अब्रुव । अब्रूव । अब्रूम । अब्रवीः । अब्रूत । अब्रूत । अब्रवीत् । अब्रूतां । अब्रुवन् ॥ अब्रवि । अब्रूवहि । अब्रूमहि । अब्रूथाः 'अब्रुवाथां ।अब्रूध्वं । अब्रूत । अब्रुवातां अब्रुवत । लिङि—अद्यां । अद्याव । अद्याम । अद्याः । अद्यातं । अद्यात । अद्यात् । अद्यातां । अद्युः । उस्यपद इति पररूपं । व्यत्यदीय । व्यत्यदीवहि । व्यत्यदीमहि । व्यत्यदीथाः । व्यत्यदीयाथां । व्यत्यदीध्वं । व्यत्यदीत । व्यत्यदीयातां । व्यत्यदीरन् । शयीय । शयीवहि शयीमहि । शयीथाः । शयीयाथा । शयीध्वं । शयीत । शयीयातां । शयीरन् । ब्रूयां । ब्रूयाव । ब्रूयाम । ब्रूयाः । ब्रूयातं । ब्रूयात । ब्रूयात् । ब्रूयातां । ब्रूयुः । ब्रुवीय । ब्रुवीवहि । ब्रुवीमहि । ब्रुवीथाः । ब्रुवीयाथां । ब्रुवीध्वं । ब्रुवीत ब्रुवीयातां । ब्रुवीरन् ॥ लोटि—सेर्हिभावे धिभावे च-अदानि । अदाव । अदाम, अद्धि । अत्तात् वा । अत्तं । अत्त । अत्तु । अत्तात् वा । अत्तां अदंतु । व्यत्यदै । व्यत्यदावहै । व्यत्यदामहै । व्यत्यत्स्व । व्यत्यदाथां व्यत्यद्ध्वं । व्यत्यत्तां । व्यत्यदातां । व्यत्यदतां । शयै । शयावहै । शयामहै । शेष्व । शयाथां । शेध्व । शेतां । शयातां । शेरतां । से-

र्हिल्वं क्विलं त्र । ग्रुवाणि । ग्रुवाव । ग्रुवाम । ग्रूहि ब्रूतात् । ग्रूतं ग्रूत । ग्रवांतु । ग्रूतात् वा । ग्रूतां । ग्रुवंतु । ग्रवै । ग्रवावहै । ग्रवामहै । ग्रूयां । ग्रुयां ग्रूयं । ग्रूतां ग्रुवातां । ग्रुवता ॥ इत्यदादिः ॥

दिवु क्रीडाजयेच्छापणिद्युतिगतिषु । उकारो वेदर्थः । पूर्ववदुदादयः । दिवादेः श्यः । इति मध्ये श्यः । शपोऽपवादः । शकारः शित्कार्यार्थः । तेन "स्पुरः" इत्येष न भवति "हल्यनकुर्छुरः" इति दीर्घ । दीव्यामि । दीव्यावः । दीव्यामः इत्यादि । व्यतिदीव्ये । व्यतिदीव्यावहे । व्यतिदीव्यामहे । इत्यादि । ऊपूङ्ो प्राणिप्रसवे । ऊकारौकारङकारा इतः । ष्वादेः ष्णोऽष्ठ्याष्ठिव्ष्वष्कः स्मिनि षकारस्य सकारः । सूये । सूयावहे । सूयामहे । इत्यादि : णहोञ् बधने । औकारञकारावितौ । ष्वादेः ष्ण इत्यादिना णकारम नकारः । नह्यामि । नह्यावः । नह्यामः । इत्यादि । नह्ये । नह्यावहे । नह्यामहे इत्यादि । लङि—प्राग् धोः सम्प्रयोगः । समदीव्यं । समदीव्याव । समदीव्याम । इत्यादि । व्यत्यदीव्ये । व्यत्यदीव्यावहि । व्यत्यदीव्यामहि । इत्यादि । प्रसूयो दीत्वं । प्रासूये । प्रासूयावहि । प्रासूयामहि । इत्यादि । समनह्यं । समनह्याव । समनह्याम । इत्यादि । समनह्ये । समनह्यावहि । समनह्यामहि इत्यादि । लिङि-दीव्येय । दीव्येव । दीव्येम । इत्यादि । व्यतिदीव्येय । व्यतिदीव्येवहि । व्यतिदीव्येमहि । इत्यादि । प्रसूयेय । प्रसूयेवहि । प्रसूयेमहि । इत्यादि । सन्नह्येयं । सन्नह्येव । सन्नह्येम । इत्यादि । सन्नह्येय । सन्नह्येवहि । सन्नह्येमहि । इत्यादि । लोटि-परिपूर्वः । परिदीव्यानि । परिदीव्याव परिदीव्याम । इत्यादि । व्यतिदीव्यै । व्यतिदीव्यावहै । व्यतिदीव्यामहै । इत्यादि । प्रसूयै । प्रसूयावहै । प्रसूयामहै । इत्यादि

७१६ ॥ व्यंवरोऽन्तुरो विहृतः । ५ । ४ । १

दुर्विनिनाद् गेरत शब्दान्च परस्य विकृतेर्नकारस्य णकारो भवति। इति णत्वम्। परिणह्यानि। परिणह्याव। परिणह्याम। इत्यादि। परिणह्य। परिणह्यावहै। परिणह्यामहै। इत्यादि। इति दिवादिः॥

षुञ् अभिषवे। मथन पीडन वाऽभिषवः। ञकार इत्। ष्वादेः ष्ण इत्यादिना सकार। पूर्ववल्लडादयः।

७१७॥ स्वादेः श्नुः। २। १। ८७। स्वादिभ्यो धुभ्यः कर्तरि गे परतः श्नुर्विकरणो मध्ये भवति। शकारः शिकार्यार्थः। तेन-गे पाति उिद्वद्भावादेप् न भवति। उतोऽस्कादिति वर्तमाने-

७१८॥ वा म्वोः खं। ४। ४। १०९। अस्कात्परो य उकारस्तदन्तस्य गोनिमित्तभूतस्य खं वा भवति वकारादौ मकारादौ च परतः। इति पक्षे उतः खं। एवं वहिमहोरपि। सुनोमि। सुन्वः सुनुवः सुन्मः। सुनुमः। सुनोषि। सुनुथः, सुनुथ। सुनोति। सुनुतः सुन्वन्ति। सुन्वे। सुन्वहे। सुनुवहे। सुन्महे। सुनुमहे। सुनुषे। सुन्वाथे। सुनुध्वे। सुनुते। सुन्वाते। सुन्वते। अशूङ् व्याप्तौ। ऊकार-ङकारावितौ। न शादिति नकारस्य णत्वनिषेधः। अश्नुवे। अश्नुवहे। अश्नुमहे। अश्नुषे। अश्नुवाथे। अश्नुध्वे। अश्नुते। अश्नुवाते। अश्नुवते। चिञ् चयने। चिनोमि। चिन्वः। चिनुवः। चिन्मः। चिनुमः। चिनोषि। चिनुथः। चिनुथ। चिनोति। चिनुतः। चिन्वन्ति। चिन्वे। चिन्वहे। चिनुवहे। चिन्महे। चिनुमहे। चिनुषे। चिन्वाथे। चिनुध्वे। चिनुते। चिन्वाते। चिन्वते। लङि असुनवं, असुन्व, असुनुव असुन्म। असुनुम। असुनोः। असुनुतं। असुनुत। असुनोत्। असुनुतां। असुन्वन्। असुन्वि। असुन्वहि। असुनुवहि। असुन्महि। असुनुमहि। असुनुथाः। असुन्वाथां। असुनुध्वं। असुनुत। असुन्वातां। असुन्वत। अश्नु-

व्यश्नवामहे । व्यश्नुष्व । व्यश्नुवाथां । व्यश्नुध्वं । व्यश्नुतां व्यश्नुवातां । व्यश्नुवतां ॥ निश्चिनवानि । निश्चिनवाव । निश्चिनवाम । निश्चिनु । निश्चिनुतात् वा । निश्चिनुतं । निश्चिनुत । निश्चिनोतु । निश्चिनुताद्वा । निश्चिनुतां । निश्चिन्वतु । निश्चिनवै । निश्चिनवावहै । निश्चिनवामहै । निश्चिनुष्व । निश्चिन्वाथां । निश्चिनुध्वं । निश्चिनुतां । निश्चिन्वातां । निश्चिन्वतां । इति स्वादिः ।

तुदोऽ व्यथने-अकारोकारावितौ ।

७२१ ॥ तुद्भ्यः शः २ । १ । ९१ । तुदादिभ्यो धुभ्यः कर्तरि गे शो भवति । शपोऽपवादः । शकारः शित्कार्यार्थः । तेन गेऽपीति ङित्वात् "म्युकः" इत्येप् न भवति । तुदामि । तुदावः तुदामः । इत्यादिः । तुदे । तुदावहे । तुदामहे । इत्यादि । मृ प्राणत्यागे । शदेर्गाद् । इति वर्तमाने—

१२२ ॥ मृर्लुङ्लिङोश्च । १ । २ । ६९ । म्रियतेर्गेपराल्लुङ्लिङोश्च दो भवति । रीङ् ऋतः" इति वर्तमाने—

७२३ ॥ रिङ् यग्लिङ्क्षे । ५ । २ । १९० । गेर ऋकारांतस्य रिङादेशो भवति । यकि यकारादावेगे लिङि शे च परतः । इति रिङादेशः । म्रिये । म्रियावहे । म्रियामहे इत्यादि । मुच्लृञ् मोक्षणे । लृकारञकारावितौ ॥"इदितोर्नुम्" इत्यधिकृत्य-

७२४ ॥ शे मुचां । ५ । १ । ३८ । मुचादीनां शे परतो नुम् भवति । मुंचामि । मुंचावः मुंचामः इत्यादि । मुंचे । मुंचावहे मुंचामहे । इत्यादि । दिङि-अतुदं । अतुदाव । अतुदाम । इत्यादि । अतुदे । अतुदावहि । अतुदामहि । इत्यादि । अम्रिये । अम्रियावहि । अम्रियामहि । इत्यादि । अमुंचं । अमुंचाव । अमुंचाम । इत्यादि । अमुंचे । अमुंचावहि । अमुंचामहि । इत्यादि । लिङि-तुदेयं । तुदेव ।

तुदेम । इत्यादि । तुदेय तुदेवहि । तुदेमहि । इत्यादि । म्रियेयः म्रियेवहि । म्रियेमहि । इत्यादि । मुंचय मुंचेव । मुचेम । मुंचय । मुंचेवहि । मुचेमहि । इत्यादि । लोटि—तुदानि तुदाव तुदाम । इत्यादि । तुदं । तुदावहै । तुदामहै । इत्यादि । म्रियै । म्रियावहै । म्रियामहै । इत्यादि । मुचानि मुचाव । मुंचाम । इत्यादि । मुचै । मुचावहै । मुचामहै । इत्यादि ।

इति तुदादिः ॥

रुधिर् आवरणे । इरादेरितो निवृत्तिः ।

७२५ ॥ रुधां श्नं । २ । १ । ९२ । रुधादीनां कर्तरि गे परतः श्नं भवति । शपोऽपवादः । मकारो देशविपर्ययः । शकारः शित्कार्यार्थः । तेन ङित्वादेरभावः । णत्व । गेऽतः क्ङितीति वर्तमाने—

७२६ ॥ श्नसोः सं । ४ । ४ । १०८ । श्नमो निकरणस्यास्तेश्च गोऽतः सं भवति गे क्ङिति परतः । चर्त्वं ।

७२७ ॥ अधः । ५ । ३ । ७७ । दधातेरन्यस्माद् झषंताद्धः परयोः तथोर्भष् भवति । इति धत्व । झषो जश् झशीति पूर्वस्य दत्वं । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुणत्सि । रुन्द्धः । रुंद्ध । रुणद्धि । रुन्द्धः । रुन्धति । रुन्धे । रुंध्वहे । रुन्ध्महे । रुन्से । रुन्धाथे । रुन्द्ध्वे । रुन्द्धे । रुन्धाते । रुन्धते । भुजो रक्षाशनयोः । ओकार इत् । ईदितो दः” इति वर्तमाने—

७२८ ॥ भुजोऽत्रे । १ । २ । ७५ । न त्रायते न पाऽयतीत्यत्रः । अभिनेतऽन्यातरि वर्तमानात् भुजेर्दो भवति । चोः कुत्वं चर्त्वे । भुञ्जे । भुञ्ज्वहे । भुञ्ज्महे । भुङ्क्षे । भुञ्जाथे । भुङ्ग्ध्वे । भुङ्क्ते । भुञ्जाते । भुञ्जते ॥ युजिर् योगे । इरादेरित् । युनज्मि ।

वहै । युनज्वहै । युंक्ष्व । युंजाथां । युग्ध्वं । युनजानि । युनजाव । युनजाम । युग्धि, युङ्क्तात् वा । युंक्त । युक्त । युनक्तु, युंक्तात् वा । युक्तां । युजंतु । युनजै । युनजावहै । युनजामहै । युंक्ष्व । युजाथां । युग्ध्वं । युंक्तां । युजातां । युजतां । इति रुधादिः ॥

तनुञ् विस्तारे । ञकारोकारावितौ ।

७३१ ॥ कृञ्तनादेरुः । ३ । १ । ९३ । कृञस्तनादिभ्यश्च कर्तरि गे परत उविकरणो भवति । शपोऽपवादः । तस्यापि मेव् नास्त्येव । वकारमकारादौ "वा म्वोः ख" इति उकारस्य ख । तनोमि । तन्वः । तनुवः । तन्मः । तनुमः । तनोषि । तनुथः । तनुथ । तनोति । तनुतः । तन्वंति । तन्वे । तन्वहे । तनुवहे । तन्महे । तनुमहे । तनुषे । तन्वाथे । तनुध्वे । तनुते । तन्वाते । तन्वते । मनुङ् बोधने । ङकारोकारावितौ । मन्वे । मन्वहे । मनुवहे । मन्महे । मनुमहे । इत्यादि ॥ डुकृञ् करणे । डुकारञकारावितौ । आदेश उवे एपि च कृते "कुर्वि च" इति वर्तमाने—

७३२ ॥ गेऽनः कृङित्युत् । ४ । ४ । १०७ । गे ङ्किति परतः करोतेरकारानस्योत उकारादेशो भवति । तकारादुपरेप् न भवति । "वा म्वोः ख" इति वर्तमाने—

७३३ ॥ कुर्वि च । ४ । ४ । १०६ । करोतेः परस्य उनः ख नित्यं भवति यकारादौ म्वोश्च परतः । करोमि । कुर्वः । कुर्मः । करोषि । कुरुथः । कुरुथ । करोति । कुरुतः । कुर्वंति । कुर्वे । कुर्वहे । कुर्महे । कुरुषे । कुर्वाथे । कुरुध्वे । कुरुते । कुर्वाते । कुर्वते । सम्-तन्-मुः । समतनव । समतन्व । समतनुव । समतन्म । समतनुम । समतनोः । समतनुत । समतनुत । समतनोत् । सम-

युन । युञ्ज्म । युनक्षि । युङ्क्थ । युङ्क्थ । युनक्ति । युक्त । युञ्जति ।

७२६ ॥ स्युयुङोऽयज्ञपात्रे । १।२।७३ । णिपूर्वादुत्पूर्वाच्च युनेरयज्ञपात्रे दो भवति । प्रयुङ्क्ते । प्रयुञ्ज्वहे । प्रयुञ्ज्महे । इत्यादि । उद्युङ्क्ते । उद्युञ्ज्वहे । उद्युञ्ज्महे । इत्यादि । नियमार्थमुद्ग्रहण । हल्तेपूद एव नान्यस्माद् ।तनर्नियुनक्ति । इत्यादि । लङि-हल्ङ्याब्भ्य । सुतिस्पर्णजिति सिप खे पूर्वस्य च जश्त्वे सिपि रिवेति वर्तमाने—

७३० ॥ दः । ५ । ३ । ११० । धोर्दकारान्तस्य पदस्य रिर्वा भवति सिपि परत पक्षे द एव । अरुणः । अरुन्ध । अरुन्ध्म । अरुण । अरुणत् वा । अरुन्द्ध । अरुन्द्ध । अरुणत । अरुन्द्धा । अरुधन् । अरुन्धि । अरुन्द्ध्वहि । अरुन्द्ध्महि । अरुन्द्धा । अरुधाथा । अरुध्व । अरुद्ध । अरुधाता । अरुन्ध्मत । अभुजि । अभुञ्ज्वहि । अभुञ्ज्महि । अभुङ्क्था । अभुनाथा । अभुङ्ग्ध्व । अभुङ्क्त । अभुञ्जाता । अभुञ्जत । अयुनक् । अयुञ्ज्व । अयुञ्ज्म । अयुनक् । अयुङ्क्त । अयुङ्क्त । अयुनक् अयुङ्क्ता, अयुञ्जन् । अयुञ्जि । अयुञ्ज्वहि । अयुञ्ज्महि । अयुङ्क्था । अयुनाथा । अयाग्ध्व । अयुङ्क्त । अयुञ्जाता । अयुञ्जत ॥ लिङि—रुध्या । रुध्याम । रुध्याव । इत्यादि । रुधीय । रुधीवहि । रुधीमहि । इत्यादि । भुञ्जीय । भुञ्जीवहि । भुञ्जीमहि । इत्यादि । युञ्ज्या । युञ्ज्याव युञ्ज्याम । युञ्जीय । युञ्जीवहि । युञ्जीमहि । इत्यादि । लोटि । रुणधानि । रुणधाव । रुणधाम । रुन्द्धि । रुद्धात् वा । रुन्द्ध । रुन्द्ध । रुणद्धु । रुद्धात् वा । रुन्द्धा । रुन्धतु । रुणधै । रुणधावहै । रुणधामहै । रुन्त्स्व । रुधाथा । रुन्द्ध्व । रुन्द्धा । रुधाता । रुन्धता । भुनजै । भुनजा-

वहे । भुनजावहे । भुंज्म । भुंजामः । भुग्ध्व । भुंक्त । भु-
जाता । भुजत । भुनजानि । भुनजाव । भुनजाम । भुग्धि,
भुक्तात् वा । भुंक्त । भुक्त । भुनक्तु, भुंक्तात् वा । भुक्ता ।
भुजंतु । भुनजै । भुनजावहै । भुनजामहै । भुक्ष्व । भुजाथा । भुग्ध्वं ।
भुक्तां । भुजातां । भुजता । इति रुधादिः ॥

तनुञ् विस्तारे । ञकारोकाराविती ।

७३१ ॥ कृञ्तनादिभ्यः । २ । १ । ९२ । कृञस्तनादि-
भ्यश्च कर्तरि गे परत उविकरणो भवति । शपोऽपवादः । तस्य
पित्त्वप् नामित्वात् यकारमकारादौ "वा म्वोः ख" इति उकारस्य ख ।
तनोमि । तन्वः । तनुवः । तन्मः । तनुमः । तनोषि । तनुथः ।
तनुथ । तनोति । तनुतः । तन्वंति । तन्वे । तन्वह । तनुवहे ।
तन्महे । तनुमहे । तनुषे । तन्वाथे । तनुध्वे । तनुते । तन्वाते ।
तन्वते । मनुङ् बोधने । ङकारोकाराविती । मन्वे । मन्वहे ।
मनुवहे । मन्महे । मनुमहे । इत्यादि ॥ डुकृञ् करणे डकारञकार-
म्वाविती । आदेश उत्व एपि च कृते "कुर्यि च" इति वर्तमाने—

७३२ ॥ गेऽतः करोतेरुत् । ४ । ४ । १०७ । गे क्ङिति
परतः करोतेरकारातस्यात उकारादेशो भवति । तकारात्पुनरप् न
भवति । "वा म्वोः ख" इति वर्तमाने—

७३३ ॥ कुर्यि च । ४ । ४ । १०९ । करोतेः परस्य उतः
ख नित्यं भवति यकारादौ म्वोश्च परतः । करोमि । कुर्वः । कुर्मः ।
करोषि । कुरुथः । कुरुथ । करोति । कुरुतः । कुर्वंति । कुर्वे ।
कुर्वहे । कुर्महे । कुरुषे । कुर्वाथे । कुरुध्वे । कुरुते । कुर्वाते । कुर्वते ।
लङि—सम्—पूर्व. । समतनव । समतन्व । समतनुव । समतन्म ।
समतनुम । समतनोः । समतनुत । समतनुत । समतनोत् । सम-

तनुता । समतन्वन् । समतन्वि । समतन्वहि । समतनुवहि । समतन्महि । समतनुमहि । समतनुथाः । समतन्वाथा । समतनुध्वं । समतनुत । समतन्वाता । समतन्वत ॥ अमन्वि । अमन्वहि । अमनुवहि । इत्यादि । समपूर्वः ।

७३४ । संपर्युपात् कुः सुट् भूषे । ४ । ३ । १२९ । सम् परि उप् इत्येतेभ्यः परस्य कृञः सुडागमो भवति भूषे भूषणार्थे । गेर्धो कार्यस्यातरंगत्वात् सुटि कृते पश्चादडागमः । समस्कुरुत । समस्कुर्वे । समस्कुम । समस्कुरो समस्कुरुत । समस्कुरुत । समस्करोत् । समस्कुरुता । समस्कुर्वन् । समस्कुर्वि । समस्कुर्वहि । समस्कुर्महि । समस्कुरुथाः । समस्कुर्वाथा । समस्कुरुध्व । समस्कुरुत । समस्कुर्वाता । समस्कुर्वत । लिङि तनुयात् । तनुयाव । तनुयाम । इत्यादि । तन्वीय । तन्वीवहि । तन्वीमहि । इत्यादि । मन्वीय । मन्वीवहि । मन्वीमहि । इत्यादि । कुर्यात् । कुर्याव । कुर्याम । इत्यादि । कुर्वीय । कुर्वीवहि । कुर्वीमहि । इत्यादि ॥ लोटि-वितनवानि । वितनवाव । वितनवाम । वितनु, वितनुतात् वा । वितनुत । वितनुत । वितनोतु, वितनुतात् वा । वितनुता । वितन्वन्तु । वितनवै । वितनवावहै । वितनवामहै । इत्यादि । मनवै । मनवावहै । मनवामहै । इत्यादि । करवाणि । करवाव । करवाम । कुरु, कुरुतात् वा । कुरुत । कुरुत । करोतु, कुरुतात् वा । कुरुता । कुर्वन्तु । करवै । करवावहै । करवामहै । कुरुष्व । कुर्वाथा । कुरुध्व । कुरुता । कुर्वाता । कुर्वता । इति तनादिः ।

डुक्रीञ् द्रव्यविनिमये । डुञावितौ । क्र्यादयः ।

७३५ ॥ क्र्यादेः श्ना । २ । १ । ९५ । डुक्रीञ् इत्येवमादिभ्यः कर्तरि गे श्नाप्रत्ययो विकरणो भवति । शकारः शित्कार्यार्थः ।

सेन क्ङित्वादेप् न भवति । "हल्यघोरी." इति ईकारः । ऋरतादेशः । "श्नाभ्यस्तयोरातः." इत्यात्व । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणाति । क्रीणीतः । क्रीणन्ति । क्रीणे । क्रीणीवहे । क्रीणीमहे । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणीते । क्रीणाते । क्रीणते ॥ वृञ् वरणे । वृणे । वृणीवहे । वृणीमहे । वृणीषे । वृणाथे । वृणीध्वे । वृणीते । वृणाते । वृणते । ग्रहञ् उपादाने । "ल्लिट्यभ्यासस्योभयेषाम्" इति वर्तमाने--

७३६॥वहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति ।४।१।१६। वस्यादीनां किति ङिति च सम्प्रसारणं भवति । इति ग्रहेः ऋकारः । गृह्णामि । गृह्णीवः । गृह्णीमः । गृह्णासि । गृह्णीथः । गृह्णीथ । गृह्णाति । गृह्णीतः । गृह्णन्ति । गृह्णे । गृह्णीवहे । गृह्णीमहे । गृह्णीषे । गृह्णाथे । गृह्णीध्वे । गृह्णीते । गृह्णाते । गृह्णते ॥ लङि अक्रीणाम् । अक्रीणीव । अक्रीणीम । अक्रीणाः । अक्रीणीतम् । अक्रीणीत । अक्रीणात् । अक्रीणीताम् । अक्रीणन् । अक्रीणि । अक्रीणीवहि । अक्रीणीमहि । अक्रीणीथाः । अक्रीणाथाम् । अक्रीणीध्वम् । अक्रीणीत । अक्रीणाताम् । अक्रीणत । अवृणि । अवृणीवहि । अवृणीमहि । अवृणीथाः । अवृणाथाम् । अवृणीध्वम् । अवृणीत । अवृणाताम् । अवृणत । अगृह्णाम् । अगृह्णीव । अगृह्णीम । अगृह्णाः । अगृह्णीतम् । अगृह्णीत । अगृह्णात् । अगृह्णीताम् । अगृह्णन् । अगृह्णि । अगृह्णीवहि । अगृह्णीमहि । अगृह्णीथाः । अगृह्णाथाम् । अगृह्णीध्वम् । अगृह्णीत । अगृह्णाताम् । अगृह्णत ॥ लिङि--क्रीणीयाम् । क्रीणीयाव । क्रीणीयाम । क्रीणीयाः । क्रीणीयातम् । क्रीणीयात । क्रीणीयात् । क्रीणीयाताम् । क्रीणीयुः । क्रीणीय । क्रीणीवहि । क्रीणीमहि । क्रीणीथाः । क्रीणीयाथाम् । क्रीणीध्वम् । क्रीणीत । क्रीणीयाताम् । क्रीणीरन् । वृणीय । वृणीवहि ।

वृणीमहि । इत्यादि । गृह्णीया । गृह्णीयाव । गृह्णीयाम । इत्यादि । गृह्णीय । गृह्णीवहि । गृह्णीमहि । इत्यादि ॥ लोटि–क्रीणानि । क्रीणाव । क्रीणाम । क्रीणीहि, क्रीणीतात् वा । क्रीणीत । क्रीणीत । क्रीणातु, क्रीणीतात् वा । क्रीणीतां । क्रीणन्तु । क्रीणै । क्रीणावहै । क्रीणामहै । क्रीणीष्व । क्रीणाथां । क्रीणीध्वं । क्रीणीतां । क्रीणातां । क्रीणतां । वृणै । वृणावहै । वृणामहै । वृणीष्व । वृणाथां । वृणीध्वं । वृणीतां । वृणातां । वृणतां ॥

७३७ ॥ हौ हलः श्नः शानः । २ । १ । ९७ । हलंताद्धोः परस्य श्नाप्रत्ययस्य हौ परे शानादेशो भवति । अतो हेरुप् । गृह्णानि । गृह्णाव । गृह्णाम । गृहाण, गृह्णीतात् वा । गृह्णीतं । गृह्णीत । गृह्णातु, गृह्णीतात् वा । गृह्णीतां । गृह्णन्तु । गृह्णै । गृह्णावहै । गृह्णामहै । गृह्णीष्व । गृह्णाथां । गृह्णीध्वं । गृह्णीतां । गृह्णातां । गृह्णतां ॥ इति क्र्यादिः ।

चुर स्तेये । अकार उच्चारणार्थः ।

७३८ ॥ चुरादिभ्यो णिच् । २ । १ । ३६ । चुरादिभ्यो धुभ्यः स्वार्थे णिच् त्यो भवति । चकारो णिङ्णिचोः सामान्यग्रहणविघातार्थः । णकारो णीति सामान्यग्रहणार्थः ।

७३९ ॥ घ्युङः । ५ । २ । ९३ । घेरुङः एप् भवति गे प्रत्यये च परतः ।

७४० ॥ तदंता धवः । २ । १ । ४४ । सन्नायताः शब्दा धुसंज्ञा भवंति । इति धुसंज्ञायां ततो लडादयः । सर्वविधयादेशाः । चोरयामि । चोरयावः । चोरयामः । इत्यादि । छदं संवरणे । ऐकार

१ । १ पुग्वे० । २ । ३ । ८६ । इत्यादि सूत्रेऽपीति भावः ।

इत्। तेन—एकदेशकृतं लिंगं समुदायस्य विशेषणमिति णिजंतादो भवति। ऐविति ञ्णीति च वर्तमाने—

७४१ ॥ उडोऽतः। ५। २। ४। गौरुडोऽकारस्य ञ्णिति परतः ऐप् भवति। इत्याकारः। छादये। छादयावहे। छादयामहे। इत्यादि। लक्षञ् दर्शनांकयोः। पूर्ववदन्यत्। लक्षयामि। लक्षयावः। लक्षयामः। इत्यादि। लक्षये। इत्यादि। लङि-अचोरयमित्यादि। अच्छादये। अच्छादयावहि। इत्यादि। अलक्षयमित्यादि। अलक्षये। अलक्षयावहि। अलक्षयामहि। इत्यादि। लिङि-चोरयेयं। चोरयेव। चोरयेम। इत्यादि। छादयेय। छादयेवहि। छादयेमहि। इत्यादि। लक्षयेय। लक्षयेव। इत्यादि॥ लक्षयेय। लक्षयेवहि। लक्षयेमहि। इत्यादि। लोटि-चोरयाणि। चोरयाव। चोरयाम। इत्यादि। छादयै। छादयावहै। छादयामहै। इत्यादि। लक्षयाणि। लक्षयाव। लक्षयाम। इत्यादि। लक्षयै। लक्षयावहै। इत्यादि। युज पृच संयमे। "चुरादिभ्यो णिच्", इति वर्तमाने—

७४२ ॥ युजादेर्वा। २। १। ३७। युजादिभ्यो धुम्यः स्वार्थे णिच् स्यो वा भवति। पक्षे-न्याय्यविकरणः शप्। पूर्ववच्छेष। योजयामि। योजयावः। योजयामः। योजामि। योजावः। योजामः। इत्यादि॥ अर्चै पूजायां। ऐकार इत्। णिजभावपक्षे ऐदित्त्वावकाश इति णिचि दो न भवति। अर्चयामि। अर्चे। इत्यादि। वृञ् आवरणे। ञकार इच्चरितार्थोऽणिचपक्षे इति णिजतादो न भवति। वारयामि। वरामि। वरे इत्यादि। लङि-अयोजयं। अयोजमिति। आर्चयं, आर्चे इत्यादि। अवारय। अवर। अवरे। इत्यादि। लिङि-योजयेयं। योजेयम्। इत्यादि। अर्चयेय। अर्चेय। इत्यादि। वारयेय। वरेय। इत्यादि। लोटि-योजयानि। इत्यादि। अर्चयानि।

अर्चें । वारयाणि । नराणि । वैरे । इत्यादि समुच्चेयं ।

इति कर्तृगलकारपरिच्छेदः ।

यदा तु—

७४३ ॥ लः कर्मणि च भावे च घेः । २ । ४ । ५७ ।
नव लकारास्त्यक्तविशेषणाः सकर्मकेभ्यो धुभ्यः कर्मणि चकारात्कर्तरि भवति । धिसञ्ज्ञेभ्यो भावे कर्तरि च भवति । इति कर्मभावयोर्ला भवति । तदा—

७४४ ॥ दौ । १ । २ । ७ । भावे कर्मणि च यो लकारस्तस्य दो भवति । तत्र—

७४५ ॥ गे यक् । २ । १ । ८१ । क्रियाचिनि गे परतो धोयक् त्या भवति, न शबादयः । ककार कित्कार्यार्थः । पूर्ववदेत्त्वादि । भावकर्मणोस्तुल्य रूप । पर भावे त एव भवति । लकाराभिधेयभावस्यैकत्वादयुस्मदस्मद्विषयत्वाच्च लकारेण नाभिहित कर्तरि कर्तृवाचिनो मृदोभा ॥ भू सत्तायां क्रियायाः अकर्मकत्वाच्च भू इत्यं तस्मात् भावे लकारा भवति । भूयते देवदत्तेन विदुषा । भूयते देवदत्ताभ्यां विद्वद्भ्यां । भूयते देवदत्तजिनदत्तगुरुदत्तैर्विद्वद्भिः । त्वया भूयते । मया भूयते । यद्यपि साधनभेदे वास्तवः क्रियाभेदः । तथापि स शब्देन नोपादीयते । इत्येकवचनमत्र भवति । "अकर्मका अपि धवः सगयः सकर्मका भवति" इति वचनादयं भिपूर्वः सकर्मको भवति । इति अनुपूर्वं । अनुभूय । अनुभूयावहे । अनुभूयामहे । अनुभूयसे । अनुभूयाथे । अनुभूयध्वे । अनुभूयते । अनुभूयेते । अनुभूयते । एवमभिपूर्वं । अभिभूये । आभिभूयावहे । अभिभूयामहे । इत्यादि । तथा—लङादिषु—अभूयत । अन्वभूय । इत्यादि । भूयेत । अनुभूयेय । इत्यादि । भूयता । अनुभूयै । इत्यादि । एव—एध्यते । ऐध्यत ।

एध्येत । एध्यता । पच्यते । अपच्यत । पच्येत । पच्यतां । नयते । अनयत । नयेत । नयता । "हलुङ् कृञियनादितः, इति नख । प्रध्वस्यते । प्राध्वस्यत । प्रध्वस्येत । प्रध्वस्यता । एचोऽप्या इत्यधिकृत्य–

७४६ ॥ व्योऽलिटि । ४ । ३ । ४५ । व्येञो घोरलिटि अविद्विषये आत्व भवति । सम्प्रसार्याणदेरिति साचो यण इक् । हलो यणिङ इति दीः । वीयते । अवीयत । वीयेत । वीयता । "यि कृञ्यपद्" इति वर्तमाने—

७४७ ॥ दीवच्च्यकृद्दे । ५ । २ । १४८ । व्यानकद् यकारे अगयकारे च गादीर्भवति । हूयते । अहूयत । हूयेत । हूयता हायते । अहायत । हायेत । हायता । "ईय" इति वर्तमाने—

७४८ ॥ भूमास्थागापाहास्तां हलि । ४ । ४ । ६९ । भूलक्ष्काना मा स्था गा पा हाङ् मा इत्येतेषां च धूना हलादौ कृञिसंगे परतः ईत्व भवति । निधीयते । न्यधीयत । निधीयेत । निधीयतां । अयते । आयत । अयेत । अयतां ।

७४९ ॥ यि क्ङिदित्यवद् । ५ । २ । १४५ । शीङो यकारादौ कृञिते परतः अयकारो भवति । अधिशय्यते । अध्यशय्यत । अधिशय्येत । अधिशय्यता । क्तिस्येऽव्याज़ जाग्रिरिति वर्तमाने-

७५० ॥ व्यस्वेन्वभूः । ? । ४ । ११९ । व्रतोऽस्य यथासङ्ख्य यत् भू इत्येतावाद्यो भवतोऽसे परतः । सम्प्रसार्या-देरिति साचो यण इक् । उप्यते । औप्यत । उप्येत । उप्यतां । दीव्यते । अदीव्यत । दीव्येत । दीव्यतां । प्रसूयते । प्रासूयत । प्रसूयेत । प्रसूयता । सनद्यते । समनह्यत । सनद्येत । सनद्यतां । अभिभूयते । अभ्यभूयत । अभिभूयेत । अभिभूयतां । अस्यते ।

आद्यत । अद्येत । अद्यतां । निश्चीयते । निरचीयत । निश्चीयेत । निश्चीयतां । तुद्यते । अतुद्यत । तुद्येत । तुद्यतां । म्रियते । अम्रियत । म्रियेत । म्रियतां । मुच्यते । अमुच्यत । मुच्येत । मुच्यतां । रुध्यते । अरुध्यत । रुध्येत । रुध्यतां । भुज्यते । अभुज्यत । भुज्येत । भुज्यतां । युज्यते । अयुज्यत । युज्येत । युज्यतां ।

७५१ ॥ तनेर्यकि । ४ । ३ । ४८ । तनोतेराकारो यकि परतो वा भवति । तायते । तन्यते । अतायत । अतन्यत । तायेत । तन्येत । तायतां । तन्यतां । मन्यते । अमन्यत । मन्येत । मन्यतां । क्रियते । अक्रियत । क्रियेत । क्रियतां । विक्रीयते । व्यक्रीयत । विक्रीयेत । विक्रीयतां । संक्रियते । समक्रियत । संक्रियेत । संक्रियतां । गृह्यते । अगृह्यत । गृह्येत । गृह्यतां । "अगे" खमिति चानुवर्तमाने ।

७५२ ॥ णेः । ४ । ४ । ५६ । णेः खं भवत्यगे परतः । चोर्यते । अचोर्यत । चोर्येत । चोर्यतां । छाद्यते । अच्छाद्यत । छाद्येत । छाद्यतां । लक्ष्यते । अलक्ष्यत । लक्ष्येत । लक्ष्यतां । योज्यते । अयोज्यत । योज्येत । योज्यतां । युज्यते । अयुज्यत । युज्येत । युज्यतां । अर्च्यते । आर्च्यत । अर्च्येत । अर्च्यतां । णिजभावेऽप्यविशेषः । वार्यते । अवार्यत । वार्येत । वार्यतां । व्रियते । अव्रियत । व्रियेत । व्रियतां । इत्यादि सप्रपंचमवगम्यतां ॥ अपि च कस्यचित् धोः कश्चिदर्थभागः कर्मस्थप्रधानः फलरूपी छिदादिः । कश्चिद् कर्तृस्थप्रधानः भावनाक्रियाभिश्रयणादिः । तत्र यदा कर्मस्थं स्वस्वार्थभागं सुकरत्वेन ■ कर्मण्यप्यारोपितायां भावनायां धुर्वर्तते, तदा तत्कर्मकर्ता भवति । तत्र उकारे---

७५३ । कर्मवल्लेऽखादीनां।२।१।७६। कर्मकर्तरि उकारो

सति तदन्तस्य धोः स्यवत्यादिर्यन्तितस्य कर्मणीव कार्यं भवति । यथा कर्मणि दयक्चिटो भवति । तथा तत्रापत्यर्थ. । कर्मकर्तर्यपि तान्येवोदाहरणानि भवन्ति । कर्मकर्तृभावाभिव्यक्त्यर्थं स्वयमेवेत्यनुप्रयुज्यते । अनुभूयेऽहं स्वयमेव । अनुभूयावहे । अनुभूयामहे स्वयमेव । इत्यादि । एव पच्यते ओदनः स्वयमेव । भिक्षिर्वात्यर्थः । इत्यादि नेय ।

इति यक्परिच्छेदो द्वितीय. ।

कर्तरि लेपदकारा नोच्यन्त । भू इति स्थिते "लोट् चाशिषि" इति पक्षे लिङ् । ङकारेकारौ पूर्ववदितौ । मिवादयश्च । "लिङः सीयुट्" "यासुण्मे" इति वर्तमाने—

७५४ ॥ किदाशिषि । २ । ४ । ८६ । आशिष्यर्थे लिङो यासुट् किद् भवति । तस्योऽग एव इत्यभिसंबन्धे लिङाशिषीत्यगसङ्कल्पात्स्वनःप्रसक्तं न भवत. । स्कोः स्कोऽन्ते चेति सलोपः । भूयासं । भूयास्व । भूयास्म । भूयाः । भूयास्तं । भूयास्त । भूयात् । भूयास्तां । भूयासुः । इतरेषु सीयुट् । सुटो स्थवौ ।

७५५ ॥ तथोः सुट् । २ । ४ । ८८ । लिङवयवयोस्तकारथकारयोः सुडागमो भवति । स्कोः स्व वन्तादिति सलोपः । वलादिरिटीति इट् । न्यादेशयोरिति षत्वं ।

७५६ ॥ येण्ट्रेः । ४ । ५ । ५१ । कृत. परस्मात् इटो

च्याक्ष्म । पच्यास्म । पच्याः । पच्यास्त । पच्यास्त । पच्यात् । पच्यास्ता । पच्यासु. । एकाच् धस इति "न वृद्भ्य." इति च वर्तमाने-

७५७ ॥ लौदिद्वोऽपच्छिश्रिशीडीरुपदकोदृदूदतः । ५ । १ । १२३ । लकारेत ओकारेतोऽजताच्च गेरेकाच. परस्य वलाद्यगस्येद् न भवति पच् श्वि श्रि शी डी रुपदर्क ऊदत वृ ऋदंत अदंत इत्येतान् वर्जयित्वा । औकारेत्त्वात् पचेः सीयुट इद् न भवति। पक्षीय । पक्षीवहि । पक्षीमहि । पक्षीष्ठाः । पक्षीयास्थां । पक्षीध्वं । पक्षीष्ट । पक्षीयास्तां । पक्षीरन् ॥ नंयास । नयास्व । नंयास्म । इत्यादि । श्वसिषीय । श्वसिषीवहि । श्वसिषीमहि । इत्यादि । नियासं । वियास्व । वियास्म । इत्यादि । लौदिदच इत्यजतत्वात् व्येञ इद् न भवति । व्यासीय । व्यासीवहि । व्यासीमहि । इत्यादि । हूयास । हूयास्व । हूयास्म । इत्यादि ।

७५८ ॥ इणः षीध्वंलुङ्लिटां धो ढः । ५ । ४ । ६३ । इणः परेषां षीध्वं लुङ् लिटां धकारस्य ढकारो भवति । इति ढत्व । व्यतिहोषीय । व्यतिहोषीवहि । व्यतिहोषीमहि । व्यतिहोषीष्ठाः । व्यतिहोषीयास्थां । व्यतिहोषीढ्वं । व्यतिहोषीष्ट । व्यतिहोषीयास्तां । व्यतिहोषीरन् । हासीय । हासीवहि । हासीमहि । इत्यादि ।

७५९ ॥ लिङ्येत् । ४ । ४ । ७० । भूमादीनां क्ङिति लिङि परतः एकारो भवति । धियेयास । धियेयास्व । धियेयास्म । इत्यादि । श्रिपूर्वः । श्रद्धासीय । श्रद्धासीवहि । श्रद्धासीमहि । इत्यादि । अयास । अयास्व । अयास्म । इत्यादि । औकारेदित्वादनिद् । व्यत्यसीय । व्यत्यसीवहि । व्यत्यसीमहि । इत्यादि । "वेणुत्रः" इति पक्षे ढत्व । शयिषीय । शयिषीवहि । शयिषीमहि । शयिषीष्ठाः । शयिषीयास्थां । शयिषीढ्वं, शयिषीध्वं । शयिषीष्ट ।

शायिषीयास्ताम्। शायिषीरन्॥ उच्यास। उच्यास्व। उच्यास्म। इत्यादि। मूजः स्थानिवद्भावेन वचेरनिडर्थ. औकार इत्यनिट्। वक्षीय। वक्षीवहि। वक्षीमहि। इत्यादि। दीव्यास। दीव्यास्व। दीव्यास्म। इत्यादि। व्यतिदीविषीय। व्यतिदीविषीवहि। व्यतिदीविषीमहि। इत्यादि। वा लिमसाविति वर्तमाने—

७६० ॥ ऊदिद्वा। ५। १। १०० । ऊदितो धोर्धूमस्य परस्य वलादेरिड् वा भवति। पक्षे इट्। इट्पक्षे वेणुत्तरिति वा दत्व। प्रसविषीय। प्रसविषीवहि। प्रसविषीमहि। प्रसविषीष्टाः। प्रसविषीयास्थाम्। प्रसविषीध्व, प्रसविषीढ्व। प्रसविषीष्ट। प्रसविषीयास्ताम्। प्रसविषीरन्। अनिट्पक्षे—इणः षीध्वमिति नित्य ढत्व। प्रसोषीय। प्रसोषीवहि। प्रसोषीमहि। प्रसोषीष्ठाः। प्रसोषीयास्थाम्। प्रसोषीढ्वं। प्रसोषीष्ट। प्रसोषीयास्ताम्। प्रसोषीरन्॥ सनह्यास। सनह्यास्व। सनह्यास्म। इत्यादि। औकारत्वादनिट्।

७६१ ॥ नहो धः। ५। ३। ६९। नहेर्धौझलि च पदान्ते च धकारो भवति। इति धत्व। नत्सीय। नत्सीवहि। नत्सीमहि। इत्यादि। अभिपूयास। अभिपूयास्व। अभिपूयास्म। इत्यादि। सोषीय। सोषीवहि। सोषीमहि। इत्यादि। "ऊदिद्वा." इति ऊदित्वात्पक्षे इट्। अविषीय। अविषीवहि। अविषीमहि। इत्यादि। अनिट्पक्ष—अथसादिना षत्व।

७६२ ॥ षढोः कस्सि। ५। ३। ७९। षकारढकारयो ककारादेशो भवति सकारादौ परत। इति ककारः। अक्षीय। अक्षीवहि। अक्षीमहि। इत्यादि॥ निधियास। निधियास्व। निधियास्म। निधिषीय। तुयास॥ संकिः, हलीति च वर्तमाने—

७६३ ॥ सिचो दे। १। १। १०० । दपरे सिच्ये टौ

लिङि च सकारादौ परे यो हल् तस्मिन् परे य इक् तस्य किद्वद् कार्यं भवति। इति कित्त्वात् "ध्युङः" इत्येत् न भवति। तुत्सीय।

७६४ ॥ उः। १। १। १०१। ऋवर्णांतस्य धोः सकारादौ सिलौ दे परे किद्वद् कार्यं भवति। कित्त्वात् गागयोरित्यप् न भवति। मृषीय। मुच्यास। मुक्षीय। रुध्यास। रुत्सीय। भुक्षीय। भुज्यास। युक्षीय। तन्यास। तानिषीय्। मनिषीय। क्रियास। कृषाय। क्रियास। क्रिषीय। वृतो वेति वर्तमाने—

७६५ ॥ लिङ्स्योर्दे। ५। १। ९८। वृञः परयोः लिङ् सि इत्येतयोःदविषययोरिड्वा भवति। वरिषीष्ट, वृषीष्ट वा। गृह्यात्।

७६६ ॥ गृहोऽलिट्येकाचो दीः। ५। १। ९५। गृहेरेकाचः परस्य इटो दीर्घो भवति न चेत् स इट् लिटि विहितः। बलादेरिटो दीः। गृहिषीष्ट। गृहीषीष्ट। जीरिति णिख। चार्यास। छादयिषीष्ट। लक्ष्यास। लक्षयिषीष्ट। योज्यास। युज्यास। अर्च्यास। अर्चिषीष्ट। वार्यास। व्रियास। वरिषीष्ट। वृषीष्ट। इत्यादि सविस्तरमधिगंतव्य॥ लिङुदाहियते। भू इति स्थिते-"भूते" अनद्यतने,, इति चानुवर्तमाने—

७६७ ॥ परोक्षे लिट्। २। २। १०८। अक्षेभ्यःपरावृत्त परोक्ष स्वयं साक्षादनधिगतं तत्र परोक्षे भूतेऽनद्यतनेऽर्थे वर्तमानाद्धोः लिडित्ययं त्यो भवति। टकारो टिद्देरेरिति विशेषणार्थः। इकारो लिटः कसुकानाविति विशेषणार्थः। पूर्ववन्मिबादयः। तेषा—

७६८ ॥ मानां णल्वमथाथुसअणल्वतुसुसः। २। ४। ६२। टितो लेरादेशानां मानां नवानां यथासंख्यं णल् व म थ अथुस अत्

णश् अतुस् उस् इत्येते नवादेशाः भवति। इति णशादयः। णशावितौ। शित् सर्वादेशार्थः। परत्वादेपि प्राप्ते–नित्यत्वाद्-"अचि" श्नु-" इति चानुवर्तमाने—

७६९ ॥ लुङ्लिटोर्वुक् । ४ । ४ । ८७ । लुङ्लिटोरचि परतो भवतेर्वुगागमो भवति। ककारोकारावितौ। शेषोऽग एव, इति वर्तमाने—

७७० ॥ लिट् । २ । ४ । ९६ । लिट् चागसंज्ञो भवति। इयगस्य वलादेरिट् प्राप्तः।

७७१ ॥ लिटींध्यस्फाद् किद्वत् । १ । ३ । ९२ । इधेरेयस्माद् धोरस्फादपिति लिटि परतः कितीव कार्यं भवति। इति किस्वात्—"एकाचः" न वृद्रुपः" इत्यधिकृत्य—

७७२ ॥ कित्पूर्णुश्वश्रुयुकः । ६ । १ । १२६ । ऊर्णुञः श्रयतेरुगंताचैकाचो विहिते किति नेट् भवति। इति निषिद्धः।

७७३ ॥ भृसृवृस्तुद्रुस्रुश्रोर्लिटि । ५ । १ । १२७ । भृ सृ वृ स्तु द्रु स्रु श्रु इत्येतेभ्य एव लिटि नेट् भवति नान्येभ्यः। इति नियमान्निषिद्धो निवर्तते। पुनर्भवस्येवेट्। आदेरकाचो द्वे, इत्यधिकृत्य-लिडुचुकचि धोः, इति द्वित्व।

७७४ ॥ पूर्वं पः । ४ । ३ । ९१ । द्विरुक्तयोः पूर्वोऽवयवः चसज्ञो भवति। इति चसज्ञायां। चस्योविति वर्तमाने–

७७५ ॥ हलोऽनादेः । ५ । २ । १८० । चस्य संबंधिनो हलोऽनादेरुप् भवति। इति वकारस्योप्।

७७६ ॥ मः । ६ । २ । १८२ । चस्य संबंधिनोऽचः प्रादेशो भवति। इत्यूकारस्य उकारः।

७७७ ॥ **भुवोऽव्** । ५ । २ । १९६ । भवतेश्चस्य लिट्य-कारादेशो भवति । इत्युकारस्याव् । झलो जशीति भकारस्य वकार । बभूव । बभूविव । बभूविम । बभूविथ । बभूवथु । बभूव । बभूव । बभूवतु. । बभूवु । दस्य–टिद्टेटरारिरेयरव । थासः सेभाव. । षणूनं-रिति ध्वमो वा ढत्व ।

७७८ ॥ **लस्तझस्येशिरे** । २ । ४ । ६९ । लेर्लिटस्त-झयोर्यथासख्य एश् इरे इत्यनावादेशौ भवतः । पूर्ववल्लिट् वुक् च कार्यं । व्यतिबभूवे । व्यतिबभूविवहे । व्यतिबभूविमहे । व्यतिबभू-विषे । व्यतिबभूवाथे । व्यतिबभूविढ्वे । व्यतिबभूविध्वे । व्यतिब-भूवे । व्यतिबभूवाते । व्यतिबभूविरे । लिड्वत्कृञोऽस्मीति वर्तमाने–

७७९ ॥ **सनिजादिदयायासोऽनृच्छूर्णो:** । २ । १ । ४८ । सह कृञा वर्तमानात् इजादेर्धोर्दय् अय् आस् इत्येतेभ्यश्चाम् भवति लिड्वत् कृञि परत: ऋच्छत्यूर्णोति वर्जयित्वा । कृञाऽस्मीति प्रत्या-हारेण कृभ्वस्तीनां त्रयाणां ग्रहणं । तस्मिन्नामंत पदमिदमनंतरं प्रयुज्यते ।

७८० ॥ **आम्वत्तत्कृ:** । १ । २ । ७१ । आमंतस्यैव तत्कृञो दो भवति । इति लिटो द: । तस्य पूर्ववदेत्वादि । किश्वा लिट्येप् न भवति । यणादेशस्यानिवद्भावान्न द्वित्व ।

७८१ ॥ **उर:** । ५ । २ । १८३ । चस्य ऋकारस्य अ-कारादेशो भवति । लिटचादामंतस्य सुप उप् । तयोः स्याश्रयमिति पदत्व । नुग्मोऽमिस्यनुस्वार: । वा नुक् पदांतस्येति विकल्पेन परसवर्णत्व । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाञ्चकृषे । एधाञ्चक्राथे । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाम्बभूव । एधाम्बभूविथ । एधाम्बभूविम । एधाम्बभूविथ । एधाम्बभूवथु. । एधाम्बभूव ।

एधाञ्चकार । एधाञ्चक्रतुः । एधाञ्चक्रुः । अस् भुवीति द्वित्वं । इटो-ऽस्वादेरिति स इट् । चस्थेति दोरिति च वर्तमाने—

७८० ॥ आगतः । ५ । ३ । १९३ । लिटि परतः आ-देरतश्चस्य दीर्घो भवति । इति दीर्घ । पुनः स्रवो दीः । एधामास । एधामासिथ । एधामासिम । एधामासिथ । एधामासथुः । एधामास । एधामास । एधामासतुः । एधामासुः । "इञोऽतः" इत्येप् । "प्यसो संयते" इति वर्तमाने—

७८३ ॥ हलमध्ये लिट्यतः । ४ । ४ । ११७ । हलोर्मध्ये वर्तमानस्यातस्य भवति चस्य च लुलिटि परतः । इत्येचस्य । थे भ्रादिनियमात् नित्यमिटि प्राप्ते —

७८४ ॥ वाऽस्त्वद्यसृजहशो नित्यानिटस्तासस्थेऽकृ-दृच्यार्थः । ५ । १ । ११७ । नित्यानिट् तास् येषां तेभ्योऽकार-वद्भ्योऽजन्तेभ्यः सृजदृश् इत्येताभ्यां च विहिते थे वा इट् भवति कृ अद् व्या अर्थि इत्येतान् वर्जयित्वा । इति यदा इट् तदा सर्वा-न्तस्वरेण भवतः । अन्यत्र चो: कुत्वं । पूर्ववदन्यत् । पपच । पपाच । पेचिव । पेचिम । पपक्थ । पेचिथ । पेचथुः । पेच । पपाच । पेचतुः । पेचुः । पेचे । पेचिवहे । पेचिमहे । इत्यादि । पेचिषे । पेचाथे । पेचिध्वे । पेचे । पेचाते । पेचिरे ॥ ननंद । ननंदिव । ननंदिम । इत्यादि । दध्वंसे । दध्वंसिवहे । दध्वंसिमहे । इत्यादि । "ह्रै" चस्येति च वर्तमाने—

क्तिद्वद्भावात् स्वच्छादीरिति साचो यण इक । " एर्गीत्राक्वादु-झोऽसुधय, इति यणादेशः। पूर्ववच्छेष। विव्याय। विव्यय। विव्यिव। विव्यिम। विव्ययिथ। विव्यथुः। विव्य। विव्याय। विव्यतु.। विव्युः॥ पूर्ववत् णप्रादिषु कृतषु पित्स्वेत्रादि। कित्युत्रादेशः। थे वेट्। स्थानिवद्भावेन द्वित्वादि। जुहुव। जुहाव। जुहुविव। जुहुविम। जुहुविथ। जुहोथ। जुहुवथुः। जुहुव। जुहाव। जुहुवतुः। जुहुवुः। व्यतिजुहुवे। व्यतिजुहुविवहे। व्यतिजुहुविमहे। व्यतिजुहुविषे। व्यतिजुहुवाथे। व्यतिजुहुविध्वे। व्यतिजुहुविढ्वे। व्यतिजुहुवे। व्यतिजुहुवाते। व्यतिजुहुविरे। पक्षे लिङ्कृञ्आमीति वर्तमाने—

७८६ ॥ भीह्रीभृहोरुज्वत्। २। १। ५०। भी ह्री भृ हु इत्येतेभ्यो लिङ्कृञ्या भवति स च उज्वत्। उचि कार्यं द्वित्वमित्व चातिदिश्यते। द्वित्वे जश्त्वे च सत्येववादशौ। फलेशे दःप्राप्त'।

७८७ ॥ न। १। २। ७२। आम्वत तत्कृञः फलेशे दो न भवति। इति प्रतिषिद्धः। वलादाविट् प्राप्त.।

७८८ ॥ कृञोऽस्कुः। ५। १। १२८। सुदर्जितात्कृञो विहिते लिटि नेट् भवति। इति निषिद्ध.। थेऽप्ययमेव परत्वान्निषेधो, न विकल्पः। शेषं पूर्ववत्। जुहवाञ्चकार। जुहवाञ्चकर।

किदद्भावात् स्वच्छयादेरिति सावो यण् इक् । " एर्गेनाक्‌चादुश्चोऽसुधय., इति यणादेशः। पूर्ववच्छेत्र । विव्याय । विव्यय । विव्यिव । विव्यिम । विव्ययिथ । विव्यथुः । विव्य । विव्याय । विव्यतुः । विव्युः॥ पूर्ववत् णशादिषु कृतषु पित्स्वेवादि। कित्सुवदेशः। थे वेट्। स्थानिवद्भावेन द्विलादि । जुहुव । जुहाव । जुहुविव । जुहुविम । जुहुविथ । जुहोथ । जुहुवथुः । जुहुव । जुहाव । जुहुवतुः । जुहुवुः। व्यतिजुहुवे । व्यतिजुहुविवहे । व्यतिजुहुविमहे । व्यतिजुहुविषे । व्यतिजुहुवाथे । व्यतिजुहुविध्वे । व्यतिजुहुविढ्वे । व्यतिजुहुवे । व्यतिजुहुवाते । व्यतिजुहुविरे । पक्षे लिड्वक्रुञामीति वर्तमाने—

७८६ ॥ भीह्रीभृहोरुवत् । २ । १ । ५० । भी ह्री भृ हु इत्येतेभ्यो लिड्वत् कृञ्वा भवति वा स च उक्वत् । उचि कार्यं द्वित्वमित्वं चातिदिश्यते । द्वित्वे जश्त्वे च सत्येववादशौ। फलेशे दःप्राप्तः।

७८७ ॥ न । १ । २ । ७२ । आम्वत् तत्कृञः फलेशे दो न भवति । इति प्रतिषिद्धः । वलादावित् प्राप्तः ।

७८८ ॥ कृञोऽस्कुः । ५ । १ । १२८ । सुदवर्जितात्कृञो विहिते लिटि नेट् भवति । इति निषिद्धः । थेऽप्ययमेव परत्वान्निषेधो, न विकल्पः । शेषं पूर्ववत् । जुहुवाचकार । जुहुवाचकर ।

७८९ ॥ वाऽस्मण्णप् ।५।१।७२। अस्मदो णप् वा णिद् भवति । इति पक्षे णिद्‌भावः । जुहुवांचकृव । जुहुवाचकृम । जुहुवाचकर्थ । इत्यादि । व्यतिजुहुवाचक्रे । व्यतिजुहुवांचकृवहे। व्यतिजुहुवाचकृमहे । इत्यादि ।

७९० ॥ इटि चातस्व ।४।४।६७। इटि अजादौ चागे क्ङिति परे आकारान्तस्य खं भवति । इत्यात्खं । जहे । जहिवहे । जहिमहे ।

७९१ ॥ आतो णल औ । ५ । २ । ३६ । गोसंका-धंतात्परस्य लिटो णलः औकारादेशो भवति। इत्यौत्वं । दधौ । दधिव । दधिम । दधिथ । दधाथ । दधथुः । दध । दधौ । दधतुः । दधुः । दधे । दधिवहे । दधिमहे । इत्यादि । अदः,, घस्लृ,, इति चानुवर्तमाने

७९२ ॥ लिटि वा । २ । ४ । ४० । अदो घस्लृभावो वा भवति लिटि परतः । लृकार इत् । द्वित्वादि कार्यं ।

७९३ ॥ गमहन्जनखन्घसोऽनङि । ४ । ४ । २४ । गमादीनां हलङः क्ङित्यजादावनङि खे भवति । "शासिवसघसा" इति षत्वं । पूर्वसवर्णः । जघस । जघास । जक्षिव । जक्षिम । जघसिथ । जक्षथुः । जक्ष । जघास । जक्षतुः । जक्षुः । व्यतिजक्षे । व्यतिजक्षिवहे । व्यतिजक्षिमहे । व्यतिजक्षिरे इत्यादि । घस्लादेशा-भावे-आद । आदिव । आदिम । आदिथ । आदथुः । आद । आद । आदतुः । आदुः । व्यत्यादे । व्यत्यादिवहे । व्यत्यादिमहे । इत्यादि । अतिशिश्ये । अतिशिश्यिवहे । अतिशिश्यिमहे । अतिशिश्यिषे । अतिशिश्याथे । अतिशिश्यिढ्वे । अतिशिश्यिध्वे । अतिशिश्ये । अति-शिश्याते । अतिशिश्यिरे ॥ पूर्ववद् यजो वचः साचो यणः इक् । अचीति सम्प्रसारणादीति इक् । उवाच । उवाच । ऊचिव । ऊचिम । उवचिथ । उवक्थ । ऊचथुः । ऊच । उवाच । ऊचतुः । ऊचुः । ऊचे । ऊचिवहे । ऊचिमहे । इत्यादि । द्वित्वादिकं । "ष्टुञः" एप

नेहिमहे। इत्यादि। सुपव। सुपाव। सुपुविव। सुपुविम। सुपुविथ। सुपोथेत्यादि। सुपुवे। सुपुविवहे। सुपुविमहे। इत्यादि। "आयतः" इति दीत्व। "नुक्" इत्यधिकृत्य—

७९४ ॥ अश्नोः । ५ । २ । १९५ । अश्नोतेर्लिटि चस्य कृतद्वित्वस्य नुगागमो भवति। व्यानशे। व्यानशिवहे। व्यानशिमहे। व्यानशिषे। इत्यादि।

७९५ ॥ वा चेः । ५ । २ । ७१ । चिनोतेश्चात्परस्य वा कुत्वं भवति सन्लिटोः परतः। चिकय, चिकाय। चिक्यिव। चिक्यिम। चिकयिथ, चिकेथ। चिक्यथुः। चिक्य। चिकाय। चिक्यतुः। चिक्युः। चिचय। चिचाय। चिच्यिव। चिच्यिम चिचयिथ, चिचेथ। चिच्यथुः। चिच्य। चिचाय। चिच्यतुः। चिच्युः। चिक्ये। चिक्यिवहे। चिक्यिमहे। इत्यादि। चिच्ये। चिच्यिवहे। चिच्यिमहे। इत्यादि। तुतुदे। तुतुदिवहे। तुतुदिमहे। तुतुदिष। "न वृद्भ्यः" थे इति च वर्तमान—

७९६ ॥ ऋतः । ५ । १ । ११८ । ऋकारान्ताद्धोर्विहिते थे नेड् भवति। ममर। ममार। मम्रिव। मम्रिम। ममर्थ। इत्यादि। मुमोच। मुमुचिव। मुमुचिम। मुमोचिथ इत्यादि। मुमुचे। मुमुचिवहे। मुमुचिमहे। इत्यादि। रुरोध। रुरुधिव। रुरुधिम। रुरोधिथ। रुरुधे। रुरुधिवहे। रुरुधिमहे। इत्यादि। बुभुजे। बुभुजिवहे। बुभुजिमहे। बुभुजिषे। इत्यादि। युयोज। युयुजिव। युयुजिम। युयोजिथ। इत्यादि। युयुजे। युयुजिवहे। युयुजिमहे। इत्यादि। ततन। ततान। तेनिव। तेनिम। तेनिथेत्यादि। तेने। तेनिवहे। तेनिमहे। मेने। मेनिवहे। मेनिमहे। इत्यादि। "कृञोऽस्कुः" इत्यनिट्। चकर। चकार। चकृव। चकृम। चकर्थ।

इत्यादि । चक्रे । चकृवहे । चकृमहे । इत्यादि । तस्यैव सपूर्वस्य "संपर्युपात् कृ- सुट् भूषे,, इति सुट् ।

३९७ ॥ स्फायृदर्वेरप् । ५ । २ । १३५ । स्कादेः ऋकारान्तस्य गोरर्चेश्च लिटि परत एप् भवति । संचस्कार । संचस्करिव । संचस्करिम । संचस्करिथ । इत्यादि । संचस्करे । संचस्करिवहे । संचस्करिमहे संचस्करिषे । संचस्कराथे संचस्करिध्वे । संचस्करिढ्वे । संचस्करे संचस्कराते । संचस्करिरे ॥ चिक्राय । चिक्राय । चिक्रयिव । चिक्रयिम । चिक्रयिथ । चिक्रेथ । चिक्रियथुः । चिक्रिय । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रिये । चिक्रियिवहे । चिक्रियिमहे । चिक्रियिषे ॥ इत्यादि । ववे । ववृवहे । ववृमहे । ववृषे । ववाथे । ववृढ्वे । ववे । ववाते । वविरे । वशिग्र्यावेव्यधिविचिव्याप्रहीत्यादिना यण इक् । अनुजग्राह । अनुजगृहिव । अनुजगृहिम । अनुजगृहिथ । इत्यादि । अनुजगृहे । अनुजगृहिवहे । अनुजगृहिमहे । इत्यादि । चोरयाचकार, चोरयाचकर । चोरयाचकृव । चोरयाचकृम । इत्यादि । छादयाचक्रे । छादयाचकृवहे । छादयाचकृमहे । इत्यादि । लक्षयाचकार । लक्षयाचकर । लक्षयाचकृव । लक्षयाचकृम । इत्यादि । लक्षयाचक्रे । लक्षयाचकृवहे । लक्षयाचकृमहे । इत्यादि । योजयाचकार । योजयाचकर । युयोज । अर्चयाचकर । अर्चयाचकार । आनर्च । वारयाचकार । ववार । वव्रे । इत्यादि सर्वपच सर्वमनुगन्तव्य ॥ लुङ् प्रदर्श्यते । "भूते,, इत्यनुवर्त्तमाने-

३९८ ॥ लुङ् । २ । २ । ११७ । भूतेऽर्थे वर्तमानाद्धोर्लुङ् स्यो भवति । ङकारो ङितः सप्तमिति विशेषणार्थः । उकारो लुङ्लङिति विशेषणार्थः । सवाची लल्वोरिति लक्षणान्तिः प्राप्तस्तदपवादः ।

३९९ ॥ सिल्लुङि । ३ । १ । ५२ । धोर्लुङि परतो मध्ये

सिस्यो भवति । इकारः "सावैम्मे" इति विशेषणार्थः । "यड उप्" इत्यधिकृत्य—

८०० ॥ भ्रुभूस्थेणिक्पिबः सेर्मे ॥ १ । ४ । १४९ । भुसञ्ज्ञकेभ्यो भू स्था इण् इक् पिब इत्येतेभ्यश्च परस्य सेरुप्भवति मे परतः। इति सेरुप् । लखे त्याश्रयत्वात्ताविन सावैप् प्राप्तः, "नोमता गोः" इति निषिद्धः । "लुङ्लङ्लृङ्क्ष्वमाङाद्" इत्यट् । पूर्ववन्मि-वादिः । "एमें" इत्यादि च बिलुकारकार्यं । पित्वेप् प्राप्तः । "नेटः" इति वर्तमाने—

८०१ ॥ सूभ्वोऽधस्य मिङि । ५ । २ । ९६ । सू भू इत्येतयोरधसंज्ञकयोर्मिङि पित्वेप् न भवति । "लुङ्लिटोर्वुक्" इत्यजादौ वुक् । अभूवं । अभूव । अभूम । अभूः । अभूतं । अभूत । अभूत् । अभूतां । अभूवन् । दविधौ—सेरुप् न भवति । तत्र सेरिद् । एव-मादेशौ । "झस्य देऽनतः" इत्यदादेशः । व्यत्यभविषि । व्यत्यभवि-ष्वहि । व्यत्यभविष्महि । व्यत्यभविष्ठाः । व्यत्यभविषाथां । व्यत्यभवि-ध्वं । व्यत्यभविढ्व । व्यत्यभविष्ट । व्यत्यभविषातां । व्यत्यभवि-षत । "स्कांतस्य ख" इति "रास्सः" इति च वर्तमाने—

८०२ ॥ धि वा । ५ । ३ । ६१ । धकारादौ परतो वा स-कारस्य ■ भवति । पक्षे जदत्वे डकारः । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्ठाः । ऐधिषाथां । ऐधिध्वं । ऐधिड्ढ्वं । ऐधिष्ट । ऐधिषातां । ऐधिषत ॥ "सात्रैम्मे" इति वर्तमाने–

८०५ ॥ झलो झलि । ५ । ३ । ६२ । झलः परस्य सकारस्य खं भवति झलि परतः । इति सखं । "थविस्सेः" इति ढेर्डुस् । अपाक्ष । अपाक्ष्व । अपाक्ष्म । अपार्क्षाः । अपार्क्त । अपाक्त । अपाक्षीत् । अपाक्तां । अपाक्षुः । अपक्षि । अपक्ष्वहि । अपक्ष्महि । अपक्थाः । अपक्षाथां । अपग्ध्वं । अपक्त । अपक्षातां । अपक्षत ।

८०६ ॥ नेटि । ५ । १ । ■ । हलंतस्य गोरचः ऐप् न भवति मे परे सानिडादौ परतः । "रः खं" इति वर्तमाने—

८०७ ॥ ईडीटः । ५ । ४ । ९६ । इटः परस्य सेरीडादौ त्ये परतः खं भवति । सेरखं दीः । अनादिष । अनादिष्व । अनादिष्म । अनंदीः । इत्यादि । अभ्यासिषि । अभ्यासिष्वहि । अभ्यासिष्महि । इत्यादि । "सौ, मे" इति च वर्तमाने—

८०८ ॥ यमूरमूनमातां सक् च । ५ । १ । १४६ । यम् रम् नम् इत्येतेभ्यः आकारांतेभ्यश्च मपरे सौ परतः इट् भवति सक् चागमं एषां । अभ्यासिषं । अभ्यासिष्व । अभ्यासिष्म । अभ्यासीः । इत्यादि । अभ्यासि । अभ्यासहि । अभ्यासमहि । इत्यादि। "सावेम्मे" इत्यादि पूर्ववत । अहौषं । अहौष्व । अहौष्म । अहौषीरित्यादि । व्यत्यहोषि । व्यत्यहोष्वहि । व्यत्यहोष्महि । व्यत्यहोष्ठाः । व्यत्यहोषाथां । व्यत्यहोध्वं । धि वेति यदा सेर्न खं, तदा स्यादशयोरिति षत्व । जश्त्वे डकारः । ष्टुत्वे च परस्य ढकारः । व्यत्यहोड्ढ्वं । व्यत्यहाष्ट । व्यत्यहोषातां । व्यत्यहोषत । अहासि । अहास्वहि । अहास्महि । इत्यादि । सुमुसेत्यादिना सेरुप् ।

८०९ ॥ आतः । २ । ४ । ९२ । आकारांतात् यः सिः तस्मात् परस्य झेर्जुस् भवति । अधां । अधाव । अधाम । अधुः । इत्यादि । "यमसौ सिस्त्रो दे" इति वर्तमाने—

८१० ॥ सुस्थोरिः । १ । १ । १९६ । सुसंज्ञकस्य स्था इत्येतस्य च घोः सकारादौ दपरे सिविकारादेशो भवति किद्वच । झलि—

८११ ॥ प्राद्वोः । ५ । ३ । ६३ । प्रातास् गोरुत्तरस्य सकारस्य खं भवति झलि । इति ख । अधिषि । अधिष्वहि । अधिष्महि । अधिधाः । अधिषाथा । अधिध्व । अधित । अधिषातां । अधिषत ।

८१२ ॥ घस्लजलुङ्स्यन्सनि । १ । ४ । १२९ । अदेर्घस्लृ इत्ययमादेशो भवति अचि लुङि घञि सनि च परतः । लृकारो ल्रित्कार्यार्थः । "वक्त्यसुख्यातेरङ्" इत्यधिकृत्य—

८१३ ॥ द्युत्पुष्यादिलृित्सर्तिशास्तर्मे । २ । १ । ६१ । द्युतादिभ्यः पुषादिभ्यश्च लृकारेभ्यः सार्तिशास्तिभ्यां च कर्तरि मपरे लुङि परतो अङ् भवति । ङकारो ङित्कार्यार्थः । अघस । अघसाव । अघसाम । इत्यादि । दविधौ सिरेव । "मरुद्रेऽस्तोऽच" इति वर्तमाने—

८१४ ॥ स्यगे सः । ५ । २ । १३४ । सकारादावगे परतो गोरचः परस्य सकारस्य तकारादेशो भवति । इति तकार । झलि सेःखं । व्यत्यघसि । व्यत्यघत्स्वहि । व्यत्यघत्स्महि । व्यत्यघत्थाः । इत्यादि । अशयिषि । अशयिष्वहि । अशयिष्महि । इत्यादि ।

८१५ ॥ वक्त्यसुख्यातेरङ् । २ । १ । ५८ । वक्ति-वचै परिभाषणे ब्रूआदेशश्च, असु क्षेपणे, ख्या प्रकथने चक्षादेशश्च । एतेभ्यो धुभ्यः कर्तरि लुङि परतोऽङ् भवति । इत्यङ् । "नशोऽङीम्" इति वर्तमाने—

८१६ ॥ श्व्यस्पद्वचोऽथुक्पुमुम् । ५ । २ । १४२ । श्वि अस् पत् वच् इत्येतेषा यथासंख्यमकार थुक् पुम् उम् इत्येते

आगमा भवति अङि परत । इति वचेरुमागम । अवोच । अवोचाव । अवोचाम । इत्यादि । अवोच । अवोचावहि । अवोचामहि । इत्यादि । सरिट् ॥ सिसिषेोरीट् । "इटीट" इति सख । स्यख स्वाश्रयमिति "हलमच" इति एपि प्राप्त नेटाति निषिद्ध । "ध्युड" इत्येप् । अदक्षि । अदक्ष्व । अदेक्ष्म । अदेक्षीरित्यादि । व्यत्यदेक्षि । व्यत्यदेक्ष्वहि । व्यत्यदेक्ष्महि । इत्यादि । असाविषि । असाविष्वहि । असाविष्महि असोष । असोष्वहि । असोष्महि । इत्यादि । अनात्स । अनात्स्व । अनात्स्म । अनात्सीरित्यादि । अनात्सि । अनत्स्वहि । अनत्स्महि । इत्यादि । "धानजे" इत्यधिकृत्य--

८१७ ॥ स्तुधूञ्सोर्मे । ६ । १ । १४६ । स्तु धूञ् सुञ् इत्येतेभ्यो मे परे सावेट् भवति । असाविष । असाविष्व । असाविष्म । असावीरित्यादि । असोषि । असोष्वहि । असोष्महि । इत्यादि । आशिषि । आशिष्वहि । आशिष्महि । आशिष्ठा । इत्यादि । अनिट्पक्ष व्रश्चेत्यादिना षत्व । षढो कस्सीति कत्व । टुत्वादि च । आक्षि । आक्ष्वहि । आक्ष्महि । आष्ठा । आक्षाथा । आढ्व । आष्ट । आक्षाता । आक्षत । निरचेषि । निरचेष्व । निरचेष्म । निरचेषीरित्यादि । समचषि । समचेष्वहि । समचेष्महि । इत्यादि । "हलमच" इत्येप् । सिप्तिपेोरीट् । झलि से ख । अतौत्स । अतौत्स्व । अतौत्स्म । अतौत्सी । अतौत्स । अतौत्स । अतौत्सीत् । अतौत्ता । अतौत्सु । "सिजौ दे" इति से किद्वद्भावात् "ध्युड" इत्येप् न भवति । झलि सेः ख । वि वेत्यखपक्षे झला जश् झशि ति सेर्जस्त्व । तस्य "झरो झरि स्वे" इति ख । अतुत्सि । अतुत्स्वहि । अतुत्स्महि । अतुत्था । अतुत्साथा । अतुद्ध्व । अतुत्त । अतुत्साता । अतुत्सत । अमृषि । अमृष्वहि । अमृष्महि । अमृथा । इत्यादि । पुषुष्यादीत्यादिना अङ् । अमुच ।

८१० ॥ घुस्थोरिः । १ । १ । १९६ । घुसंज्ञकस्य स्था इत्येतस्य च धो सकारादौ दपरे साविकारादेशो भवति किद्वच । झलि—

८११ ॥ माद्वोः । ५ । ३ । ६३ । प्रांतात् गोरुत्तरस्य सकारस्य खं भवति झलि । इति ख । अधिषि । अधिष्वहि । अधिष्महि । अधिथाः । अधिषाथा । अधिध्व । अधित । अधिषाता । अधिषत ।

८१२ ॥ घस्ल्जुलुङ्घञ्सनि । १ । ४ । १२९ । अदेर्घस्ल इत्ययमादेशो भवति अचि लुङि घञि सनि च परतः । ल्टकारो लित्कार्यार्थः । "वक्तयमुख्यातेरङ्" इत्यधिकृत्य—

८१३ ॥ द्युत्पुष्यादिलित्सर्तिशास्त्रमें । २ । १ । ६१ । द्युतादिभ्यः पुषादिभ्यश्च ल्टकारेभ्य. सर्तिशास्तिभ्यां च कर्तरि मपरे लुङि परतो अङ् भवति । ङकारो ङित्कार्यार्थः । अघस । अघसाव । अघसाम । इत्यादि । दधिधौ-सिरेव । "मरुद्रेऽस्तोऽच." इति वर्तमाने–

८१४ ॥ स्यगे सः । ५ । २ । १६४ । सकारादावगे परतो गोरचः परस्य सकारस्य तकारादेशो भवति । इति तकारः । झलि-सेःखं । व्यत्सघीत्स । व्यत्यघत्स्वहि । व्यत्सघत्स्महि । व्यत्यघत्थाः । इत्यादि । अशायिषि । अशायिष्वहि । अशायिष्महि । इत्यादि ।

८१५ ॥ वक्तयमुख्यातेरङ् । २ । १ । ५८ । वक्ति-वचै परिभाषणे ब्रूञादेशश्च, असु क्षेपणे, ख्या प्रकथने चक्षादेशश्च । एतेभ्यो घुभ्यः कर्तरि लुङि परतोऽङ् भवति । इत्यङ् । "नशोऽङीम्" इति वर्तमाने—

८१६ ॥ श्व्यस्पत्वचोऽथुक्पुमुम् । ५ । २ । १४२ । श्वि अस् पत् वच् इत्येतेषां यथासंख्यमकार थुक् पुम् उम् इत्येते

आगमा भवंति अडि परतः । इति वचेरुमागमः । अवोच । अवोचाव । अवोचाम । इत्यादि । अवोचे । अवोचावहि । अवोचामहि । इत्यादि । सरिट । सिसिपोरीट् । "इटीट" इति सख । त्यखे स्याथयमिति "हृत्यामच" इति एपि प्राप्ते नेटीति निषिद्ध । "ध्युड." इत्येप् । अदनिष । अदेविष्व । अदेनिष्म । अदेवीरित्यादि । व्यत्यदेविपि । व्यत्यदेविष्वहि । व्यत्यदेविष्महि । इत्यादि । असरिपि । असरिष्वहि । असत्रिष्महि असोप । असाष्वहि । असाष्महि । इत्यादि । अनात्स । अनात्स्व । अनात्स्म । अनात्सीरित्यादि । अनात्सि । अनत्स्वहि । अनत्स्महि । इत्यादि । "सावजे." इत्यधिकृत्य—।

८१७ ॥ स्तुधूञ्सोर्मे । ५ । १ । १४६ । स्तु धूञ् सुञ् इत्येतेभ्यो मे परे सावेट् भवति । असाविष । असाविष्व । असाविष्म । असावीरित्यादि । असोषि । असोष्वहि । असोष्महि । इत्यादि । आशिषि । आशिष्वहि । आशिष्महि । आशिष्ठा । इत्यादि । अनिट्पक्षे व्रश्चेत्यादिना षत्व । पढोः कस्सीति कत्व । टुत्वादि च । आक्षि । आक्ष्वहि । आक्ष्महि । आष्टा । आक्षाथा । आड्ढ । आष्ट । आक्षाता । आक्षत । निरचेप । निरचेष्व । निरचेष्म । निरचेषीरित्यादि । समचषि । समचेष्वहि । समचेष्महि । इत्यादि । "हृत्यामच" इत्येप् । सिप्तिपोरीट् । झलि से ख । अतौत्स । अतौत्स्व । अतौत्स्म । अतौत्सी । अतौत्त । अतौत्त । अतौत्सीत् । अतौत्ता । अतौत्सु । "सिलौ दे" इति से किद्वद्भावात् "ध्युड." इत्येप् न भवति । झलि से. ख । धि वेत्यखपक्षे झलो जश् झशीति सेजत्व । तस्य "झरो झरि स्वे" इति ख । अतुत्सि । अतुत्स्वहि । अतुत्स्महि । अतुत्था । अतुत्साथा । अतुद्ध्व । अतुत्त । अतुत्साता । अतुत्सत । अमृषि । अमृष्वहि । अमृष्महि । अमृथा । इत्यादि । युत्पुष्यादीत्यादिना अङ् । अमुच ।

अमुचाव । अमुचाम । इत्यादि । अमुक्षि । अमुक्ष्वहि । अमुक्ष्महि । इत्यादि ।

८१८ ॥ वेरित्वः । २ । १ । ६२। इरनुबन्देतो धोर्लुङि मे परतो वा अङ् भवति कर्तरि । पक्षे सिः । दे तु सिरेव । किद्वद्भावादनेप्‌त्व । अरुध । अरुधाव । अरुधाम । इत्यादि । अरौत्स । अरात्स्व । अरौत्स्म । अरौत्सीः । अरौद्ध । इत्यादि । अरुत्सि । अरुत्स्वहि । अरुत्स्महि । अरुद्धाः । अरुत्साथा । अरुद्ध्वं । अरुत्त । अरुत्साता । अरुत्सत । अभुक्षि । अभुक्ष्वहि । अभुक्ष्महि । इत्यादि । अयुज । अयुजाव । अयुजाम । इत्यादि । अयौक्ष । अयौक्ष्व । अयौक्ष्म । अयौक्षी' । अयौक्त । अयौक्त । इत्यादि । प्रायुक्षि । प्रायुक्ष्वहि । प्रायुक्ष्महि । प्रायुक्थाः । इत्यादि । "वोर्णुञः,, इति वर्तमाने—

८१९ ॥ अतोऽनादेर्घेः । ५ । १ । ८२ । घे परतोऽनादेरिडादौ मपरे सार्वप् वा भवति । इसैप् । अतानिष । अतानिष्व । अतानिष्म । अतानारित्यादि । पक्षे अतनिप । अतनिष्व । अतनिष्म । इत्यादि । दविवौ-थास्तयो — उवित्ति सेरिति वेति च वर्तमाने—

८२० ॥ तन्भ्यस्थास्ते । १ । ४ । १५१ । तनादिभ्यः परस्य सेरुब्वा भवति थास्तयोः परतः । इत्युपि-क्ङितीति वर्तमाने-

८२१ ॥ हन्मनूयमूरमूनभुगम्वनतितनाऽरुत्वं झलि । ४ । ४ । ३९ । हनादीनां वनतेस्तनादीना च मूना, झलादौ किङ्ति खे परे उख भवति । इति नकारस्य ख । अतनिपि । अतनिष्वहि । अतनिष्महि । अतथाः । अतनिष्ठाः । अतनिषाता । अतनिध्व । अतनिद्वं । अतत । अतनिष्ट । अतनिषाता । अतनिषत । पूर्ववद् सेरुवादि । अमनिषि । अमनिष्वहि । अमनिष्महि ।

इत्यादि । अकार्षं । अकार्ष्व । अकार्ष्म । अकार्षीः । इत्यादि । अक्रीष । अकृष्वहि, अकृष्महि । अकृथाः । इत्यादि । अक्रैष । अक्रैष्व । अक्रैष्म । अक्रैषीः । इत्यादि । अक्रीषि । अक्रीष्वहि । अक्रीष्महि । अक्रीष्ठाः । इत्यादि । "वृतो वा,, इति वर्तमाने ।

८२२ ॥ लिङ्स्योर्दे । ५ । १ । ९८ । इङ् वृङ् इत्येताभ्यां ऋकारान्ताच्च परौ यौ लिङ्सी तयोर्दविषययोरिड् वा भवति । यदेद्-तदा ।

८२३ ॥ वृतो वाऽलिपसौ । ५ । १ । ९६ । वृतः परस्य इटो वा दीर्घो भवति न चेत्स इट् लौ लिङि लिटि सपरे सौ च भवति । इति दीर्घं । अवरीषि । अवरीष्वहि । अवरीष्महि । इत्यादि । इडभावे—सिठौ दे,, उरिति किद्वद्भावादेप् न भवति । अवृषि । अवृष्वहि । अवृष्महि । इत्यादि । ग्रहोऽलिटयेकाचो दीरिति दीर्घं ।

८२४ ॥ हम्यक्षणश्वसञ्ज्येदितां । ५ । १ । ९० । हमयपान्तानां क्षण् श्वस् श्वि इत्येषां एदितां च गूनाभिङादौ सावेप् न भवति । इत्यैब्भावः । अगृहीषं । अगृहीष्व । अगृहीष्म । इत्यादि । अगृहीषि । अगृहीष्वहि । अगृहीष्महि । इत्यादि ।

८२५ ॥ णिकम्श्रिद्रुश्रोः कर्त्तरि कच् । २ । १ । ५६ । ण्यतेभ्यो धुभ्यः कम् श्रि द्रु स्रु इत्येतेभ्यश्च कर्तृवाचिनि लुङि परतः कच् भवति । सेरपवादः । ककारः कित्कार्यार्थः । चकारो "लिङ्चाचि धोः" इति विशेषणार्थः ।

८२६ ॥ णौ कच्युङः प्रोऽशास्वक्लृदितः । ५ । २ । १२८ । शासु अक्खिन् ऋदित् इत्येतत्वर्जितस्य गोरुङः प्रादेशो भवति कच्परे णौ परतः ।

८२७ ॥ द्वित्वेऽचि । १ । १ । ६८ । द्वित्वनिमित्तेऽचि अजादेशो स्थानिवद्भवति । स्थानिवद्भावेन "लिड्यङ्चि धोः" इति द्वित्वं । हलोऽनादेरित्यादि च कार्यं ।

८२८ ॥ घेर्दीर्घनजादेः । ५ । २ । २१२ । णौ कष्परे ऽनक्खे णावनजादेर्धोरथस्य घेर्दीर्घो भवति । णिश्रमङ् च । अचूचुरं । अचूचुराव । अचूचुराम । अचूचुरः । अचूचुरतं । अचूचुरत । अचूचुरत् । अचूचुरतां । अचूचुरन् ।

८२९ ॥ णौ कष्यनक्खे सन्वत् । ५ । २ । १११ । न विद्यतेऽकः खं यस्मिन् तदनक्खं तस्मिन्ननक्खे णौ कष्परे परतश्चस्य घिसञ्ज्ञके वर्णे परे सनीव कार्यं भवति । किं तत् । चस्येति "भूहाङ्मामिः,, इति च वर्तमाने—

८३० ॥ सन्यतः । ५ । २ । २०१ । सनि परतश्चस्याकारस्य इत्वं भवति । इतीत्वं । घेर्दीर्घनजादेरिति दीर्घादतदगत्वेन "छे च" इति तुक् । पुनः घित्वाभावान्न दीर्घत्वं । अचिच्छदं । अचिच्छदावहि । अचिच्छदामहि । इत्यादि । अललक्षं । अललक्षाव । अललक्षाम । इत्यादि । अललक्षि । अललक्षावहि । अललक्षामहि । इत्यादि । अयूयुजं । अयूयुजाव । अयूयुजाम । इत्यादि । अपीप्रं । अपीप्रव इत्यादि । "आदेरेकाचो द्वे" इति वर्तमाने—

८३१ ॥ अचः । ४ । ३ । ३ । आदेरचः परस्य एकाचो द्वे रूपे भवतः । आदिद्वित्वापवादः ।

८३२ ॥ न स्फादौ न्द्रोऽयि । ४ । ३ । ४ । आदेरचः परे स्फादौ वर्तमाना नकारदकाररेफास्ते न द्विरुच्यतेऽयकारे । आर्चिचं । आर्चिचाव । इत्यादि । आर्चिचि । आर्चिच्चावहि । इत्यादि । अरीरचं । अरीरचाव । इत्यादि । प्रार्चिरं । प्रार्चिरव । इत्यादि ।

प्रावरिषे । प्रावरीषे । प्रावृषे । प्रावृष्वहि । इत्यादि सविस्तरमभ्यूह्यं । लुट्‌द्राह्यिते । "गम्यादिर्वर्त्स्यति,, इत्यधिकृत्य—

८३३ ॥ शोकानद्यतने लुट् । १ । ३ । ३ । वर्त्स्यत्यर्थे वर्तमानाद्धोर्लुट् भवति लृट्येऽपवादः शोकानद्यतने ॥ शोकोऽनुशोचनं पश्चात्ताप इत्यर्थः । टकारः पूर्ववत् । उकारः "स्यतासी लृलुटोः,, इति विशेषणार्थः ।

८३४ ॥ स्यतासी लृलुटोः ।२।१।४६। लृ इति लृटि लृङि लौ लुटि परतो मध्ये तासिस्यौ भवति । इकारो "हलुङः पूर्क्रियमनदित , इति विशेषणार्थः । तस्य "वल्येदरिट्" इति इट् । ततो मिवादयः ।

८३५ ॥ लुटोऽन्यस्य डारौरस् ।२ । ४ । ९७। लुडादेशानामन्यसञ्ज्ञाना तिप् तस् झि इत्येतेषा यथासख्य डा रौ रस् इत्येते आदेशा भवति । "तास्यार्नेऽतेऽलः,, इति तिप इकारस्य डादेशः । डिति टेरिति आस्तशब्दस्रूपस्य ख । "स्यो स " इति वर्तमाने—

८३६ ॥ तासस्त्योः खं ।५ । २ । १६९। तासेरस्तेश्च सकारस्य ख भवति सकारादौ त्ये ।

८३७ ॥ रि । ५ । २ । १७० । तासेरस्तेश्च धौ रेफादौ सकारस्य ख भवति । एवमादेशौ । भविताास्मि । भवितास्व । भवितास्म । भवितासि । भवितास्थ. । भवितास्थ । भविता । भवितारौ । भवितारः ।

८३८ ॥ एति हः ।५ । २ । १७१। तासेरस्तेश्च सकारस्य हकारादेशो भवति एकारादौ त्ये परत । व्यतिभविताहे । व्यतिभवितास्वहे । व्यतिभवितास्महे । व्यतिभवितासे । व्यतिभवितासाथे । व्यतिभविताध्वे । व्यतिभविता । व्यतिभवितारौ । व्यतिभवितारः । एधिताहे । एधितास्वहे । एधितास्महे । एधितासे । इत्यादि ।

पक्तास्मि । पक्ताहे । सुनादितास्मि । प्रध्वंसिताहे । सम्व्याताहिम । संव्याताहे । होतास्मि । व्यतिहोताहे । हाताहे । प्रणिपूर्वाद्दाग्रः—

८३९ ॥ नेर्गद्नदपतपद्घुमास्यतिहंतियातिवातिद्राप्सातिवपैवहशम्चिचिद्देग्धौ । ५ । ४ । १२० ।

गेरदुरोऽन्तःशब्दाच परस्य नेर्गदादिषु परतो णत्वं भवति । इति णत्वं । प्रणिभातास्मि । प्रणिधाताहे । अत्तास्मि । व्यत्यत्ताहे । आतिशयिताहे । वक्ताहे । वक्तास्मि । देवितास्मि । व्यतिदेविताहे । सविताहे । सोताहे । "व्यतरोऽदुरोऽविकृतः" इति णत्वं । परिणद्धास्मि । परिणद्धाहे । अभिपोतास्मि । अभिपोताहे । अशिताहे । अद्धाहे । चेतास्मि । चेताहे । तोचास्मि । तोत्ताहे । मर्त्तास्मि । व्यतिमर्त्ताहे । मोक्तास्मि । मोक्ताहे । रोद्धास्मि । रोद्धाहे । भोक्ताहे । भोक्तास्मि । प्रयोक्ताहे । तनितास्मि । तनिताहे । कर्तास्मि । कर्त्ताहे । क्रीतास्मि । क्रीताहे । वरितास्मि । वरिताहे । गृहीतास्मि । गृहीताहे । चोरयितास्मि । छादयिताहे । लक्षयितास्मि । लक्षयिताहे । योजयितास्मि । योक्तास्मि । अर्चयितास्मि । अर्चयिताहे । वारयितास्मि । वारयिताहे । वरितास्मि । वरिताहे । इत्यादि सर्वमुन्नेय ॥ लृद् व्याख्यायते । गम्यादिर्लृस्यर्तीत्यधिकृत्य—

८४०॥लृद् । २ । ३ । २ । वर्त्स्यत्यर्थे वर्तमानाद्धोर्लृद् भवति । टकारः पूर्ववत् । ऋकारः स्यतासी लृल्वोरिति विशेषणार्थः । तेनैव मध्ये स्येति विकरणः । इडवचादेशास्ततो मिवादयः । भविष्यामि । भविष्यावः । भविष्यामः । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यति । भविष्यतः । भविष्यंति । व्यतिभविष्ये । व्यतिभविष्यावहे । व्यतिभविष्यामहे । व्यतिभविष्यसे । व्यतिभविष्येथे । व्यतिभविष्यध्वे । व्यतिभविष्यते । व्यतिभविष्येते । व्यतिभविष्यंते । एधिष्ये ।

पक्ष्यामि । पक्ष्ये । नंदिष्यामि । घसिष्ये । व्यास्यामि । व्यास्ये । होष्यामि । व्यतिहोष्ये । हास्ये । श्रद्धास्यामि । श्रद्धास्ये । अतस्यामि । व्यतत्स्ये । शयिष्ये । वक्ष्यामि । वक्ष्ये । देविष्यामि । व्यतिदेविष्ये । प्रसविष्ये । प्रसोष्ये । नत्स्यामि । नत्स्ये । अभिषोष्यामि । अभिषोष्ये । आशिष्ये । अक्ष्ये । निक्षेष्यामि । निक्षेष्ये । तोत्स्यामि । तोत्स्ये ।

८४१ ऋद्धनोः स्ये । ५ । १ । १४४ । ऋकारांता-द्धन्तेश्चागे स्ये इट् भवति । मरिष्यामि । व्यतिमरिष्ये । मोक्ष्यामि । मोक्ष्ये । रोत्स्यामि । रोत्स्ये । भोक्ष्ये । योक्ष्यामि । योक्ष्ये । तनिष्यामि । तनिष्ये । करिष्यामि । करिष्ये । क्रीष्यामि । क्रीष्ये । वरिष्ये । वरीष्ये । ग्रहिष्यामि । ग्रहीष्ये । चोरयिष्यामि । छादयिष्ये । लक्षयिष्ये । योजयिष्यामि । योक्ष्यामि । अर्चयिष्यामि । अर्चिष्ये । वारयिष्यामि । वरिष्यामि । वरीष्यामि । वरिष्ये । इत्यादि सप्रपंचम-भिगन्तव्य ॥ लृडुदाह्रियते । गम्यादिर्वस्स्यंतीत्याधिकृत्य—

८४२ ॥ लिङ्हेतौ लृङ् क्रियाऽवृत्तौ । २ । ३ । १३० । हेतुस्वरूपभूतिर्लिङो हेतुर्लक्ष्यते । तत्र लिङो हेतौ यत्स्यंति काले लृङ् भवति क्रियायाश्चेदप्रवृत्तिरतिपत्तिर्भवति ।

८४३ ॥ भूते । १ । ३ । १३१ । भूते काले लिङ्हेतौ क्रियावृत्तौ लृङ् भवति । टकारः पूर्ववत् । ऋकारः स्यतासी लृलो-रिति सामान्यग्रहणार्थः । मध्ये स्यः । ह्यस्तनवदादेशाः । अडागमः । अभविष्य । अभविष्याव । अभविष्याम । अभविष्यः । अभविष्यतं । अभविष्यत । अभविष्यत् । अभविष्यतां । अभविष्यन् । दाविधी-व्यत्यभविष्ये । व्यत्यभविष्यावहि । व्यत्यभविष्यामहि । व्यत्यभविष्यथाः । व्यतिभविष्येथां । व्यत्यभविष्यध्वं । व्यत्यभविष्यत । व्यत्यभविष्येतां । व्यत्यभविष्यंत । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । सर्वमभ्यूह्य ।

इति कर्तृपरिच्छेदः ।

अथ भावकर्मकर्मकर्तृषु लिङादयो निर्दिश्यते ।

८४४ ॥ सिस्यसीयुट्तासां ञौ गृहाज्झनृदृशो चीट् । ४ । ४ । ६५ । ग्रहेरजंतेभ्यो हनृदृशिभ्यां च परेषां सि स्य सीयुट् तास् इत्येतेषां ञावर्थे विहितानां ञीडागमो भवति या । पक्षे– इट् । ञीटि–ञ्णित्यचः,, इत्यैप् । तत्र-भावे–भाविषीष्ट, भविषीष्ट देवदत्तेन । कर्मणि अनुभाविषीय । अनुभविषीयेत्यादि । कर्मकर्तरि– अनुभाविषीय स्वयमेव । अनुभविषीय इत्यादि । सर्वं कर्तृवन्नेय । एधिषीष्ट । पक्षीष्ट । नंदिषीष्ट । ध्वंसिषीष्ट । "ञो" इति "आतः" इति चानुवर्तमाने––

८४५ ॥ कृञ्ञौ युक् । ५ । २ । ३७ । गोराकारांतस्य युगागमो भवति कृति ञ्णिति ञीटि च परतः । सव्यायिषीष्ट । सव्यासीष्ट । हायिषीष्ट । होषीष्ट । हायिषीष्ट । हासीष्ट । धायिषीष्ट । धासीष्ट । अत्सीष्ट । शायिषीष्ट । शयिषीष्ट । वक्षीष्ट । निधायिषीष्ट । निधिषीष्ट । तुत्सीष्ट । मारिषीष्ट । मृषीष्ट । मुक्षीष्ट । रुत्सीष्ट । भुक्षीष्ट । युक्षीष्ट । तनिषीष्ट । मनिषीष्ट । कारिषीष्ट । कृषीष्ट । क्रापिषीष्ट । क्रीषीष्ट । वारिषीष्ट । वरिषीष्ट । वृषीष्ट । माहिषीष्ट । महिषीष्ट । चोरयिषीष्ट । चोरिषीष्ट । छादयिषीष्ट । छादिषीष्ट । ख्क्षयिषीष्ट । ख्क्षिषीष्ट । योजिषीष्ट । योजयिषीष्ट । युक्षीष्ट । अर्चिषीष्ट । अर्चयिषीष्ट । वारिषीष्ट । वारयिषीष्ट । वरिषीष्ट । वृषीष्ट । इत्यादि । सर्वं प्रत्येय । लिटि––भावे––बभूवे देवदत्तेन । कर्मणि–कर्मकर्तरि च– अनुबभूविरेह । इत्यादि । एधाचक्रे । पेचे । ननंदे । दध्वंसे । संसिव्ये । जुहवाचक्रे । जुहुवे । जहे । दिदधे । आदे । जक्षे । शिश्ये । ऊचे । दिदिवे । प्रमुषुरे । नेदे । अभिदुद्रुवे । आनशे । चिस्ये । चिच्ये । तुतुदे । मम्रे । मुमुचे । रुरुधे । बुभुजे । युयुजे ।

तेने । मेने । चक्रे । चिक्रीये । वव्रे । जग्रहे । चोरयाचक्रे । छादयाचक्रे । उब्जयाचक्रे । योजयाचक्रे । युयुजे । अर्चयाचक्रे । आनर्च । वारयाचक्रे । वव्रे । इत्यादि पूर्ववज्ज्ञेय ॥ लुङि-भाव-कर्मणि तवचन । "लुङि" इति "त ञिः" इति च वर्तमाने -

८४६ ॥ ञौ । २ । १ । ६८ । भावे कर्मणि लुङि तवचने परे ञिरादेशो भवति । सेटपवादः । ञकार इत्यर्थः ।

८४७ ॥ येऽप् । ४ । ४ । १०२ । ञेरवत्स्य गोनिर्मिसभूतस्य तप् भवति । अभावि देवदत्तेन । अन्वभावि कम्बलो देवदत्तेन । कर्मकर्तरि-

८४८ ॥ कर्मवत्त्कड्यादीनां । २ । १ । ७६ । स्तनादिवर्जितस्य धोः कर्मकर्तरि विहिते लकारे कर्मवत् कार्यं भवति । ञ्यतिदनाश्रित्य ञौ प्राप्ते-

८४९ ॥ कर्मणि २ । १ । ६६ । कर्तरीति वर्तते । कर्तृत्वेन विवक्षिते कर्मणि लुङि ते परतो ञिर्वा भवति । पक्षे सिः । यदा सिस्तदा सेट् । अन्वभावि कम्बलः स्वयमेव । अन्वभाविष्ट । अन्वभविष्ट । इति त्रैरूप्य । अन्यत्र नाद्ततद्भावाद् द्वैरूप्य । अन्वभाविषि । अन्वभविषि । अन्वभविष्वहि । अन्वभविष्महि । इत्यादि । "दुहश्च" इति हस्तनियमादन्यथा विकल्पो न भवति । एधि । अघाचि । अघ्राता । अनादि । मानविषाता । अघानि । अघानिषाता । अख्यायि । अख्यायिष्ट । अख्यास्त । अख्यायिषाता । अहावि । अहामाता । अध्यायि । अध्यायिष्ट । अधित । अध्यायिषाता । अधिपतता । अधरसाता । अश्रायि । अश्रायि । अश्रान्ता । अदेवि । अदेविषाता । अनायि । अनायिष्ट । अनयिष्ट । अधोष्ट । असाविषाता । अवरिषाता । अशोषाता । अनादि । अनत्साता । अनायि । अधा-

विष्ट । असोष्ट । असाविषाता । असोपाता । आशि । आशिपाता । आक्षाता । निरचायि । निरचायिष्ट । निरचिष्ट । निरचायिषाता । निराचिषाता । अतोदि । अतुद । अतुत्साता । अमारि । अमोचि । अमुक्षाता । त्रिरिति वर्तमाने-

८९० ॥ न रुधः । २ । १ । ६ । रुधेर्धोः कर्मकर्तरि त्रि न भवति । ञावित नित्य प्राप्तः । कर्मणि तु भवत्यव । अरोधि । कर्मकर्तरि-अरुद्ध । अरुत्साता । अभांजि । अभुक्षाता । अयोजि । अयुक्षाता । अतानि । अतानिषाता । अमानि । अमानिषाता । अकारि । अकारिष्ट । अकृत । अकारिषाता । अकृषाता । अकारिषत । अकृषत । अक्रायि । अक्रायिष्ट । अक्रीष्ट । अक्रायिषाता । अक्रीषाता । अवारि । अवारिष्ट । अवरिष्ट । अवरीष्ट । अवृत । अवारिषाता । आवारीषाता । अवरिषाता । अवरीषाता । अवृषाता । अग्राहि । अग्राहिषाता । अग्रहीषाता । "यग्दुहः" इति " नमः " इति चाधिकृत्य-

८९१ ॥ दुहिणिच्छ्रिश्रन्थिग्रन्थिब्रुत्र्स्नोर्थ स्विश्च । २ । १ । ७३ दुहीना ण्यन्ताना श्रि श्रन्थि ग्रथि वच स्नु इत्येतेषां नमेश्च कर्मकर्तरि निर्यक् च न भवतः । इति कर्मकर्तरि निप्रतिषेधः । अचूचुरत स्वयमेव । कर्मणि अचोरि । अचोरिषाता । अचोरयिषाता । अचिच्छदत स्वयमेव । कर्मणि-अच्छादि । अच्छादिषाता । अच्छादयिषाता । अटत्क्षत स्वयमेव । कर्मणि-अटाक्षि । अटक्षिषाता । अयूयुजत स्वयमेव । कर्मणि-अयाजि । अयोजिषाता । अयोजयिषाता । अयुक्षाता । आर्चिचत स्वयमेव । कर्मणि-आर्चि । आर्चिषाता । आर्चयिषाता । अवीवरत स्वयमेव । कर्मणि अवारि । अवारिष्ट । अवृत । अवारिषाता । अवारयिषाता । अवृषातामित्यादि सयमधि-

गतव्य । लुटि तासौ नीटि च त्रिकल्पः । अन्यत्रेट् । भाविता । अनुभावितांहे । अनुभावितांहे । एधिता । पक्ता । पक्ताहे । नंदिता । अभिनंदितांहे । ध्वसिता । ध्वसिताहे । सव्यायिता । संव्याता । सव्यायितांहे । सव्याताहे । हाविता । होता । हावितांहे । होताहे । हायिता । हाता । हायिताहे । हाताहे । परिधायिता । परिधाता । परिधायिताहे । परिधाताहे । अत्ता । अत्ताहे । शायिता । शयिता । अतिशायितांहे । अतिशयितांहे । वक्ता । वक्ताहे । देविता । देवितांहे । साविता । सविता । सोता । सावितांहे । सवितांहे । सोताहे । परिणद्धा । परिणद्धाहे । साविता । सोता । सावितांहे । सोताहे । श्रायिता । श्रया । श्रायितांहे । श्रयाहे । चायिता, चेता । चायितांहे । चेतांहे । तोत्ता । तोत्ताहे । मारिता । मर्ता । परिमारितांहे । परिमरितांहे । मोक्ता । मोक्ताहे । रोद्धा । रोद्धाहे । भोक्ता । भोक्ताहे । योक्ता । योक्ताहे । तनिता । तनितांहे । मनिता । मनिताहे । कारिता । कर्ता । कारितांहे । कर्तांहे । क्रायिता । क्रीता । क्रायितांहे । क्रीतांहे । वारिता । वरिता । वरीता । वारितांहे । वरितांहे । वरीतांहे । ग्राहिता । ग्रहिता । ग्राहितांहे । ग्रहितांहे । चोरिता । चोरयिता । चोरितांहे । चोरयितांहे । छादिता । छादयिता । छादितांहे । छादयितांहे । अक्षिता । अक्षयिता । अक्षितांहे । अक्षयितांहे । योजिता । योजयिता । योक्ता । योजितांहे । योजयितांहे । योक्तांहे । अर्चिता । अर्चयिता । वारयिता । वरिता । वरीता । इत्यादि सर्वमभिलक्ष्य । लृटि लृङि वर्द्धमानेन च द्विधा नीतिः । भाविष्यते देवदत्तेन । कर्मणि-कर्मकर्तरि च-अनुभाविष्यते । अनुभविष्यते । एधिष्यते । पक्ष्यते । नदिष्यते । ध्वसिष्यते । व्यायिष्यते । व्यास्यते । हाविष्यते । होष्यते । हायिष्यते । हास्यते । विधायिष्यते । विधा-

स्यते । भत्स्यते । आतिशायिष्यते । अतिशायिष्यते । वक्ष्यते । देवि-ष्यते । साविष्यते । सविष्यते । सोष्यते । नत्स्यते । अभिषाविष्यते । अभिषोस्यते । अशिष्यते । अक्ष्यते । निक्षायिष्यते । निक्षिष्यते । तोत्स्यते । मारिष्यते । मरिष्यते । मोक्ष्यते । रोत्स्यते । भोक्ष्यते । योक्ष्यते । तानिष्यते । मनिष्यते । कारिष्यते । करिष्यते । क्रायिष्यते । क्रीष्यते । यारिष्यते । वरिष्यते । ग्राहिष्यते । ग्रहिष्यते । छादिष्यते । छादयिष्यते । लक्षयिष्यते । लक्षिष्यते । योजयिष्यते । योजिष्यते । योक्ष्यते । अर्चिष्यते । अर्चयिष्यते । वारिष्यते । वारयिष्यते । वरीष्यते । वरिष्यते । इत्यादि सर्वमुन्नेय ॥ अथ लृङि नीटिङ्भ्यां द्विधा नीति । अभाविष्यत, अभविष्यत देवदत्तेन । कर्मणि-कर्मकर्तरि च अन्वभाविष्यत । अन्वभविष्यत । ऐधिष्यत । अपक्ष्यत । अनदिष्यत । अध्यसिष्यत । अध्यायिष्यत । अध्यास्यत । अहाविष्यत । अहोष्यत । इत्यादि सविस्तरमूहितव्य । एव परमप्रकृतेर्नव लकारा उदाहृता ॥

अथ सांतेषु सन्नंता

भवितुमिच्छतीति विगृह्य " किद्गुप्तिज. सन् भिषज्यादिर्निंदाक्षमे" इति वर्तमाने-

८५२ ॥ तुमीच्छायां धोर्वोप् । २ । १ । ५ । "इच्छार्थे लिङ्लोट्" इत्यधिकृत्य-"तुमेककर्तृके" इति इच्छार्थे यो विहित तुम् तस्मिन्निच्छाया तुमि परतो धो परस्यसंज्ञा भूत्वा सन् वा भवति यदा सन् तदा तुम उप् ॥ "निमित्ताभावे नैमित्तकस्याप्यभाव " इति इटो निवृत्ति । भू सन् इति स्थिते नकार "सन्यजो "इति विशेषणार्थ. । वलादेरिडिति प्राप्त । "न वृद्ग्य " कित्यूर्णुञ्श्रयुक." इति च प्रस्तुत्य-

८५३ ॥ सनि ग्रहिगुहश्च । ५ । १ । १२६ । मद्गुहा-

स्यामुगंतेभ्यश्च धुभ्यः सनि किति इट् न भवति । इति निषिद्धः । "किद्वद्" इति "सनि" इति च वर्तमाने—

८५४ ॥ सीकः । १ । १ । ९८ । इगंतस्य धोः सकारादौ सनि परतः किद्वद् कार्यं भवति । इति किद्वद्भावात् "गागयोः" इत्येप् न भवति ।

८५५ ॥ सन्यङोः । ४ । ३ । १३ । सन्नतस्य यङंतस्य च धोः आदेरचो द्वे रूपे भवतः । इति द्वित्व । हलोऽनादेरित्यादि चकार्यं । भू भू प इति स्थिते—

८५६ ॥ तदंता धवः । २ । १ । ४४ । ते सन्नादयोऽन्ते येषां ते तदंताः धुसंज्ञा भवति । इति धुत्वे पूर्ववल्लडादिः । शपि "एप्यतः" इति पररूपं । बुभूषामि । बुभूषावः । बुभूषामः । इत्यादि । कर्मव्यतिहारे—व्यतिबुभूषे । व्यतिबुभूषावहे । व्यतिबुभूषामहे । इत्यादि । लङि—अबुभूष । व्यत्यबुभूषि । लिङि—बुभूषेय । व्यतिबुभूषेय । लोटि—बुभूषाणि । व्यतिबुभूषै । यकि—अतः" इत्यखं । बुभूष्यते देवदत्तेन । अनुबुभूष्यते कम्बलो देवदत्तेन । नेति गिरिति जीडिति च वर्तमाने—

८५७॥ भूषार्थसन्किरादीनां यक् च । २ । १ । ७४ भूषार्थानां सन्नतानां किरादीनां च कर्मकर्तरि यक् णि णीट् च न भवति । इति निषेधात् यक् न भवत्येव । कर्मवदित्यतिदेशात् दविधिश्च । अनुबुभूषते कम्बलः स्वयमेव । लङि—अबुभूष्यत । अन्वबुभूष्यत । अन्वबुभूषत । लिङि—बुभूष्येत । अनुबुभूष्येत । अनुबुभूषेत । लोटि—बुभूष्यता । अनुबुभूष्यतां । अनुबुभूषतामित्यादि । लोट् चाशिषि—बुभूष त्व । बुभूषताद् वा । बुभूषतु भवान्, बुभूष-

ताद् वा। लिङि च–अत. ख। बुभूष्यास। व्यतिबुभूषिषीय। लिटि–बुभूषाचकार। बुभूषाचकर। व्यतिबुभूषाचक्रे। लुङि–अबुभूषिष। व्यत्यबुभूषिषि। लुटि—बुभूषितास्मि। व्यतिबुभूषिताहे। लृटि—बुभूषिष्यामि। व्यतिबुभूषिष्ये। लृङि–अबुभूषिष्य। व्यत्य॰बुभूषिष्ये। इत्यादि। बुभूषिषीष्ट देवदत्तेन। अनुबुभूषिषीय। बुभूषाचक्रे। अबुभूषि। अन्वबुभूषि। अन्वबुभूषिष्ट कट स्वयमेव। कौं॰बुभूषिता। अनुबुभूषिताहे। बुभूषिष्यते देवदत्तेन। अनुबुभूषिष्ये। लृङि–अबुभूषिष्यत। अन्वबुभूषिष्ये। इत्यादि। "अचः" इति द्वित्व।

८५८ ॥ प्राग्वत् सनः। १। २। ९८। सनः प्राच प्रकृते परस्य लकारस्य यथा दो भवति तदा सन्नतादपि। इति द। दधिधिष। इत्यादि।

८५९ ॥ सन्यतः। ५। २। २००। सनि परे यदः तस्याकारस्य इकारादेशो भवति। पिपक्षामीत्यादि। निनदिषामि। इत्यादि। दिप्सिसिषे। विव्यासामि। विव्यासे। इत्यादि।

८६० ॥ हन्यधा सनि। ४। ४। १३। हतेरिणे॰गिङादेशस्य गमेरजतस्य च धोर्दीर्घेर्भवति झलादौ सनि परत। जुघूषामि। जिहासे।

८६१ ॥ स्सनिमीमाघुरभलभशक्पतपदोऽच इस्। ५। २। १७४। मी मा भुइत्येवमादीनामचः स्थाने इसादेशो भवति सकारादौ सनि परत चस्य चोप्। "स्गे सः" इति तकारः। मित्सामि। मित्से। "घस्छनुहृस्वधन्सनि" इत्यदेर्घस्ट्भावस्य "स्गे स" इति तत्व। द्वित्वादि। जिघत्सामि। व्यतिजिघत्से। शिशयिषे। विवक्षामि। विवक्षे।

८९१ ॥ सनीवंतर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ७ । २ । ४९ । इवन्तेभ्यो धुभ्यः ऋधादिभ्यश्च सनि परतः इट् वा भवति । इट्पक्षे-ध्युक्, इत्वेप् । दिदेविषामि । इडभावे "किदिस्सनि सीकः" इति वर्तमाने-

८९३ ॥ हलि । १ । १ । ९९ । सकारादौ सनि परतो यो हल् तस्मिन् परे य इक् तस्य किद्वत् कार्यं भवति । इत्वेप् निषिद्धः । "छ्वोः शूठ् के च" इति वस्य ऊठ् यण् तथो द्वित्वादि । दुद्यूषामि । पूर्ववदिडभावः कित्त्वं च ।

८९४ ॥ पाणि स्वाणिस्तोरेवाऽस्वित्सहाम् । ५ । ४५ । पाणि पत्वभूते सनि परतः स्वादिण्णतात् परेषां ष्य॰ सानां स्विदिस्वदिसहवर्जितानां स्तौतेरेव सकारस्य पत्वं भवति । इति नियमादपत्वं । प्रसुसूषे । निनत्सामि । निनत्से ।

८९५ ॥ सुवः सन्स्ये । ५ । ४ । ९७ । सुनोतेः सनि स्ये च परे पत्वं न भवति । सुसूषामि । सुसूषे ।

८९६ ॥ स्मिङ्पूङ्ऋञ्ज्वशः सनि । ६ । १ । १४८ । स्मिङ् पूङ् ऋ अञ्ज् अश् इत्येतेभ्यः इट् भवति सनि परे । अशि॰ शिषे । निसिस्मिषामि । निशिश्विषामि । निशिश्विषे । निशिश्विषे । "हलि" इति "किद्वद्भावादेप् न भवति । तुतुत्सामि । तुतुत्से । "इ॰ न्यर्चां सनि" इति दीः । "ऋतामिद्वोः" इति वर्तमाने-

८९७ ॥ पुवादुत् । ५ । १ । ८५ । पवर्गाद् वकाराञ्च धोरवयवात् परस्य ऋकारस्य उकारादेशो भवति । रत्वञ्च । "दीर्वो॰ रिगुरु" इति दीः । मुमूर्षे । मुमुक्षामि । मुमुक्षे । कर्मकर्तरि—

८६८ ॥ वौन्मुचो घेः । ५ । १ । १७८ । घिसंज्ञकस्य मुचेरचः ओकारादेशो भवति वा सनि सकारादौ परतश्चस्योप्। भूपेत्यादिना न यक् । मोक्षत । मुमुक्षते वासः स्वयमेव। रुरुत्सामि। रुरुत्से । बुभुक्षे । युयुक्षामि । युयुक्षे । सनीवंतेत्यादिना वेद् । तितनिषामि । इडभावे—

८६९ ॥ तनो वा । ४ । ४ । १४ । तनोतेर्झलादौ सनि परतो वा दीर्भवति । तितांसामि । तितंसामि । तितनिषे । तितांसे । तितंसे । मिमनिषे । हन्यचा सनीति दीः ।

८७० ॥ ऋतामिद्धोः । ५ । १ । ८३ । ऋकारान्तस्य गोर्धोरिकारादेशो भवति । रतस्त्वं । दीत्व । चिकीर्षामि । चिकीर्षे । चिक्रीषामि । चिक्रीषे । वृतो वा लिमसाविति वर्तमाने—

८७१ ॥ सनीट् । ५ । १ । ९७ । वृतः सनि परतो भोर्वेट् भवति । इडभावे-पुवादुद्" इत्युत्वादि । विवरिषे । विवरीषे । वुवूर्षे । सनि ग्रहगुहश्चेति वेट् ।

८७२ ॥ रुद्विद्मुषग्रहस्वपप्रच्छां सनि च । १ । १ । ९७ । रुद् विद् मुष् ग्रह् स्वप् प्रच्छ इत्येतेषां सनि क्त्वान्ते च परे किद्वद् भवति । किद्वद्भावाद्—वशिस्यधि—इत्यादिना यण इक् । ढलकत्वे भष्भावादि । जिघृक्षामि । जिघृक्षे । चुचोरयिषामि । चिच्छादयिषामि । लिलक्षयिषामि । लिलक्षयिषे । युयोजयिषामि । युयुक्षामि । अर्चिचयिषामि । अर्चिचिषे । विवारयिषामि । विवरीषामि । वुवूर्षामीत्यादि । सर्वं पूर्ववत् । कर्तरि नवटकारेषु भावे कर्मणि कर्मकर्तरि च यथासंभवमभ्यूह्य । इति सन्नतः ।

मृशमभीक्ष्णं वा भवतीति विगृहे—

८७३ ॥ घोर्यङ् भृशेऽभीक्ष्णेऽशुभरुचेः । २ । १ । १२ ।
शुभिरुचिवर्जितादोः भृशेऽभीक्ष्णे चार्थे वर्तमानात् यङ्प्रत्ययो भवति । ङकारो ङित्कार्यार्थः । सन्यङोरिति द्वित्वं । भूयभूय इति स्थिते— ह्रस्वोऽनादेरित्यादि स्वकार्यं ।

८७४ ॥ यङ्लुपोरेप्यधक्किदाद्धाक्तः । ५ । २ । २०३ ।
यदि यङ्लुपि च चस्याकित आकारांतहाक्वर्जितस्य एप् भवति दीर्घं च । इति इक एवन्यत्र दीः । बोभूय् इत्यतः पूर्ववल्लडादयः । "केदितो द." इति दः । एत्वं । बोभूये । बोभूयावहे । इत्यादि । कौ-यक्लि-

८७५ ॥ अतः । ४ । ४ । ५६ । गोरकारान्तस्य अतः खं भवत्यगे परतः । बोभूय्यते देवदत्तेन । कर्मणि कर्मकर्तरि च— अनुबोभूय्ये, अनुबोभूय्ये स्वयमेव । लङि-अबोभूये । कौ—अबोभूय्यत । अन्वबोभूय्ये । लिङि—बोभूयेय । कौ—बोभूय्येत । अनुबोभूय्येय । लोटि-बोभूयै । कौ—बोभूय्यतां, अनुबोभूय्यै । लिङाशिषि—बोभूयिषीय । कौ—बोभूयिषीष्ट देवदत्तेन । अनुबोभूयिषीय । लिटि—बोभूयांचक्रे । बोभूयांबभूव । बोभूयामास । कौ—बोभूयांबभूवे । अनुबोभूयांबभूवे । बोभूयामासे । "कृभ्वस्तिन्, इत्यस्तिग्रहणसामर्थ्यात् "अस्तेर्वचभू" इति अस्तेर्भूभावो न भवति । लुङि-अबोभूयिषि । कौ-अबोभूयि देवेन । अन्वबोभूयि । अन्वबोभूयिष्ट वा । अन्वबोभूयिषातां । लुटि-बोभूयिताहे । कौ— बोभूयिता देवेन । अनुबोभूयिताहे । लृटि—बोभूयिष्ये । कौ— बोभूयिष्यते देवेन । अनुबोभूयिष्ये । लृङि—अबोभूयिष्ये । कौ—अबोभूयिष्यत देवेन । अन्वबोभूयिष्ये ।

८७६ ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोः । २ । १ । ३१ ।

सूचि सूत्रि मूत्रिभ्य एव हलादनेकाच्भ्योऽद्‌व्यर्थ्यूर्णुभ्य एव चाजादिभ्यो भृशाभीक्ष्ण्ये यङ् भवति नान्येभ्यः । इति नियमादेव 'एध वृद्धौ, इत्यस्य यङ् नास्ति । तथा–पापच्ये । डौ यकि–अतः खे च–

८७७ ॥ हलो यः । ४ । ४ । ५४ । हलन्ताद् गोः परस्य यकारस्य ख भवति अगे परत. । पापच्यते देवेन । कर्तरि भावे कर्मणि च कर्मकर्तरि च समान । अपापच्यत । पापच्येत । पापच्यता । पापचाचक्रे । पापचिषीष्ट । अपापचिष्ट । पापचिता । पापचिष्यते । अपापचिष्यत । इत्यादि । अपापचि देवेन । नानद्यते । यङुपोरिति वर्तमाने–

८७८ ॥ नीग् वंचुस्रंसुध्वंसुभ्रंसुकसपतपदस्कंदां । ५ । २ । १०४ । वचुप्रभृतीना यङुवताना चस्य नीगागमो भवति । दनीध्वस्यते । "लिटीग्यणः साचोऽर्य्याज्य" वशो याके" इति च वर्तमाने–

८७९ ॥ स्वस्र्यमूव्यः । ४ । ३ । २९ । स्वस् स्यम् व्या इत्येतेषा यकि साचोऽर्य्यपरस्य यण इग् भवति । वेवीयते । "दीर्घ्यकृद्ग" इति दीः । जोहूयते ।

८८० ॥ गत्यर्थात् कुटिले । २ । १ । ॥ । गत्यर्थात् कुटिले वर्तमानात यङ् भवति । जाहायते । भूमेत्यादिनैव । अभिदिधीयते । तन्नियमाददेर्यङ् नास्ति । यि कृत्स्ययङ्,, शाशय्यते । वावच्यते । देदीव्यते । डौ देदीव्यते देवेन । लिङ्वत् कृन्यामिति दीत्वस्य पूर्वत्रासिद्धत्वादेप् प्राप्तः । "परेऽच प्राच" इत्यत्वस्य स्यानिवद्भावान्नास्ति । देदिवाचक्रे । सोपूयते । नानह्यते । सोपूयते । अशाश्यते । चेचीयते । तोतुयते । अतोतुयत । तोतुयेत । तातु-

यतां । तोतुदिषीष्ट । तोतुदाचक्रे । अतोतुदिष्ट । अतोतुदि । तोतुदिता । तोतुदिष्यते । अतोतुदिष्यत । "रीङ् ऋतः" इति रीङादेशः । मेम्रीयते । मोमुच्यते । रोरुध्यते । बोभुज्यते । योयुज्यते ॥

८८१ ॥ रुग्यातो नुक् । ५ । १ । २०५ । रुसञ्ज्ञकान्तस्य गोर्यङ्लुपोर्यश्चास्तस्याकारांतस्य नुगागमो भवति । तस्यानुस्वारादिः । तंतन्यते । ममन्यते । चक्रीयते । चेक्रीयते । वेव्रीयते । वशित्यादिना यण इक् । यङ्गुपोरिति वर्तमाने—

८८२ ॥ रीगृत्वतः । ५ । २ । १०९ । ऋकारवतो गोर्यङि चस्य रीगागमो भवति । जरीगृह्यते । इत्यादि । सर्वं पूर्ववन्मय ॥ इति यङन्ताः । किं च—

८८३ ॥ यङो उप् । १ । ४ । १४४ । यङो बहुलमुप् भवति । उपे स्वाश्रयन्यायेन द्वित्वादि । ततो लडादिः । चर्करीत चेत्यदादिषु मवन्तु पाठात् यङ्गुबन्तस्यादादित्वं । तेन शप उप् नविधिश्च ।

तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाच्ग्रहणं किंचित् पंचैतानि न यङ्लुपि ॥१॥

इति यङो ङित्वाद् स्थानिवद्भावेन दो न भवति । यस्य गे पित्याचि हल्युप्योरो" इति वर्तमाने—" भुव ईद् " इत्यनुवर्त्य—

८८४ ॥ यङ्तुरुस्तोर्वहुलं । ५ । २ । १७२ । यङ्लुबंतात्तु रु स्तु इत्येतेभ्यश्च परस्य हलादेः पितो गस्य बहुलं ईडागमो भवति । पित्स्वेव् न ङित्सु । ह्रस्व यादित्वत् । बोभवीमि । बोभोमि । बोभूवः । बोभूमः । बोभवीपि । बोभोषि । बोभूथः । बोभूथ । बोभवीति । बोभोति । बोभूतः । बोभवति । थविस्सेरिति [illegible] जुस् । अबोभव । अबोभूव । अबोभूम । अबोभवीः ।

अबोभूत । अबोभूत । अबोभवीत् । अबोभोत् । अबोभूता । अबोभवु । बोभूया । बोभूयाव । बोभूयाम । इत्यादि । सेर्हेरादेशो ङिदिसेवाद् नास्ति । बोभवानि । बोभवाव । बोभवाम । बोभूहि । बोभूतात् वा । बोभूत । बोभूत । बोभवीतु । बोभोतु, बोभूतात् वा । बोभूता । बोभवतु । बोभूयते देवन । इत्यादि । बोभूयात् । बोभूयास्ता । बोभूयांचकार । अबोभवीत् । अबोभवीष्टा । अबोभवीषु । प्रकृतिग्रहणे यङ्लुबन्तस्यापि ग्रहणमिति क्वचिदेव न सर्वत्र । तेन-सुभू इत्यादिना सेरुव् नास्ति । तथा च कश्चित्-

लुङ्लिद्प्रातिपदोक्तानि सानुबन्धकृतानि च ।
यङ्लुबन्तस्य नेष्टानि सख्यागणकृतानि च ॥ २ ॥

इत्याह । परे पुनरत्राप्युपमिच्छति । अबोभोत् । अबोभूता । अबोभवुरित्यादि । बोभविता । बोभवितारौ । बोभवितार । बोभविष्यति । अबोभविष्यत् । शीटादि च-बोभाविषीष्ट । बोभविषीष्ट । बोभवाचक्र । अबोभावि । इत्यादि । पापचामि । पापच्मि । पापच्व । पापच्म । पापचीषि । पापक्षि । पापक्थ । पापक्थ । पापचीति । पापक्ति । पापक्त । पापचति । नानदीति । नानत्ति । दनीध्वसीति, दनीध्वस्ति वा । यायाति । वाव्याति । जोहवीति । जोहोति । जोहूत । जाहाति । जाहाति । जाहीत । दाधेति । दाधाति । धात्त ।

८८५ ॥ यस्य गे पिल्यचि । ५ । २ । ९५ । यसङ्कास्य गोर्गेरुरु एप्न भवति पिलजादौ ग परत । देदिवीति अनिङ्पक्षे ध्युङ ,, इत्येपि "व्यो ख वल्कौ" इति वखे न सति देदेति । "इस्य शल्कच्यो कृकिति" इत्येदनुवर्त्य-छ्रू शूठ् खे चेति झलि कौ च केचिदूठमिच्छति । तेनोठि यण्यपि च कृते-दयाति । देयूत । देदिवति । देदिवाचकार । सोपवीति । सोपाति । नानहीति ।

नानद्धि । सोपयीति । सोपोति । अशाशीति । अशाष्टि । चेचयीति । चेचेति । तोतुदीति । तोतोत्ति । रीगृत्वतामिति वर्तमाने–

८८६ ॥ रुग्रिकौ चोपि । ५ । २ । २१० । ऋत्वतो गोर्यङ्लुपि चस्य रुग् रिक् चागमो भवति । मर्मरीति । मरिमरीति । मरीमरीति । मर्मर्ति । मरीमर्ति । मरिमर्ति । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्ति । चरीकर्ति । जर्गृहीति । जर्गर्ढि । इत्यादि नेष । वृतुङ् वृत्तौ । वर्वृतीति । वर्वर्ति । इत्यादि । गृधु अभिकाङ्क्षायां । जर्गृधीति । जर्गर्द्धि । इत्यादि । ह्यस्तनि–अजर्गृद्ध । ईड्भावे–"घुडः,, एप् । सिपः ग्र । मप्भावः । ततो धकारस्य जत्त्व । "सिपि रिर्वा" इत्यधिकृत्य–"दः,, इति विकल्पेन रिः । रो रीति पूर्वस्य रत्व । दिर्खड्डंणः " इति दीः । अजर्घाः । अजर्गृद्ध । अजर्गृद्ध । अजर्गृधीत् ॥ अजर्घार्त् । अजर्गृद्धा । अजर्गृधुः । इत्यादि समप्रपञ्चप्रयोगतद् प्रयोज्यं ॥ इति यङ्लुवताः ॥

भवति कश्चित् त भवतं भ्रात्रितस्य भवन वा प्रयोजयतीति विगृहे–णिजिति धति च प्रस्तुत्य–

८८७ ॥ हेतुमति । ४ । १ । ३९ । हेतुमति ण्यर्थे धोर्वा णिच् भवति । णकार ऐदर्थः । चकारो णाविति सामान्यग्रहणानिपातार्थः । ऐवायादेशौ । धुसड्ड । च । ततः पूर्ववल्लडादयः । भावयामि । भावयावः । भाव यामः । इत्यादि ।

८८८ ॥ णिचः । १ । २ । ८६ । णिजताद्धोः फलेशे कर्तरि टस्य दे भवति । भावये । भावयावहे । भावयामहे । इत्यादि । औ–यादि णेः खं । भाव्यते । अभाव्यत । भाव्यत । भाव्यतां । कर्मकर्तरि–दधिणिश्रिग्रथिवचूस्रोथ श्रिधेति णिजतद्रा

त्रियकौ न भवतः। तत. शबादयः। भावयते स्वयमेव। इत्यादि। अभावयत। भावयेत। भावयता। कौ—अभाव्यत देवेन। अन्वभाव्यत। अभावयत्। भावयेत्। भावयीत। कौ-भाव्येत। देवेन। कर्मकर्तरि यक् नास्ति शबेव। भावये स्वयमेव। भावयतु। भावयताम् वा। भावयतां। कौ—भाव्यतां। कर्मकर्तरि—भावयतां। भाव्यात्। भावयिषीष्ट। कौ-भविषीष्ट। भावयिषीष्ट देवेन। भावयाचकार। भावयावभूव। भावयामास। भावयाचक्रे। भावयाबभूवे। भावयामाहे। एति इः,, इति इकार। णिश्रिद्रुस्रोः कर्तरि चजिति कच्। भावि अ अम् इति स्थिते—लिङ्चुकाचे धोरिति द्वित्व ततो यणादेशस्तदपवाद पुनरियादेशः णे ख च प्राप्त। परत्वात् णेरिति णेः ख। "णौ कच्युक्त ओऽशास्वकल्वृदित" इत्युक् प्रादेश। "स्थानीवानल्विधौ" परेऽच. प्राच.,, इति च प्रस्तुत्य—

८८९ ॥ द्वित्वेऽचि। १। १। ६८। द्वित्वनिमित्तेऽचि अजादेशो द्वित्वे कर्तव्ये स्थानिवद् भवति। इति स्थानिरूप। एतश्च-

८९० ॥ ओ. पुयण्ज्ये। ५। १। २१०। सनि परे द्विर्भावे चस्य उवर्णस्य पवर्गे यणि जकारे अकारे परे इकारादेशो भवति। इति इकारः। इति चस्योवर्णस्येत्वशासनाज्ज्ञायते। तेन भू इ अ अम् इति स्थिते पश्चाद्वित्व चकार्य। पूर्ववत् णिखेवावादेशप्रादेशा। "णौ कच्यनक्ले सन्वद्" इति सन्वद्भाव। "ओः पुयण्ज्ये" इति चस्येत्व। घेर्दीरनजादेरिति दीत्व। अबीभव। अबीभवे। इत्यादुक्तेय॥ एधयामि। लुङि—ऐदिध। पाचयामि। अपीपच। कौ—अभावि देवेन। अभाविष्ट। अभावयिषि। बीटि णिख। अबीभव। लुटि—भावयितास्मि। भावयिताहे। कौ-भाविता देवेन। भाविताहे। भावयिताहे। भावयिष्यते। कौ-भविष्यते। भावयिष्यते।

यामि । अयूयुज । अर्चयामि । आर्चिच । वारयामि । अवीवरामित्यादि योज्य ॥ घटादीना तु विशेष । गोहेरुदुङ, इति "दोषो णाविति चाधिकृत्य ।

८९५॥ घटादिकगेवनुजनीजॄष्णसक्नसरञ्ज्यमोऽपर्यपस्खदकमुचम्यमः प्रोऽमुञ्योस्तु दीर्घो । ४ । ४ । ९० । परि अप पूर्वस्खदिवर्जिताना घटादीना कगे वनु जनी जॄष् ष्णस् क्नस् राजि इत्येतेषा क्रमिचमिअमिवर्जितानाममताना च गुणामुक प्रो भवति णौ परत: अम्जि परे तु णौ दीर्घो भवति । घटै चेष्टाया । घटयामि । अघटि । अघाटि । व्यथैष् चलभीत्या । व्यथयामि । अव्यथि । अव्याथि । कगे इति सौत्रा धातु । कगयति । अकगि । अकागि । वनुङ् याचने । वनयति । अवनि । अवानि । जनीङ् प्रादुर्भावे । जनयति । अजनि । अजानि । जॄष् वयोहानौ । जरयति । अजरि । अजारि । ष्णस् नीरसने । स्नसयति । अस्नसि । अस्नासि । क्नस् हारणदीप्त्या । क्नसयति । अक्नसि । अक्नासि । रञ्जौञ् रागे ॥ दृढक, इति श्नात्खमिति रजेरिति चाधिकृत्य—

८९६ ॥ णौ मृगरमणे । ४ । ४ । २७। रजेरुङो नकारस्य ख भवति णौ परतो मृगाणा क्रीडायामर्थे । रजयति मृगान् व्याध । अरजि । अराजि । गम्लृ गतौ । गमयति । अगमि । अगामि । शमु दमु उपशमने । दमयति । अदमि । अदामि । अपर्यपस्खदादेरिति कि । स्खदैष् खनने । परिस्खादयति । अपस्खादयति । पर्यस्खादि । अपास्खादि । कमङ् कान्तौ । कमूर्तेर्णिङीयाविति णिङ् । कामयते । चमु अदने । आचामयति । अमु रोगे । आमयति ।

८९७ ॥ शमोऽदर्शे । ४ । ४ । ८१ । शमोऽदर्शेऽर्थे वर्तमानस्योक शस्य प्रो भवति णौ परत. अम्जि परे तु वा दीर्भवति ।

बुभूषयिषीय । बुभूषयाञ्चकार । कौ—बुभूषयाञ्चक्रे । बुभूषया बभूवे । "णिकमश्रिद्रुस्रो कर्तरि काजिति कचि द्वित्व । बुभूषि अ अमिति स्थिते—"चस्यैके" इति चस्य बु बु इति द्वित्व । हलोऽनादेरिति उत्वादि । अबुबुभूषम् । "चस्यैके" इति चस्य द्वित्वाभावे अबुभूष । अबुबुभूषे ।। कौ—अबुभूषि । अबुभूषिषि । अबुभूषयिषि । कर्मकर्तरि जिट् नास्ति । बुभूषयितास्मि । बुभूषयिताहे । का—बुभूषिताहे । बुभूषयिताहे । बुभूषयिष्यामि । बुभूषयिष्ये । कौ—बुभूषिष्ये । बुभूषयिष्ये । अबुभूषयिष्यं । अबुभूषयिष्य । कौ—अबुभूषिष्ये । अबुभूषयिष्ये ॥ इत्यादि ॥ बोभूयते काश्चित्तमन्य प्रयुङ्क्ते तस्मिन् यङतात् णिचि धुत्वे लडादय । बोभूययामि । बोभूयये । अबोभूयय । अबोभूयये । बोभूययेय । बोभूययय । बोभूययानि । बोभूययै ॥ इत्यादि सनतणिजतेन तुल्य ॥ बोभवीति कश्चित्तमन्य. प्रयुङ्क्ते इति यङ्लुपताण्णिचि—बोभवयामि । बोभवये । इत्यादि । अबोभवय । अबोभवये । बोभवयेय । बोभवयेय । बोभवयानि । बोभवयै । इत्यादि ॥ भावयति कश्चिचमन्यः प्रयुङ्क्ते इति णिजतात् णिचि—प्रास्य ण ख । भावयामि । भावये । इत्यादि । अबीभवं । अबीभवे । एधयामि । ऐदिध । पाचयामि । अपीपच । इत्यादि । सनतात् सन्नास्ति । "न सन" इति निषधात् । बोभूयितुमिच्छतीति यङतात्सनि वलादेरिडिताटि अतः खे द्वित्वे च सति "प्राग्वत् सनः" इति दः । बुबोभूयिषे । द्वित्वाभावे—बोभूयिषे । कौ—बोभूयिष्यते । अबुबोभूयिष्य । अबोभूयिषे । कौ—अबोभूयिष्यत । अबुबोभूयिष्ये । बोभूयिषेय । कौ—बोभूयिष्येत । अबुबोभूयिष्येय । बोभूयिषै । कौ—बोभूयिष्यता । अबुबोभूयिष्ये ॥ इत्यादि पूर्ववदुनेयं ॥ बोभवितुमिच्छतीति यङ्लुपतात् सनि—बुबो-

प्रकृतेस्सन्यङ्गुर्णिच् णिच् सन्नादेर्यङादितः ।
सन्यङ्ण्यादेस्सन्यङ्सन्नादेर्णिज्यङ्णिचुसन्नादेश्चतस्रोऽपि ॥

## अथ कण्ड्वादयः ।

कण्डूञ् गात्रघर्षणे ।

९०० ॥ कण्ड्वादेर्यक् । २ । १ । ४० । कंडूञ् इत्येवमादिभ्यो धुभ्यो यगित्ययं स्यो भवति । ककारः कित्कार्यार्थः । पुनर्धुसंज्ञायां—पूर्ववल्लडादयः । कण्डूयति । कंडूयते । अकंडूयत् । अकडूयत । कण्डूयेत् । कंडूयेत । कडूयतु । कडूयतां । कडूय्यात् । कण्डूयिषीष्ट । कंडूयांचकार । कडूयाचक्रे । अकडूयीत । अकडूयिष्ट । कडूयिता । कंडूयिष्यति । कंडूयिष्यते । अकडूयिष्यत् । अकडूयिष्यत । सनि—सन्यङोरित्यादेरेकाचो द्वित्वं भवत्येकेषां मतं । चिकण्डूयिषामि । इत्यादि । यकस्तृतीयस्येत्यत्र "अचः" इति "एके" इति च विभागापेक्षयानुवर्तमाने—तेनादेरनादेश्चाचस्तृतीयस्यैकाचो द्वे भवतः" इत्यपरे । तेषां कण्डूयियिषामि । इत्यादि । यगंतस्य यङ्यङ्लुपौ न संभवतः । णिचि—कडूययति । कण्डूययते । अकंडूययत् । अकडूययत । कण्डूययेत् । कडूययेत । कण्डूययतु । कण्डूययतां । कण्डूय्यात् । कण्डूययिषीष्ट । कण्डूययाचकार । कण्डूययांचक्रे । लुङि—अचकण्डूयत ॥ यकस्तृतीयस्येत्यत्र "अचः" इत्यनुवर्तते इत्यस्मिन् दर्शने द्वित्वादिर्नास्ति "अचः" इत्यस्याभावात्—अकंडूयत । "अचः,, इति नानुवर्तते इत्यत्र तु–य य इति द्वित्वं । अकडूययत । कण्डूययिता । कण्डूययिष्यति । कण्डूययिष्यते । अकडूययिष्यत् । अकंडूययिष्यत । एवं–मतु–रोषप्रीणनयोः । मंतूये इत्यादि । वल्गु माधुर्ये । वल्गयामि । इत्यादि । असू परगुणासहने । असूयामि । इत्यादी ।

सनि—असूयियिषामि । इत्यादि । असूययामि । इत्यादि । आसूययत । हृणीञ् रूषणलज्जयोः । हृणीयते । इत्यादि । सुखदुःखे तत्करणे "अतः" इत्यल् । सुख्यामि । इत्यादि । सनि—हलो य" इति यल । सुखियामि । इत्यादि । णिचि—सुख्यायामि । इत्यादि । "वा क्य" इति सूत्रे क्यचक्रीयेति केचित् पठन्ति । तेषां सुखयामीत्यादि ॥

॰ इति कण्ड्वादयः ।

प्रकृतेः सुव्रतप्रकृतिकाः ।

आत्मनः पुत्रमिच्छतीति विग्रहे—

९०१ ॥ सुपः आत्मनः क्यच् । ३ । १ । ८ । इत्यादि आत्मनः सम्बन्धि यदिष्यमाणं तस्मादिच्छायामर्थे क्यच् प्रत्ययो भवति वा । "सदता धत्र" इति धातुसंज्ञा—सुपो धातुप्रातिपदिकयोरिति सुप् लुप् । ततः पूर्ववल्लडादयः । पुत्रीयति । एवं—वस्त्रकाम्यति । कन्याकाम्यति । कनिकाम्यति । राजकाम्यति । इदकाम्यति । स्व काम्यति । अंतर्वर्तिना सुपमाश्रित्य पदसंज्ञायां पदकार्ये नलोपादि । अपुत्रकाम्यत् । पुत्रकाम्येत् । पुत्रकाम्यतु । पुत्रकाम्यात् । पुत्रकाम्यात् । इति हलो य यस्येति लुप्तमिति पक्षे यस्य । पुत्रकाम्यांचकार । अपुत्रकाम्यीत ।

९०२ ॥ हलो यः । ४ । ४ । ६४ । हलन्ताद्धोः परस्य यकारस्य लं । इतीह न भवति । पुत्रकाम्यिता । पुत्रकाम्यिष्यति । अपुत्रकाम्यिष्यत् । इत्यादि । सनि—

९०३ ॥ सुपः । ६ । ३ । १ । सुवन्तावयवस्य धोर्यस्य कस्यचिद् एकाचा द्वे रूपे भवतः । इति द्वित्वं पाचरूप्य । पुपुत्रकाम्यिषति । पुतित्रकाम्यिषति । पुत्रत्रिकाम्यिषति । पुत्रकामिम्यिषति । पुत्रकाम्यियिषति । एव—वस्त्रकाम्यतीत्यादिषु नेय । यलस्य नास्ति । णिचि पुत्रकाम्ययति । द्वि—चचि द्वित्वे चातुरूप्यं । अपुपुत्रकाम्यत् ।

अपुतत्रकाम्यत् । अपुत्रचकाम्यत् । अपुत्रकामम्यत । णावतो नाशादनक्त इति निषेधात् सन्वद्भावो न भवति । तथा—पुत्रमिच्छत्यात्मन इति विग्रहे—

९०४ ॥ क्यजीप्सः । २ । १ । ८ । स्वस्य सबधिन इबन्तादिच्छायामर्थे क्यज्वा स्यात् सा चेदिप्सिसज्ञकान्मकारान्ताच न भवति। ककार "न· क्ये,, इति विशेषणार्थः । चकार सामान्यग्रहणाविघातार्थ । "ई घ्राध्मो" "अस्य च्वौ इति चानुवर्तमाने—

९०५ ॥ क्याचि । ५ । २ । १५६ । गोरवर्णान्तस्य ईकारो भवति क्याचि परतः । पुत्रीय इति स्थिते-पूर्ववल्लडादयः । पुत्रीयति । कन्यीयति ।

९०६ ॥ न क्ये । १ । २ ।११७। नकारान्तस्य शब्दस्य क्ये परत पदसज्ञा भवति । क्य इति क्यङ् क्यच् क्यपिस्तेषां निर्देषकाननुबधानपास्य सामान्येन ग्रहण । पदत्व नख । तत ईत्व । राज्ञीयति । शर्म्मीयति । "क्षीरव्यक्रुट्ग" इति दात्व । कनायति । दिवायति । तरुणीयति । दतिनायति । पुत्रिणीयति । इक्षूयति । वधूयति । "रीङ् ऋत " इति रीङ्—पित्रीयति । "एचोऽयवायाव्" इति वर्तमाने—

९०७ ॥ वि स्ये । ४ । ३ । ७६ । वन्तान्ताो य आदेशः स यथास्थाने भवति यकारादौ से परत । गव्यति । नाव्यति । वाय्यति । ध्यपति । सरिव्यति । एतयति । युष्मयति । अस्मयति । "त्यमी त्ययौ चैके" इति त्यमौ । त्वयति । मयति । "दीर्घोऽयुजः" इति वर्तत—

९०८ ॥ वा क्यः । ४ । ४ । ५५ । गोर्दन्तान् परस्य क्यचूरुदीर्यकारस्य ख वा भवत्यन परत । अवाचान्, अवार्प्याम् ।

इत्यादि । सनि—द्वित्वे—चातुरूप्यं । पुपुत्रीयषति । पुतित्रीयषति । पुत्रीयियिषति । पुत्रीयिषिषति । णिचि–पुत्राययति । लुङि–चाचि–त्रैरूप्य । अपुपुत्रीयत् । अपुतित्रीयत् । अपुत्रीययन् ।

९०९ ॥ अचः । ४ । ३ । ३ । धोः मुग्घोध परस्यादेरनादेश्च एकाचो द्वे रूप भवतः । अशिश्वीयिषति । अर्श्वीयियिषति । अर्श्वीयिषिषति । इत्यादि नेय ॥ प्रासाद इवाचरतीति विग्रहे—

९१० ॥ गौणादीपश्वाचारे । २ । १ । ९ । गौणादीवतादिवताद्यात्मिन आचारेऽर्थे वा क्यप् भवति । पूर्ववल्लुडादयः । प्रासादीयति कुट्यां । पर्यङ्कीयति मचके । अर्श्वीयति वृषभे । इत्यादि । पुत्रमिवाचरतीति पुत्रीयति; छात्रमाचार्यः । तल्पीयति किसलय । राजीयति संन्यासिमित्यादि । अथ इवाचरतीति विग्रहे—

९११ ॥ कर्तुः क्विः । २ । १ । १० । गौणादाचरणक्रियायाः कर्तुराचारेऽर्थे क्विर्भवति वा । स च सर्वोऽप्रयोगात् । पूर्ववदुक्ते मुगुप् । ततो लडादयः । अश्वति गर्दभः । गर्दभन्यश्वः । हसति यरुः । इत्यादि । गल्भ इवाचरतीति विग्रहे—

९१२ ॥ गल्भक्लीवहोडाद्डित् । २ । १ । ११ । गल्भादिभ्यो गणेभ्यः कर्तृभ्य आचारेऽर्थे क्विर्डित् भवति । डित्वात् । गल्भते । क्लीवते । होडते । इत्यादि । श्येनायते काकः । अश्वायते गर्दभः । एनीमाचरति एतायते । श्येनीव–श्येतायते । रोहिणीव रोहितायते । श्येन इवाचरतीति विग्रहे—

९१३ ॥ क्यङ् च । २ । १ । १२ । गौणादाचारक्रियायाः कर्तुराचारेऽर्थे क्यङ् भवति । ककारः " नः क्ये,, इति विशेषणार्थः । ङकारो दार्थः । पूर्ववदीनादि । श्येनायते काकः । अश्वायते गर्दभः । एनीमाचरति एतायते । श्येनीव–श्येतायते । रोहिणीव–

रोहितायते । कुमारीव-कुमारायते वृद्धा । तरुणीव-तरुणायते जीर्णा । तपते । यवते । लयते । मयते । इत्यादि ।

९१४ ॥ सः खं वा । २ । १ ।१३ । गौणादाचारार्थे क्यङ् भवति । सकारस्याते वर्तमानस्य ख वा भवति । पयायते, पयस्यते ।

९१५ ॥ अप्सरस- । २ । १ । १४ । अप्सरसः क्यङ्, सन्निधाने सकारस्य नित्य खं भवति । अप्सरायते ।

९१६ ॥ भृशादेश्च्वौ स्तः । २ । १ । १६ । भृशादेः कर्त्तु च्व्यर्थे वर्तमानात् क्यङ् भवति । तत्सन्नियोगे सकारतकारांतस्य ख भवति । अभृशो भृशो भवति भृशायते । शीघ्रायते । उन्मनस्-उन्मनायते । वेहत्-वेहायते । इत्यादि । पटदित्यतो " द्विरचानेकाचाऽव्यक्तानुकरणाडाच्,, इति डाच् । " य्रो डाचि,, इति तकारस्य पररूप ।

९१७ ॥ डाच्लोहितादिभ्यः क्यप् । २ । १ । १७ । डाजंतेभ्यो लोहितादिभ्यश्च कर्तृवाचिभ्य च्व्यर्थे क्यप् वा भवति ।

९१८ ॥ क्यपो वा । १ । २ । १०० । क्यपताद् म वा भवति । पटपटायति । पटपटायते । सिमसिमायते । सिमसिमायति । अलोहितो लोहितो भवति लोहितायति, लोहितायते । अचर्म चर्मवान् वा भवति-चर्मायति, चर्मायते इत्यादि । सुख भुंक्ते इति विगृह्य-

९१९ ॥ सुखादेर्भुजीप । २ । १ । १८ । सुखादेरिवतात् भुज्यर्थे क्यङ् भवति । क्यप् प्रकृत क्यङ न बाधते । सुखायते । दु खायते । कष्ट चिकीर्षति इति विग्रहे—

९२० ॥ कष्टकक्षकृच्छ्रसत्रगहनात् पापे चिकीर्षा । २ । १ । २० । कष्टादे पापेऽर्थे वर्तमानादीप्सतात् चिकीर्षत्यर्थे

क्यङ् भवति । कष्टायते । कक्षायते । पापं कर्तुमिच्छतीत्यर्थः । शब्दं करोतीति विग्रहे—

९२१ ॥ शब्दादेः कृञि । २ । १ । २१ । शब्दादेरितान् कृञ्यर्थे क्यङ् भवति । शब्दायते । वैरायते । हस्तं निरस्यतीति विग्रहे—

९२२ ॥ निरस्यंगेभ्यो णिङ् । २ । १ । २९ । अंगेभ्यः शरीरावयववाचिभ्यः इवतेभ्यो निरासे क्रियाया णिङ् भवति । णिचोऽपवादः । हस्तयते । पादयते । सूत्रं करोतीति विग्रहे—

९२३ ॥ मृदो घ्वर्थे णिच् बहुलं । २ । १ । २८ । मृदो धूनार्थे णिच् भवति बहुलं । णकारो "णौ„ इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थः । सुबुप् । "णाविष्टवत्मृदः„ इत्यतिदेशात्–तुरिष्ठेमेयस्सु टेः„ इति टिख । ततो लडादयः । सूत्रयति व्याकरणं । मदयति माणवकं । मिश्रीयत्योदनं । स्पच्छाति वस्त्रं । लवणयति सूपं । ञनयति पयः । कृतं गृह्णाति—कृतयति । तूस्तानि विहति वितूस्तयति । केशान् विजूटीकरोतीत्यर्थः । पाश विमोचयति विपाशयति । रूपं दर्शयति रूपयति । लोमान्यनुमार्ष्टि-अनुलोमयति । अन्वलुलोमत् । पटुमाचष्टे—पटयति । अपटीपत् । वृक्षमाचष्टे—वृक्षयति । अववृक्षत् । मूलमाचष्टे—मूलयति । अमुमूलत् । वहींञ् प्रापणे "तः„ इति क्तः । "स्वब्वचूयादेः„ इति सायो यण इक् । "हो ढः„ इति ढत्व । "अध„ इति तकारस्य धकारः । पुनः " ढो ढि " इति ढख । " ढ्रिंखेऽणः " इति दीर्घं । ऊढमाचचक्षे णिचि टिख । ऊढयति । लुङि कचि—द्वित्वं प्रति ढत्वादेरसिद्धत्वात् ' अचः„ इति ढि ढि द्वित्वं । चकार्यं च । पिरउ । " द्वित्वेऽचि„ इति स्थानिवद्भावात् तणद्वित्वं । औजिढत् ।

तृणान्युद्धृत्य शातयति—उत्तृणयति। वस्त्रेण समाच्छादयति—संवस्त्रयति। वीणया उपगायति—उपवीणयति। तूलैरनुकुष्णाति-अनुतूलयति। श्लोकैरुपस्तौति—उपश्लोकयति। सेनयाभियाति-अभिषेणयति। वर्मणा सनह्यति—सवर्मयति। चूर्णैरवकिरति अवस्रसयति वा—अवचूर्णयति। पाशाच्छिनत्ति-पाशयति। अश्वेनातिक्रामति-अत्यश्वयति। अतिहस्तयति। बहुलवचनात् इह न भवति। आख्यानमाचष्टे। इत्यादि सर्वत्र लकारेषु योज्यं॥

इति सुबन्तप्रकृतिकाः।

अथ शत्रादयः कर्तृकर्मभावेषु कर्मकर्तरि च उदाह्रियन्ते "लटो वानितौ,, शतृशानौ,, इति वर्तमाने—

९२४॥ सल्लुटः। २। ४। १३। सति काले यो लट् तस्य शतृशानौ वा भवतोऽनितो परतः। "लो म,, इति मविषये शता।" इङान दः,, इति दविषये शानः। शकारः शित्कार्यार्थः ऋकारः उगित्कार्यार्थः। पूर्ववच्छवादि। भवदिति स्थितौ स्वादय। शत्राद्यन्ता वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु योज्याः। तत्र-पुंसि-भवान्, भवंतौ, भवंतः। इत्यादि। नपि-भवत्, भवती, भवंति। इत्यादि। स्त्रियां—भवती, भवन्त्यौ, भवन्त्यः। इत्यादि॥ व्यतिभू शान इति स्थिते—पूर्ववच्छवादौ कृते—

९२५॥ आने मुक्। ५।१।१९३। गोरकारातादाने परतो मुगागमो भवति। उकारककारावितौ। व्यतिभवमानः। व्यतिभवमानौ। व्यतिभवमानाः। इत्यादि। व्यतिभवमान, व्यतिभवमाने, व्यतिभवमानानि। इत्यादि। व्यतिभवमाना, व्यतिभवमाने, व्यतिभवमानाः। इत्यादि॥ एधमानः, एधमानौ, एधमानाः। पचन्। पचत्। पचती। पचमानः। पचमाने। पचमाना। नदन्।

नंदत् । नदंती । ध्वसमानः । ध्वसमानं । ध्वंसमाना । व्ययत् । व्ययत् । व्ययती । इत्यादि । "न थाद्,, इति नुमो निषेधः । जुह्वत् । जुह्वती । " वा नपः,, इति ये वा नुम् । जुह्वन् । जुह्वती । जुह्वंति, जुह्वति कुलानि । जुह्वती, जुह्वत्यौ । व्यतिहानः । दधत् । अभिदधानः । अदन् । अदत् । अदती । भा दीप्तौ-भान्, भाद् । "शात्रो-राद्,, इति वा नुम् । भाती । भाती । व्यत्यदानः । व्यत्यदानं । व्यत्यदाना । शयान- । शयान । शयाना । ब्रुवन्, ब्रुवत्, ब्रुवती । ब्रुवाण, ब्रुवाण, ब्रुवाणा । दीव्यन्, दीव्यत्, दीव्यंती । " श्यप्-स्याद्,, इति नित्य नुम् । व्यतिदीव्यानः ॥ प्रसूयमानः ३ । नह्यन् ३ । नह्यमानः ३ । सुन्वन् । सुन्वानः । अश्नुवानः । चिन्वन् । चिन्वानः । तुदन्, तुदमानः ३ । म्रियमाणः । मुचन् । मुचमानः । रुन्धन् । रुन्धानः । भुञ्जानः । प्रयुञ्जन्, प्रयुंजानः । तन्वन्, तन्वानः । मन्वानः । कुर्वन्, कुर्वाणः । क्रीणान्, क्रीणानः । वृणानः । गृह्णन्, गृह्णानः । चोरयन् । छादयमानः । लक्षयन्, लक्षयमाणः । योजयन्, योजन् । अर्चयन् । अर्चयमानः । वारयन्, वारयमाणः । इत्यादि नेयं । भावे—भूयमानं देवदत्तेनेत्यादि । सर्वत्रैकवचनांतं नपुंसकलिंगमेव भवति । एध्यमानमस्माभिः । शय्यमानं युवाभ्यामित्यादि ॥ कर्मणि—अभिभूयमानो भानू राहुणा । अभिभूयमानं कर्म ध्यानेन । अभिभूयमाना बुद्धिः कर्मणा । इत्यादि त्रिलिंग ॥ कर्मकर्तरि—अनुभूयमानः स्वयमेव । इत्यादि । ऌटि च—भविष्यन्, भविष्यत्, भविष्यंती, भविष्यती वा । इत्यादि । व्यतिभविष्यमाणः । इत्यादि ॥ कर्मे—भविष्यमाण । इति । अभिभाविष्यमाण, अभिभविष्यमाणो देवदत्तो गुरुदत्तेनेत्यादि । तथा—एधिष्यमाणः । पक्ष्यन् ३ । पक्ष्यमाणः ३ । नंदिष्यन् । इत्यादि । होष्यत् । व्यतिहोष्यमाणः । कर्मे-

हाविष्यमाण । होष्यमाणं । हास्यमानः । ङौ–हायिष्यमाणं । हास्यमान वा । श्रद्धास्यन् , श्रद्धास्यमानः । ङौ–श्रद्धायिष्यमाण, श्रद्धास्यमान वा । अत्स्यन् । अत्स्यत् । अत्स्यती, अत्स्यती वा । इत्यादि नेय।

९२६ ॥ लिटः कसुकानौ।२।२।१०३। धोः परस्य लिटः स्थाने कसु कानावादेशौ भवतः। कसुर्मसंज्ञः। कानो दसंज्ञः। उकारः उगित्कार्यार्थः। ककारः कित्कार्यार्थः। कसौ दे नियमाद् इट् प्राप्तः।

९२७ ॥ कस्यैकाचघसः। ५। १ ।१११। आकारांतादेकाज् घस एव कसाविट् भवति नान्यत्र। इति नियमान्निषिद्धः। ततः स्वादयः। बभूवान्। बभूवांसौ, बभूवांसः। इत्यादि। शसादावजादौ-

९२८ ॥ वसोर्वस्योश् ।४।४।११२। गोर्भस्यावयवो यो वस् तस्य च यो वकारस्तस्य उशादेशो भवति। इत्युकारः। बभूवुषः। बभूवुषा। बभूवद्भ्यां। बभूवद्भिरित्यादि। बभूवुषी। इत्यादि। काने–व्यतिबभूवानः। इत्यादि। ङौ–बभूवान देवदत्तेन। बभूवान इत्यादि। "हल्मध्ये लिट्यतः" इत्येत्वचखे। ततः एकाच्त्वादिट्। पेचिवान्, पेचिवत्, पेचुषी। पेचानः। ननद्वान्, ननद्वत्, ननदुषी। सिविविवान्, सिविविवत्, सिविव्युषी। इत्यादि। जुहुवान्, जुहुवत्, जुहुवुषी। व्यतिजुहुवानः। जुहुवाचकृवान्। जुहुवाचकृवत्, जुहुवाचकुषी। व्यतिजुहुवाचक्राणः। "इटि चात्व" इत्यात्व। अभिदधिवान्, अभिदधिवत्, अभिदधुषी। अभिदधान.। जक्षिवान्, जक्षिवत्, जक्षुषी। व्यतिजक्षाणः। ङौ–

उचिवान्, ऊचिवत्, ऊचुषी । ऊचानः ३ । स्त्री-ऊचानं । दिदिवान् । दिदिवत् । दिदिवुषी । व्यतिदिदिवानः । संत्रेहिवान्, संत्रेहिवत् । संत्रेहुषी । संत्रेहिवानः । ३ । मुमुवान्, मुमुवत्, मुमुवुषी । मुमुवाणः । निश्चिचिवान्, निश्चिचिवत्, निश्चिच्युषी । निश्चिच्यानः निश्चिक्रिवान्, निश्चिक्रिवत्, निश्चिक्युषी । निश्चिक्यानः । तुतुद्वान्, तुतुद्वत्, तुतुदुषी । तुतुदानः । रुरुध्वान्, रुरुध्वत्, रुरुधुषी । रुरुधानः । तेनिवान्, तेनिवत्, तेनुषी । तेनानः । चिक्रीवान्, चिक्रीवत्, चिक्रीयुषी । चिक्रीयाणः । चोरयांचकृवान्, चोरयांचकृवत्, चोरयांचकुषी । व्यतिचोरयांचक्राणः । इत्यादि ॥ सनि—बुभूषन् । व्यतिबुभूषमाणः । बुभूष्यमाणं देवेन । अनुबुभूष्यमाणः । अनुबुभूष्यमाणः स्वयमेव । बुभूषांचकृवान् । व्यतिबुभूषांचक्राणः । इत्यादि । बुभूषांचक्राणं । अनुबुभूषांचक्राणः । बुभूषिष्यन् । व्यतिबुभूषिष्यमाणः । जुहूषन् । व्यतिजुहूषमाणः । जिघित्सन् । व्यतिजिघत्समानः । इत्यादि ॥ कर्तर्याने—बोभूयमानः । स्त्री-बोभूय्यमानं देवेन । कर्म—अनुबोभूय्यमानः । कर्तरि कानि—बोभूयाचक्राणः । स्त्री—बोभूयांचक्राणं । अनुबोभूयांचक्राणः । बोभूयिष्यमाणः । स्त्री—बोभूयिष्यमाणः । अनुबोभूयिष्यमाणः । यङ्लुकि-प्रत्यादेशः । "न धाद्" इति नुमभावः । बोभुवत्, बोभुवती, बोभुवतः । इत्यादि । "वा नपः" इति वा नुम् । बोभुवत्, बोभुवती, बोभुवति, बोभुवति । इत्यादि । बोभुवती, बोभुवत्यौ, बोभुवत्यः । इत्यादि । बोभुवाचकृवान् । बोभुविष्यन् । णिचि-भावयन् । भावयमानः । स्त्री-भाव्यमानं । भाव्यमानः । भावयमानः स्वयमेव । भावयांचकृवान् । भावयांचक्राणः । स्त्री-भावयांचक्राणं । भावयांचक्राणः । हावयन् । हावयमानः । स्त्री—

हाव्यमानं । हाव्यमानः । हावयांचकृवान् । हावयांचक्राणः । क्वौ—हावयांचक्राणं । हावयाचक्राणः । हावयाचक्राणः । एव—धादयन् । देवयन् । सावयन् । तोदयन् । रोधयन् । तानयन् । क्रापयन् । चोरयन्नित्यादि नेय । सन्नतणिजत-बोभूययन् । बोभूययमाणः । क्वौ—बोभूय्यमाण, बोभूय्यमाणः । कर्मकर्तरि—दधिपीत्यादिना यगभावः । बुभूपयाचक्राणः । क्वौ–बुभूपयाचक्राण । बुभूपयाचक्राणः । ल्टि—बुभूपयिष्यन् । बुभूपयिष्यमाणः । क्वौ-बुभूपयिष्यमाण । इत्यादि । यङ्तणिजते-बोभूययन् । बोभूययमानः । क्वौ-बोभूययमान । बोभूययमानः । कर्मकर्तरि-यगभावः । बोभूययमानः स्वयमेव । बोभूययाचकृवान् । बोभूययांचक्राणः । क्स-बोभूययांचक्राणं । बोभूययाचक्राणः । बोभूययिष्यन् । बोभूयायेष्यमाणः । बोभूययिष्यमाणः स्वयमेव ॥ यङ्लुक्तणिजते—बोभावयन् । बोभावयमानः । क्वे-बोभाव्यमान । बोभाव्यमानः । बोभावयमानः स्वयमेव । बोभावयिष्यन्नित्यादि । कड्यंत् । कडूयमानः । क्वौ—कडूयमान । कंडूयमानः । कडूयाचकृवान् । कंडूयाचक्राणः । क्वे-कडूयाचक्राणं । कडूयाचक्राणः । कंडूयिष्यन् । कडूयिष्यमाणः । इत्यादि च सविशेषमवसेय । इति शत्रादिपरिच्छेदः ।

नमः श्रीपूज्यपादाय लक्षणं यदुपक्रम ।
यदेवात्र तदन्यत्र यन्नात्रास्ति न तत्क्वचित् ।
इति प्रक्रियावतारे सिद्धिविधि-पचमः ॥

विकारे मिड्वर्जिताः वक्ष्यमाणास्त्याः कृत्संज्ञा भवति । इति अधिकारेण कृत्संज्ञा—कृतकर्तर्यसंज्ञिरिति प्रयोजन ।

९३० ॥ प्राक् क्तेर्वाऽसमः । २ । १ । १०० । स्त्रियां क्तिरिति वक्ष्यते । प्रागेतस्मात् क्तिशब्दनात् असमस्यो वा भवति । इत्यधिकारो वेदितव्यः । अपवादेन बाधितस्योत्सर्गस्य पुनरपवादविषये अनेन समावेशो निधीयते ।

९३१ ॥ ण्योर्घ्यः । २ । १ । १०१ । ण्वुतृजिति वक्ष्यते । प्रागेतस्मात् ण्वुनशब्दनात् वक्ष्यमाणा ध्यसंज्ञा स्या भवति । तयोर्ध्यंकृत्वार्थं इति प्रयोजन ।

९३२ ॥ तव्यानीयौ ।२।१।१७२। धोःपरतः तव्यानीय इत्येतौ स्रौ भवतः । ततः स्वादयः । भवितव्य । भवनीय पुंसा । एधितव्य, एधनीय निद्भिरित्यादि । अभिभवितव्यः । अभिभवनीयः शत्रुः । पक्तव्यः, पचनीयः, ओदनः । हर्तव्या, हरणीया भूः । होतव्य, हवनीय हविः । अत्तव्य, अदनीयं घृतमित्यादि ।

९३३ ॥ नशमज्जोर्झलि ।५। १ । ४० । नश् मस्ज इत्येतयोर्झलादौ स्रे नुम् भवति । नंष्टव्य । नशनीय । मङ्क्तव्यं । मज्जनीय ।

९३४ ॥ योऽचोऽव्वात्सु । २ । १ । १०३ । धोरजताद् यस्त्रो भवति ण्यापवादः वा आसु नकारात इत्येवान् वर्जयित्वा । चय्य । धूनू-धन्य ।

९३५ ॥ ईद् ये ।४।४।६८। आकारान्तस्य गोरीकारादेशो भवति यस्रे परे । धेय । देय । आस्थेय । अनुनेय । निद्धेय । प्रहेय ।

९३६ ॥ व्यित्ये । ४ । ३ । ७३ । यकारादौ स्रे एचो अनादेशो भवति । इत्यर् । भव्य हव्य । अव्य । लव्यं । पव्यं । इत्यादि ।

हाव्यमानं । हाव्यमानः । हावयाचक्रवान् । हावयाचक्राणः । ङौ—हावयांचक्राण । हावयाचक्राणः । हावयाचक्राणः । एव—छादयन् । देवयन् । सावयन् । तोदयन् । रोधयन् । तानयन् । क्षापयन् । चोरयन्नित्यादि नेय । सन्नतणिजन्त—बोभूपयन् । बोभूपयमाणः । ङौ—बोभूष्यमाण, बोभूष्यमाणः । कर्मकर्तरि—दधिर्णात्यादिना यगभावः । बुभूपयाचक्राणः । ङौ–बुभूपयाचक्राण । बुभूषयांचक्राण. । ल्टि—बुभूपयिष्यन् । बुभूपयिष्यमाणः । ङौ–बुभूपयिष्यमाण । इत्यादि । यङन्तणिजन्ते-बोभूयवन् । बोभूययमानः । ङौ–बोभूययमान । बोभूययमानः । कर्मकर्तरि–यगभावः । बोभूययमानः स्वयमेव । बोभूययाचक्रवान् । बोभूययाचक्राणः । ङौ–बोभूययांचक्राण । बोभूययाचक्राणः । बोभूययिष्यन् । बोभूययिष्यमाणः । बोभूययिष्यमाणः स्वयमेव ॥ यङ्लुवतणिजन्ते–बोभावयन् । बोभावयमानः । ङौ–बोभाव्यमान । बोभाव्यमानः । बोभावयमानः स्वयमेव । बोभावयिष्यन्नित्यादि । कडूयन् । कडूयमानः । ङौ–कडूयमान । कडूयमानः । कडूयाचक्रवान् । कडूयाचक्राणः । ङौ–कडूयाचक्राणं । कंडूयाचक्राणः । कंडूयिष्यन् । कडूयिष्यमाणः । इत्यादि च सविशेषमनसेय । इति शत्रादिपरिच्छेदः ।

नमः श्रीपूज्यपादाय लक्षणं यदुपक्रम ।
यदेवात्र तदन्यत्र यन्नात्रास्ति न तत्क्वचित् ।
इति प्रक्रियावतारे मिश्रविधि.पचमः ॥

अथ कृदताः प्रदर्श्यते ।
जिष्णोःकिरीटमाणिक्यादर्ग्रिकंजमरुद्गत ।
भयाटव्यटितथात रक्षलाजसमर्हतः ।

९२९ ॥ कृदमिङ् । २ । १ । ९९ । इतः प्रभृति धोर-

पिकारे भिद्वर्जिताः वक्ष्यमाणास्त्याः कृत्संज्ञा भवंति। इति अधिका-रेण कृत्संज्ञा—कृतकर्तर्यसंज्ञिरिति प्रयोजनं।

९३० ॥ प्राक् क्तेर्वाऽसमः । ३ । १ । १०० । स्त्रियां क्तिरिति वक्ष्यते। प्रागेतस्मात् क्तिसंशब्दनात् असमस्यो वा भवति। इत्यधिकारो वेदितव्यः। अपवादेन बाधितस्योत्सर्गस्य पुनरपवादविषये अनेन समावेशो विधीयते।

९३१ ॥ ण्वोर्प्याः । ३ । १ । १०१ । ण्वुतृजिति वक्ष्यते। प्रागेतस्मात् ण्वुसशब्दनात् वक्ष्यमाणा व्यसंज्ञा स्या भवति। तयोर्व्यं-कत्रार्थे इति प्रयोजनं।

९३२ ॥ तव्यानीयौ ।३।१।१०२। धोःपरतः तव्यानीय इत्येतौ स्यौ भवतः। ततः स्वादयः। भवितव्यं। भवनीयं पुंसा। एधितव्यं, एधनीयं विद्वद्भिरित्यादि। अभिभवितव्यः। अभिभव-नीयः शत्रुः। पक्तव्यः, पचनीयः, ओदनः। हर्तव्या, हरणीया भूः। होतव्यं, हवनीयं हविः। अत्तव्यं, अदनीयं घृतमित्यादि।

९३३ ॥ नशमस्जोर्झलि ।५।१।४०। नश् मस्ज इत्ये-तयोर्झलादौ स्ये नुम् भवति। नंष्टव्यं। नशनीयं। मङ्क्तव्यं। मज्जनीयं।

९३४ ॥ योऽचोऽप्यास्तुः । ३ । १ । १०३ । धोरजंताद् यस्यो भवति प्यापवादः या आस्तु तस्वरात इत्येतान् वर्जयित्वा। स्तव्य। पूञ्–पव्य।

९३५ ॥ ईद्य ये ।४।४।६८। आकारांतस्य धोरीकारा-देशो भवति यस्ये परे। धेयं। देयं। आस्थेयं। अनुमेयं। जिह्वेयं। प्रहेयं।

९३६ ॥ ङ्यिपत्ये । ४ । ३ । ७६ । यकारादौ स्ये एचो अया-दयो भवंति। इत्यत्। भव्यं हव्यं। श्रव्यं। लव्यं। पव्यं। इत्यादि।

अम्व्यास्त्विरिति किं ? यु मिश्रणे–याव्यं । पुञ् अभिषवे । आप्लूवं: । आसाव्य । कार्य । हार्य ।

९३७॥ पोरदुङोऽत्रपिवपिरापिलपिजपिनभिषापिदभेः । २ । १ । १०४ । त्रपादिवर्जितात् पवर्गान्तात् अकारोको यत्स्यो भवति । शपौ क्रोशे–शप्य । लभ्य । गम्यं । रम्य । त्रपादिनिषेधः किं ? अपत्राप्य । डुवपीञ् बीजसंताने । वाप्य । रप लप व्यक्तायां वाचि । राप्यं । लाप्यं । जप मानसे च । जाप्यं । जभ मैथुने । जाम्य । चमु अदने । आचाम्यं । दभि सौत्रो धातुः । दाम्य ।

९३८ ॥ यतिचतितकिशाकिशसिसद्यजेः । २ । १ । १०५ । यत् चत् तक् शक् शस् सद् यजि इत्येतेभ्यो यत्स्यो भवति । यतिञ् प्रयत्ने । यत्य । चतिञ् याचने । चत्य । तक हसने । तक्यं । शक शक्तने । शक्य । शस् हिंसायां । शस्यं । षद्लृ मर्षणे । सद्य । यजीञ् दानादौ । याज्य ।

९३९ ॥ गदमदयमोऽगेः । २।१।१०६। गद मद यम इत्येतेभ्यो गिरहितेभ्यो यो भवति । गद्यं । मद्य । यम्य । अगेरिति किं ? निगाद्यं । प्रमाद्य । आयाम्यं ।

९४० ॥ चरेः । २।१।१०७। चरेरगिपूर्वाद् यो भवति । व्यापवादः । चर्य ।

९४१ ॥ आङोऽगरौ । २।१।१०८। आङ्पूर्वाच्चरेर्यो भवति।

प्राकृतः । ब्रह्म उद्यते ब्रह्मणा उद्यते इति ब्रह्मोद्यं । ब्रह्मवद्य । सत्यमुद्यते इति सत्योद्य । सत्यवद्य ।

९४३ ॥ भूयहत्याग्निचित्या भावे ।२ । १। भूय हत्या अग्निचित्या गिवर्जिते सुपि वाचि क्यबन्ता निपात्यंते भावे । भूयेति भवतेर्नपुंसके भावे क्यप् । ब्रह्मणो भवनं ब्रह्मभूयं गतः । देवभूयं गतः । हत्येति हतेः स्त्रियां भावे क्यप् नकारस्य च तकारो निपात्यः । ब्रह्मणो हतिः ब्रह्महत्या । अग्निचित्येति अग्निपूर्वाच्चिनः स्त्रियां भावे क्यप् तुक् च । अग्निचित्या । अग्निग्रहणमन्यसुप्निवृत्त्यर्थं ।

९४४ ॥ शासुस्त्वोवितृमृहजुषः ।१।१।११३। शास् स्तु एति वृन् द जुष् इत्येतेभ्यो धुभ्यः क्यप् भवति । न यो वर्तते चानुकृष्टत्वात् सुप्यनोरित्येव । शासु अनुशिष्टौ ।

९४५ ॥ शासोऽङ्हल्कीत् । ४।४।३६ । हल्कः किङ्कति धातुवर्तते । शासो गोरुङो भवि हलादौ च किङ्कति परतः इकारादेशो भवति । "शासस्तुपस्त" इति षत्वं । शिष्यः । स्तुन् स्तुतौ । स्तुत्यः एतीति इणिको ग्रहण । इण् गतौ । इत्यं । इक् स्मरणे । इत्यं । इङ् अध्ययने । अधीत्य । दृङ् मादृरः । आदृत्यः । दन् अनादरे । आदृत्य । जुषिन् प्रीतिसेवनयोः । जुष्यं ।

९४६ ॥ ऋदुदोऽक्लृपचृतृचः ।१ । १ ।११४। क्लृप् चृति ऋचिवर्जितेभ्यः ऋकारांत धुभ्यः क्यप् भवति । वृतुन् वर्तने । वृत्य । ऋदुर् शब्दकुत्सायां । शृध । अक्लृपचृतृच इति किं ? कल्प्य । चर्त्य । अर्च्य । ण्यापवादः ।

९४७ ॥ ण्यः ।२।१।१२२। धोर्ण्यस्तो भवति । णकार ऐदर्थः । कार्यं । हार्यं । पच् युज् भुजिस्ततो ण्यः ।

९४८ ॥ चजोः कुर्घिण्ये तेऽनिये ।५।२।६४। तेऽनिये

अभ्यासुरिति किं ? यु मिश्रणे–याव्यं । पुञ् अभिषवे । आङ्पूर्वः । आसाव्य । कार्यं । हार्यं ।

९३७ ॥ पोरदुक्ोऽत्रपिवपिरापिलपिजपिजभिचमिदभेः । २ । १ । १०४ । त्रपादिवर्जितात् पवर्गान्तात् अकारोऽके मस्त्यो भवति । शपौ क्रोशे–शप्यं । लभ्यं । गम्यं । रम्य । त्रपादिनिषेधः किं ? अपत्राप्यं । डुवपौन् बीजसंताने । वाप्य । रप लप व्यक्तायां वाचि । राप्यं । लाप्यं । जप मानसे च । जाप्यं । जभ मैथुने । जाम्भ्यं । चमु अदने । आचाम्यं । दभि सौत्रो धातुः । दाम्भ्यं ।

९३८ ॥ यतिचतितकिशकिशसिसहयजेः । २ । १ । १०५ । यत् चत् तक् शक् शस् सह् यजि इत्येतेभ्यो यत्यो भवति । यतिङ् प्रयत्ने । यत्य । चतिङ् याचने । चत्य । तक हसने । तक्यं । शक शकने । शक्य । शस् हिंसायां । शस्यं । षहे मर्षणे । सह्य । यजीञ् दानादौ । याज्य ।

९३९ ॥ गदमदयमोऽगेः ।२।१।१०६। गद मद यम इत्येतेभ्यो गिरहितेभ्यो यो भवति । गद्यं । मद्य । यम्य । अगेरिति किं ? निगाद्यं । प्रमाद्य । आयाम्यं ।

९४० ॥ चरेः ।२।१।१०७। चरेरगिपूर्वाद् यो भवति । व्यापनादः । चर्यं ।

९४१ ॥ आङोऽगुरौ ।२।१।१०८। आङ्पूर्वाच्चरेर्यो भवति । चर्यो देशः । अगुराविति किं ? आचार्यः भट्टाकलङ्कः ।

९४२ ॥ वदः सुपि क्यप् च ।२।१।१११। बदेर्गिवर्जिते सुपि वाचि क्यप् भवति यश्च । ककारः किल्कार्यार्थः । पकारस्तुगर्थः । कपि–"सम्प्रसारणं" इति यण इक् । "वागमिरु" इति

प्राकृतः । ब्रह्म उद्यते ब्रह्मणा उद्यते इति ब्रह्मोद्यं । ब्रह्मवद्यं । सत्य-
मुद्यते इति सत्योद्य । सत्यवद्यं ।

९४३ ॥ भूयहत्याग्निचित्या भावे । २ । १ । भूय हत्या अग्निचित्या गिर्वर्जित सुपि वाचि क्यबन्ता निपात्यन्ते भावे । भूयेति भवतेर्नपुंसके भावे क्यप् । ब्रह्मणो भवनं ब्रह्मभूयं गतः । देवभूयं गतः । हत्येति हन्तेः स्त्रियां भावे क्यप् नकारस्य च तकारो निपात्यः । ब्रह्मणो हतिः ब्रह्महत्या । अग्निचित्येति अग्निपूर्वाच्चिनः स्त्रियां भावे क्यप् तुक् च । अग्निचित्या । अग्निग्रहणमन्यपूर्वानिवृत्त्यर्थं ।

९४४ ॥ शास्स्त्वेविदृजुषः ।१।१।११२। शास् स्तु एति दृङ् ह जुष् इत्येतेभ्यो युष्यः क्यप् भवति । न यो वर्तते चानुकृष्टत्वात् युष्मयोरित्येव । शासु अनुशिष्टौ ।

९४५ ॥ शासोऽङ्हलीत् । ४।४।३६ । हलक्ङ् क्ङिति चानुवर्तते । शासो गोकङो अङि हलादौ च क्ङिति परतः इकारादेशो भवति । "शास्त्वस्वता" इति पत्वं । शिष्यः । स्तुञ् स्तुतौ । स्तुत्यः एतीति इणिको ग्रहणं । इण् गतौ । इत्यं । इङ् स्मरणे । इत्यं । इङ् अध्ययने । अधीत्यं । दृङ् आदरे । आदृत्यः । दृन् अनादरे । आ-दृत्यं । जुषिन् प्रीतिसेवनयोः । जुष्यं ।

९४६ ॥ ऋदुपोऽक्लृपचृतृचः । २ । १ ।११४। क्लृप् चृति कर्चिवर्जितेभ्यः ऋकारान्ते युष्यः क्यप् भवति । वृतुङ् वर्तने । वृत्यं । शृधुङ् शब्दकुत्सायां । शृध्य । अक्लृपचृतृच इति किं ? कल्प्य । चर्त्य । अर्च्य । व्यापादः ।

९४७ ॥ ण्यः ।२।१।१२२। धोर्व्यञ्जनात्स्यो भवति । चकार ऐवर्थः । कार्यं । हार्यं । पव् युन् युजिमृजो ण्यः ।

९४८ ॥ चजोः कुधिण्ये वेऽनिटा ।५।२।६४। वेऽनिटो

गोश्वकारजकारांतस्य कुत्वं भवति घिति ण्ये च परतः। पूर्ववद-न्यत्। पाक्य। योग्य। भोग्यं। वच् इत्यतो ण्यः।

९४९ ॥ निदाघावदाघार्घवाक्यं खौ। ५। १। ६६। निदाघादयः शब्दाः कृतकुत्वादयो निपात्यंते खौ। वाक्य। अन्यत्र-वाच्यं। पच् सिच् इत्यतो ण्यः।

९५० ॥ ण्य आवश्यके। ५। २। ७४। अवश्यस्य भाव आवश्यकं। तस्मिन्नावश्यकेऽर्थे ण्ये परतः चजोः कुत्वं न भवति। "ण्यः" इत्यावश्यके ण्यः। मयूरव्यंसकादित्वात् सः। "ल्येऽवश्यमः" इति मख। अवश्यपाच्य, अवश्यसेच्य।

९५१ ॥ युजत्यजप्रवचां। ५।२।७५। युज् त्यज् प्रवच् इत्येतेषां ण्ये परतश्चजोः कुत्वं न भवति। योज्य। त्याज्य। प्रवाच्य।

९५२ ॥ भुजोऽदौ ।५।२।७६। भुज् इत्येतस्यादर्थेऽभ्य-वहारे वर्त्तमानस्य ण्ये कुत्वं न भवति। भोज्य ओदनः। अदाविति किं? भोग्यः कंबलः।

९५३ ॥ निप्राद्युजः शक्ति। ५। २। ७७। नि प्र इत्येताभ्यां परस्य युजः शक्यतेर्गम्यमाने कुत्वं न भवति। नियोक्तुं शक्यः नियोज्यः, प्रयोज्य। शक्तीति किं? नियोग्यः। प्रयोग्यः।

९५४ ॥ ओरावश्यके। २। १। १२४। उवर्णांतादोरवश्य भावे योत्ये ण्यो भवति। यापवादः। पूञ् पवने। इत्यतो ण्ये "ण्वि ऐ" इत्याव्। पाव्यं। अवश्यपाव्यं। लूञ् छेदने। लाव्यं। अव-श्यलाव्य। भू-भाव्य। अवश्यभाव्य।

९५५ ॥ ण्वुतृच्।२।१।१२९। सर्वेभ्यो धुभ्यो ण्वु तृच् इत्ये-तौ खौ भवतः। णकार ऐजर्थः। चकारः "ण्वुतृज्भ्यां च" इति विशेषणार्थः।

९५६ ॥ योरकः । ५ ।१।१। वु इत्येतस्य गोर्निमित्तभूतस्य अक इत्ययमादेशो भवति । भावकः । भविता । कारकः । कर्ता । नायकः । नेता । पाचकः । पक्ता । भोचकः । भोक्ता । इत्यादि त्रिषु लिंगेषु योज्या. । लोदिद्वोऽपष्ठिश्रिशीलादिनाऽनिट्त्वमिट्त्व च प्रत्येय ।

९५७ ॥ गाङ्कुटादेरञ्णि ङिद्वत् ॥ १।१।८९। गाङ्प्रत्ययस्य कुटादीनां च धूनां अञ्णि स्ये परतो ङितीव कार्यं भवति । सङ्कोटकः । सकुटिता । उद्घाटक. । उद्घुटिता ।

९५८ ॥ इटि विजः । १ । १ । ९० । विजधोरिडादौ स्ये ङित्कार्यं भवति । उद्विजिता ।

९५९ ॥ घ्नस्तोऽणञ्णौ । ५ । २ । ३६ । हतेर्णगृञ्णि-वर्जितं ञ्णिति परे नकारस्य तकारादेशो भवति ।

९६० ॥ हो घ्नो ञ्णिणि । ५ । २ । ६७ । हतेर्हकारस्य ञ्णिति स्ये नकारे च परतः कुत्वं भवति । घातकः । हन्ता ।

९६१ ॥ कृञ्णौ युक् । ५ । २।३७। आकारान्ताद्धोः कृति ञ्णिति णौ च युक् भवति । दायक. । दाता । विधायकः । विधाता । गायकः । गाता ।

९६२ ॥ न मोऽकमृवमृयमृरमृनमृगमृचमः ।५।२।३८। कमि वमि यमि रमि नमि गमि चमिवर्जितस्य मान्तस्य धोः णोः कृति ञ्णिति ञौ च यदुक्तं तन्न भवति । "उकाऽत" इति एप् न भवति । शमकः । शमिता । तमकः । तमिता ।

९६३ ॥ जन्वधोः । ५ । २ । ३९ । जन् वधि इत्येतयोः कृति ञ्णिति णौ च यदुक्तं तन्न भवति । जनक. । जनिता । वधकः । वधिता ।

९६४ ॥ जभोऽचि । ५ । १ । ४१ । जभ इत्येतस्याजादौ स्ये नुम् भवति । जभकः । जभिता ।

९६५ ॥ रधः । ५ । १ । ४२ । रध इत्येतस्याजादौ त्ये परतो नुम् भवति । रधकः । " ऊदिद्भ्वः„ इति पक्षे इट् ।

९६६ ॥ नेव्यलिटि । ५ । १ । ३१ । रध इडादावलिटि त्ये नुम् न भवति । रधिता । रद्धा ।

९६७ ॥ रभः । ५ । १ । ४४ । रभ इत्येतस्याजादौ त्ये नुम् न भवत्यलिटि । आरभकः । आरब्धा ।

९६८ ॥ लभेः । ५ । १ । ४५ । लभ इत्येतस्याजादौ लिड्वर्जितस्य नुम् भवति । लंभकः । लब्धा ।

९६९ ॥ मृजेरैप् । ५ । २ । १ । मृजेर्द्धेरैप् भवति गागयोः परतः । समार्जकः । समार्जिता । समार्ष्टा । सनि–बुभूषकः । बुभूषिता । यङि–बोभूयकः । बोभूयिता । यङुपि–बोभावकः । बोभाविता । णिचि—भावकः । भावयिता ।

९७० ॥ तीच्छसहलुभरुषरिषः । ५ । १ । १०३ । इच्छ सह लुभ रुष रिष इत्येतेभ्यस्तकारादावगे वा इट् भवति । इच्छतीति इषेः छादेशभाजो ग्रहणं । एषिता । सहिता । लोभिता । रोषिता । रेषिता । इडभावे—दुत्वादि ।

९७१ ॥ सहवहोऽस्यौः । ४ । ३ । २०३ । सहि वहि इत्येतयोरवर्णस्य दूखे सत्यौकारादेशो भवति । एष्टा । सोढा । लोब्धा । रोष्टा । रेष्टा ।

९७२ ॥ पचादिभ्योऽच् । २ । १ । १३० । पच् इत्येवमादिभ्यो धुभ्योऽजित्ययं त्यो भवति । पचतीति पचः । वचः । भवः ।

करः । हरः । नयः । लोलुवः । पोपुवः । मेघः । शिलयः । श्वपचः। चक्रधरः । बहुवचनादाकृतिगणः ।

९७३ ॥ नंद्यादिभ्योऽनः । १ । १ ।१३१। नंदि इत्येवमादिभ्योऽन इत्ययं त्यो भवति । नदयतीति नंदनः । णिलु । वासनः। मादनः । विदूषणः । " दोषो णौ,, इत्यूत्वारः। साधनः । वर्द्धनः। शोभनः । रोचनः । एतेभ्यो ण्यंतेभ्योऽनः । सहनः । पतनः । इत्यादि ।

९७४ ॥ ग्रहादिभ्यो णिन् । २ । १ ।१३२। ग्रह इत्येवमादिभ्यो णिन् त्यो भवति । गृह्णातीति ग्राहयतीति च ग्राही । उद्वासन इति उद्वासी । तिष्ठतीति स्थायी । मंत्रयतीति मंत्री । समर्थयति इति समर्थी इत्यादि ।

९७५ ॥ ज्ञाकृगृप्रीगुपः कः । ३ । १ ।१३९। ज्ञादिभ्य इगुपेभ्यश्च धुभ्यः कस्त्यो भवति । जानातीति ज्ञः ॥ "इटि चाकृते,, इति आत्खं । कृ विक्षेपणे । " ऋतामिद्धोः " इतीत् । किरतीति किरः । गृ निगरणे ।

९७६ ॥ ग्रोऽचि । ५। ३ । ५६ ।गृ इत्येतस्य धोरजादौ त्ये परे रेफः लत्वं वा भवति। गिरतीति गिरः। गिलः। प्रीञ् प्रियदीप्त्योः। प्रीणातीति प्रियः । लिख अक्षरविन्यासे । लिखतीति लिखः। बुधः । युधः । गुधः । इत्यादि ।

९७७ ॥ गायतेऽनिक् । २ । १ ।१४०। गो यात्रि धोस्कारातात् को भवति अनिक् च । प्रतिष्ठत इति प्रस्थः । त्रैङ् पालने । सुत्र । ग्लै हर्षक्षये । सुग्लः । इत्यादि । अनिगिति किं ? ह्वेञ् स्पर्द्धाशब्दयोः । प्रह्वः । ज्या वयोहानौ । प्रज्यः । इत्यादि । " ख्यान्ध्युसादेः,, इत्यादिना णिक न भवति ।

९७८ ॥ ज्वलादिग्रहाद् वा । २ । १ । १४० । ज्वलादिभ्यो ग्रहश्च धोरगौ वाचि णयो वा भवति । पक्षे-अच् । ज्वलतीति ज्वाल., ज्वल. । साह., सहः । रामः, रमः । ग्राह', ग्रहः ।

९७९ ॥ तनश्यादुच्यधाश्रुसंश्रवतीण्श्वसः । २ । १ । १४१ । तनादिभ्यो धुभ्यो णो भवति । तानः । उत्तानः । श्यैङ् गतौ । अवश्याय. । आत्—दायः । ग्लायः । व्यधो ताडने । व्याधः । श्रु गतौ । आश्रावः । सश्रावः । इण् गतौ । अत्यायः । श्वस् प्राणने । श्वासः । आश्वासः ।

९८० ॥ आशिषि वुच् । २ । १ । १६३ । धोराशिषि गम्यमानायां वुच् भवति । चकारः "त्यस्थेऽचित्क्यपीद्"-इत्यादिना विशेषणार्थः । जीवतात्—इत्याशास्यमानो जीवकः । नदकः वर्द्धकः । जीवका । नदका । वर्द्धका ।

९८१ ॥ कर्मण्यण् । २ । २ । १ । कर्मणि वाचि धोरण् भवति । कुंभ करोतीति कुम्भकारः । छत्रधारः । शरलावः । वेदाध्यायः । चर्चापाद. । कुम्भकारी । छत्रधारी इत्यादि ।

९८२ ॥ आतः कोऽह्वावामः । २ । २ । ३ । कर्मणि वाचि ह्वा वा मा वर्जितादाकारान्तात् धोः को भवत्यणोऽपवाद. । गा ददातीति गोदः । कबलदः । पार्ष्णित्रः । सर्वज्ञः । क्षितिपः । ब्रह्मज्यः । अह्वावाम इति किं ? स्वर्गह्वाय. । तन्तुवायः । धान्यमायः ।

९८३ ॥ प्रे । २ । २ । ४ । कर्मणि वाचि प्रशब्दे च धोरातः को भवति । तत्प्रदः । धर्मप्रज्ञः । सिद्धे सत्यारंभो नियमार्थः। "प्र एव गौ नान्यस्मिन्" इति-गोसदायः ।

९८४ ॥ दाज्ञः । २ । २ । ५ । कर्मणि प्रशब्दे च

धाचि दा ज्ञा इत्येताभ्या को भवति । मोक्षप्रदः । मार्गप्रज्ञः । अयमपि नियमः । दाज्ञ एव नान्यस्मात्" इति—पार्ष्णिप्रत्रायः ।

९८५ ॥ सुपि । २ । २ । ७ । सुपि वाचि धोरातः को भवति । कच्छेन पिबतीति कच्छपः । द्विपः । पादपः । समस्थः । विषमस्थः ।

९८६ ॥ गोंबांबभूमिसव्यापद्वित्रिकुशेकुशंकङ्गुमंजिपुंजिपरमेबर्हिर्दिव्यग्नेः स्थः । ५ । ४ । ७५ । गवादिभ्यः परस्य तिष्ठतेः सकारस्य षत्व भवति । गोष्ठः । अंबाष्ठः । अंबष्ठः । भूमिष्ठः । सव्यष्ठः । द्विष्ठः । त्रिष्ठ । कुष्ठः । शेकुष्ठ । शंकुष्ठः । अगुष्ठः । मजिष्ठ । पुजिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठा ।

९८७ ॥ नखमुचादयः । २ । २ । ८ । नखमुच इत्येवमादयः शब्दाः शिष्टप्रयोगतः साधवो भवंति । नखान् मुंचंति—अणोऽपवादः—नखमुचानि धनूंषि । मूलानि विभुजति मूलविभुजो रथः । कौ मोदते—कुमुद । जले रोहति जलरुहं ।

९८८ ॥ ओऽर्हः । २ । २ । १४ । कर्मणि वाचि अर्हतेरलो भवति । इति पूजार्हो जिनः । पूजार्हा प्रतिमा ।

९८९ ॥ धृञोऽसूत्रे । २ । २ । १५ । कर्मण्यसूत्रे वाचि धरतेरलो भवति । जल धरतीति जलधरः । शशधरः । चक्रधरः । गणधरः । असूत्र इति किं ? सूत्रधारः ।

९९० ॥ शम्यस्थो धोः खौ । २ । २ । १६ । शमि वाचि स्थावर्जिताद्धोरलो भवति खुविषये । श भवति—शभवः । शंकरः । अस्थ इति किं ? शस्था । शमीति किं ? सस्था । टाजप्यजादित्वात् । खाविति किं ? शकरी जिनविद्या ! हेत्वादिना अट् ।

९९१ ॥ हेतुशीलानुलोम्येऽशब्दश्लोककलहगाथावैरचाटुमूत्रमंत्रपदे । २ । २ । २७ । हेतुः कारणं । शील स्वभाव । आनुलोम्यमनुकूलता । एतेष्वर्थेषु गम्यमानेषु शब्दादिवर्जितकर्मणि कृञो धोरट् ट्यो भवति । तीर्थंकरो जिनः । यशस्करी जिनविद्या । श्रद्धाकरः । प्रेषणाकरः । अशब्दादाविति किं ? शब्दकारः । श्लोककारः । इत्यादि ।

९९२ ॥ गमेः खच्खड्डाः । २ । २ । ५८ । कर्मणि सुपि च यथासंभव वाचि गमेर्धोः खच् खड् ड इत्येते त्या भवति ।

९९३ ॥ मुमचः । ४ । ३ । २३१ । पूर्वपदस्याजंतस्याङ्गः खिदंते कृति धौ मुमागमो भवति । तुरगमः । तुरगः । तुरगः । " डयापोः क्वचिद् खौ" इति ह्रः । भुजगमः । भुजगः । भुजगः ।

९९४ ॥ विहायो विह च । २ । २ । ५९ । विहायस् शब्दस्य वाचो विहादेशो भवति । गमेः खच्खड्डाः प्रागेव सिद्धाः । विहायसा गच्छतीति विहंगमः । विहगः । विहगः ।

९९५ ॥ सुदुस्याधारे डः । २ । २ । ६० । सु दुस् इत्येतयोर्वाचोर्गमेर्डो भवत्याधारे । सुखेन गम्यतेऽस्मिन्निति सुगो देशः । दुर्गो देशः ।

९९६ ॥ आशिषि घ्नः । २ । २ । ६२ । कर्मणि वाचि हतेराशिषि गम्यमानायां डो भवति । तिमिं हन्यादित्याशंसितः तिमिहः । शत्रुहः । शापहः ।

९९७ । क्वचिदपे । २ । । २ । ६४ । कर्मण्यपशब्दे च सुबंते वाचि हतेः क्वचिड्डो भवति । केशानपहंतीति केशापहः । तमोपहः । दुःखापहः । क्वचिच्छब्दः शिष्टप्रयोगानुसरणार्थः ।

९९८ ॥ टगमर्त्ये । २ । २ । ६६ । कर्मणि वाचि हन्तेष्टग् भवत्यमर्त्ये कर्त्तरि । वातं हन्ति विनाशयति वातघ्नमाविकं क्षीरं । पित्तघ्नं माहिषं पयः । श्लेष्मघ्नं कटुकं । जायाघ्नस्तिलकः । पतिघ्नी पाणिरेखा ।

९९९ ॥ जायापत्योर्लक्षणे । २ । २ । ६७ । जायापति इत्येतयोर्वाच्योः हन्तेष्टग् भवति लक्षणे लक्षणवति कर्मकर्तरि मर्त्ये । लक्षणं शुभाशुभसूचनं तिलकालकादि । जायाघ्नो ब्राह्मणः । येन तिलकादिलक्षणेन जाया हन्ति तद्वानित्यर्थः । एवं—पतिघ्नी कन्या ।

१००० ॥ स्पृशोऽनुदके क्विः । १ । २ । ६८ । स्पृशतेरुदकवर्जिते सुबन्ते वाचि क्विस्त्या भवति । घृतं स्पृशतीति घृतस्पृक् । मन्त्रं स्पृशतीति मन्त्रस्पृक् । अनुदक इति किं ? उदकस्पर्शः ।

१००१ ॥ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चः । २ । २ । ७१ । ऋत्विक् दधृक् स्रक् दिक् उष्णिक् इत्येते शब्दाः क्विन्ताः निपात्यन्ते । अञ्चति युजि क्रुञ्च इत्येतेभ्यः क्विर्भवति । ऋतौ ऋतुं वा यजतीति ऋत्विक् । धृष्णोतीति दधृक् । किद्वित्वं च । सृजन्ति तामिति स्रक् । कर्मणि क्विरमागमश्च । दिशन्ति तां—दिक् । कर्मणि क्विः । उत्स्निह्यतीति—उष्णिक् । सतत्व षत्व च निपात्य । अञ्चु—प्राङ् । दध्यङ् । युजि—युङ् । क्रुञ्च—क्रुङ्, क्रुञ्चौ । निपातनादनख ।

१००२ ॥ कर्मणीवे त्यदाद्यन्यसमाने दृशष्टक् सक् च । १ । २ । ७२ । त्यदादावन्यशब्दे समानशब्दे च कर्मणि इवार्थे उपमाने वाचि दृशः टक् सक् क्विश्च स्या भवति । त्यमिव पश्यति, स इव दृश्यते,— त्यादृशः । त्यादृक्षः । त्यादृक् ।

"आ",, इत्यात्वं । एव–तादृशः, तादृक्षः, तादृक् । अन्यादृशः । अन्यादृक्ष , अन्यादृक् । सदृश', सदृक्षः, सदृक् । " समानस्य धर्मादिषु,, इति सादेश' ।

१००३ ॥ मन्वन्क्वनिब्विचः क्वचित् । २ । २ । ७३ । सुपि वाचि धोर्मन् वन् क्वनिप् विच् इत्येते त्या क्वचिद् दृश्यते । क्वचिदिति बहुलार्थं । तेन—यथाल्क्ष्य लक्षणव्यवस्था । मन्—सुष्ठु शृणातीति सुशर्मा । सुष्ठु तरतीति सुतर्मा । शृणाति दुःखमिति शर्मा सुख । वृणोति शरीरमिति वर्म तनत्र । हिनोति व्यवहारमिति हेम सुवर्णं । दधाति शोभामिति धाम । क्वचिद् ग्रहणान्निरुपपदादपि त्यः । वन्–विजायते इति विजावा । "वन्या,, इत्यात्व । एरमग्रे गच्छतीत्यग्रेगावा । "पे कृति बहुलं,, इतीपोऽलुप् । क्वनिप्—प्रातरेति प्रातरित्वा । करोतीति कृत्वा । क्वित्वादेप् पित्वात् तुक् च भवतः । ध्यायतीति धीवा । ध्याप्योः क्वनिपि–क्वचिदन्यदेव" इति यण इक् । "हलो यणिकः" इति दी. । एव–प्यायत इति पीवा । विश्–विशतीति वेट् । रिषतीति रेट् । पत्वजत्वं । एवंधश्चकार: । जागर्त्तीति जागः । अन्यथा–"जागुरविक्ष्णिणग्ङितीति एव्प्रतिषेधः स्यात् । शुभमिति क्षि. । शुभ यातीति । शुभयाः । कीलाल पिबतीति कीलालपा ।

१००४ ॥ क्विप् । २ । २ । ७४ । धोः क्वचित् क्विप् दृश्यते । अतरीक्षे सीदतीति–अतरीक्षसत् । एव—युसत् । अदसूत इति—अदसूः । शतसूः । मित्र द्वेष्टीति मित्रद्विट् । प्रद्विट् । द्विट् । मित्राय द्रुह्यतीति मित्रध्रुक् । गा दोग्धीति गोधुक् । मधुक् । अश्वं युनक्ति युज्यतेऽनेन वा इति अश्वयुक् । प्रयुक् । युजीति पूर्ववत् । तत्व वेत्ति जानाति निते विचारयति वा तत्त्ववित् । प्रवित् । निद-

ति विद्यते विंदति वा विद् । तेषां वरः-विदांवरः । वाक्यं भिनत्तीति वाक्यभित् । प्रभित् । भित् । तमश्छित् । प्रच्छित् । छित् । शत्रुजित् । प्रजित् । जित् । अग्रणी । प्रणीः । नीः । विराट् । सम्राट् । तखाश्रत् । पर्णध्वत् । वहाभ्रट् । पक् । या । हाः । मित्रभूः । प्रतिभू ।

१००५ ॥ भजो ण्विः । १ । २ । ७७ । सुबंते वाचि भजेर्ण्विर्भवति । णकार ऐवर्थः । इकार उच्चारणार्थः । वकारः सति साम्ये बाधनार्थः । तेनेह क्विप् न भवति । अर्धं भजतीति-अर्द्धभाक् ।

१००६ ॥ शीलेऽजातौ णिन् । १ । २ । ७८ । जातिवर्जिते सुबंते वाचि धो णिन् भवति शीले गम्यमाने । यत्र फलनिरपेक्षा प्रवृत्तिस्तच्छीलं । उष्णं भुङ्क्ते इत्येवं शीलः उष्णभोजी । उदासरतीत्येवं शीला उदासारिण्यः । एवं-प्रत्यासारिण्य गावः । प्रस्थायी । प्रयायी । शील इति किं ? उष्णभोजः । अजाताविति किं ? शालीन् भोक्ता । तृनेव ।

१००७ ॥ कर्तरीवे । १ । २ । ७९ । कर्तृवाचिन्युपमाने वाचि धोर्णिन् भवति । जात्यशीलार्थमिदं । उष्ट्र इव क्रोशतीति—उष्ट्रक्रोशी । ध्वाक्षरावी । सिंहनर्दी । वृत्ताविवार्थोंतर्भूत इति तदप्रयोगः ।

१००८ ॥ व्रताभीक्ष्ण्ये । १ । २ । ८१ । सुबंते वाचि धोर्णिन् भवति व्रते आभीक्ष्ण्ये गम्यमाने । व्रतं शास्त्रतो नियमः । पार्श्वे एव शेय्यं—पार्श्वशायी । स्थंडिलशायी । अश्राद्धभोजी । अलवणभोजी । पुनः पुनर्यद्भवतीति तदभीक्ष्णं । तस्य भाव आभीक्ष्ण्यं । कषायमाभीक्ष्ण्यं पिबतीति कषायपायिणो गान्धाराः । क्षीरपायिणः उशीनराः । सौवीरपायिणो वाह्लीकाः ।

१००९ ॥ मन्यात् । २ । २ । ८३ । सुवते वाचि मन्यतेर्णिन् भवति । शोभनमानी ।

१०१० ॥ खश् स्वस्य । २ । २ । ८४ । स्वस्यात्मनो यत्स्वधि सुवत तस्मिन् वाचि मन्यतेः खश् भवति । दर्शनीयमात्मानं मन्यते दर्शनीयमन्यः । सर्वज्ञमन्यः । खित्त्वान्मुम् । शित्वाद् विकरणश्च ।

१०११ ॥ जनोऽनौ ड । २ । २ । ९६ । कर्मण्यनुशब्दे च वाचि जनेर्डो भवति भूते । पुमासमनुजातः–पुमनुजातः । पुमनुजः । स्त्र्यनुजः । "अकर्मका अपि धवः सगयः सकर्मका भवंति" इति–जनिः सकर्मकः ।

१०१२ ॥ ईपि । २ । २ । ९७ । ईबन्ते वाचि जनेर्डो भवति भूते । उपशमे जातः उपशमजः । अप्सु जातः—अप्सुजः । सरसिजः । "ईपोऽद्वलः" इतीपोऽनुप् ।

१०१३ ॥ कायापजातौ । २ । २ । ९८ । जातिवर्जिते काते वाचि जनेर्डो भवति । बुद्धेर्जातः—बुद्धिजः संस्कारः । संकल्पजः—कामः । दुःखजः शोकः । अजाताविति किं ! अश्वाज्जातः ।

१०१४ ॥ क्वचित् । २ । २ । ९९ । क्वचिदन्यस्मिन् वाचि जनेर्डो भवति भूते लक्ष्यानुरोधेन । किंशावेन किंजः । अब्जातेन—अब्जः । द्वाभ्यां जन्मनोपनयेन च जातः–द्विजः । न जातः अजः । प्रजाता प्रजाः । सीम्नो जातं–साजमभूत । अद्भ्या जातं—अब्जं । क्वचिदन्यस्मादपि धोः डो भवति । परमाहति पराहः । परिखाता परिखा । उपखा । अटति, अततीति वा आः । कनति कायतीति वा कः । खन्यते खनतीति वा खः । भातीति भ ।

१०१५ ॥ क्तः । २ । २ । १०० । धोर्भूते काले तत्संज्ञस्यो

भवति । "क्तक्तवतू तः" इति तसंज्ञा । ककारोकारयोरित्संज्ञा । भूयते स्म भवति स्म इति वा विग्रहे—भूतः । भूतवान् । शयितं । शयितवान् । कृतः । कृतवान् । कृतवती । णेः ख—भावितः । भावितवान् । भावितवती । याचितं । कारितं । गमितं । जनितमित्यादि ।

१०१६ ॥ इट् ते । ५ । १ । १०२ । निष्कुष इडागमो भवति तसंज्ञके परतः । निष्कुषितः । निष्कुषितवान् ।

१०१७ ॥ डीयश्व्येदितो ऽपतस्ते । ५ । १ । ११९ । डीय श्वि इत्येताभ्यामिकारेतो यस्मिन् कस्मिंश्चिद् विकल्पितेटश्च पतिवर्जिताद्धोस्तसंज्ञके परतो नेट् भवति ।

१०१८ ॥ द्रांतस्य तो नो दोऽमत्पूमूर्छः ॥ ५ । ३ । ८० । दकारांताद् रेफांताच्च मत्पूमूर्छिवर्जिताद्धोः परस्य तसंज्ञकस्य तकारस्य नकारादेशो भवति तत्संनिधाने दकारस्य च । "पूर्वस्य" इति वर्तमाने—

१०१९ ॥ ओदितः ।५। ३ ।८४। ओकारेतो धोः परस्य ततकारस्य नत्व भवति । डीनः । डीनवान् । श्यनिर्देशात् भौवादिकस्य भवत्येवेट् । डयितः । डयितवान् । ओश्वि गतिवृद्ध्योः । स्वप्यप्यादेः किर्ताति साचो यणिक् । "हलो यणिकः" इति दीः । शूनः । शूनवान् । ईदित्—विजीओ भयचलनयोः । उद्विग्नः । उद्विग्नवान् । लजीओ लस्जिओ व्रीडे । स्फादिसख । लग्नः । लग्नवान् । नेट्-अपरद्धः । अपरद्धवान् । "ऊदिद्भ्वः" इति विकल्पेन विकल्पितेटत्व । गम्लृ सृप गतौ । "डोदिदचः—इत्यादिना नेट् । "हन्मन्–" इत्यादिना ख्व । गतः । गतवान् । हनौ–हतः । हतवान् । प्रच्छी–पृष्टः । पृष्टवान् ।

१०२० ॥ आदितः । ५ । १ । १३६ । आदितो धोर्क्ते इट् न भवति । ञिमिदा–मिन्नः । मिन्नवान् । ञिक्ष्विदा—क्ष्विण्णः । क्ष्विण्णवान् ।

१०२१ ॥ स्फादेरातो धोर्यण्वतोऽध्याख्यः । ५ । ३ । ८१ । ध्याख्यावर्जितादाकारान्ताद् स्फादेर्यण्वतो धोः परस्य ततकारस्य नत्व भवति । सस्यानः । सस्यानवान् । निद्राणः । निद्राणवान् । म्लानः । म्लानवान् । स्फादेरिति किं ? यातः । आत इति किं ? च्युतः । धोरिति किं ? निर्यातः । यण्वत इति किं ? स्नातः । अध्याख्य इति किं ? ध्यातः । ध्यातवान् । ख्यातः । ख्यातवान् ।

१०२२ ॥ ल्वादेः । ५ । ३ । ८२ । ल्वादिभ्य. परस्य ततकारस्य नत्वं भवति । लूनः । लूनवान् । पूनः । पूनवान् ।

१०२३ ॥ ऋतश्च क्तेः । ५ । ३ । ८३ । ऋकारान्तेभ्यो ल्वादिभ्यश्च परस्य क्तेस्तकारस्य नत्व भवति । इत्व दीत्व च । कीर्णिः । तीर्णिः । शीर्णिः । लूनिः । पूनिः । तकारस्य नत्वं प्रागेव सिद्ध । कीर्णः । कीर्णवान् इत्यादि ।

१०२४ ॥ श्याञ्चुदिवोऽस्पर्शानपादानजये ।५।३।८७।

श्यै अञ्चु दिव् इत्येतेभ्यः परस्य ततकारस्य अस्पर्शे अनपादाने जये चार्थे नत्व भवति । प्रतिश्यायते स्म प्रतिशीनः । प्रतिशीनवान् । अभिशीनः । समच्यते स्म समक्नो शकुनेः पक्षौ । आद्यूनः देवदत्तः । अन्यत्र-शीत वर्तते । उदक्तमुदक कूपात् । द्यूत वर्तते ।

१०२५ ॥ निर्वाणोऽवाते । ५ । ३ । ९० । निर्वाण इति निस् पूर्वात् वातेः परस्य क्तकारस्य नत्व भवति अवाते कर्तरि । नि-

र्वाणो मुनिः। निर्वाणः प्रदीपः। अन्यत्र-निर्वातो वातः। निर्वातं वातेन।

१०२६ ॥ शुष्पचोः क्वौ । ५ । ३ । ९२ । शुषि पच् इत्येताभ्यां परस्य ततकारस्य यथाक्रमं क व इत्येतावादेशौ भवतः । शुष्कः । शुष्कवान् । पक्वः । पक्ववान् ।

१०२७ ॥ क्षो मः । ५ । ३ । ९३ । क्षै जै सै क्षये । क्षा इत्येतस्मात् परस्य ततकारस्य मकारादेशो भवति। क्षामः । क्षामवान्।

१०२८ ॥ मस्त्यो वा । ५ । ३ । ९३ । प्रपूर्वात् स्त्यायतेः परस्य ततकारस्य मत्वं भवति वा । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् ।

१०२९ ॥ दोसोमास्थां त्क्तिवीत् । ५ । २ । १५८ । द्यतिस्यतिमास्थानां तकारादौ त्ये परतः इकारादेशो भवति । निर्दितः । निर्दितवान् । अवसितः । अवसितवान् । प्रमितः । प्रमितवान् । उपस्थितः । उपस्थितवान् ।

१०३० ॥ धाञो हिः । ५ । २ । १६१ । धाञित्येतस्य हिरादेशो भवति तकारादौ त्ये परतः । विहितः । विहितवान् ।

१०३१ ॥ दो दद् घोः । ५ । २ । १६३ । दा इत्येतस्य घुसञ्ज्ञकस्य दद् इत्ययमादेशो भवति तकारादौ किति परतः । दत्तः । दत्तवान् ।

१०३२ ॥ मरुद्गेऽच्च । ५ । २ । १६३ । मरुच्छब्दादजन्ताच्च गे परस्य दा इत्येतस्य घुसञ्ज्ञकस्य च इत्ययमादेशो भवति किति । मरुत्तः । मरुत्तवान् । प्रत्तः । प्रत्तवान् । परीत्तः । परीत्तवान् । तीति दीत्वं ।

१०३३ ॥ त्विरत्येऽदोऽगे जग्धिः । १ । ४ । १२८ ।

तकारादौ किति ये चागे परतो अदेर्जग्धिरादेशो भवति । जग्धः । जग्धवान् । प्रजग्ध्य ।

१०३४ ॥ पूङ्यजोः शानः । २ । २ । १२१ । पूङो यजेश्च सत्यर्थे वर्तमानाद्धोः शानस्त्यो भवति । पवमानः । यजमानः ।

१०३५ ॥ वयःशक्तिशीले । २ । २ । १२२ । धाः सत्यर्थे वर्तमानात् वयसि शक्तौ शीले च गम्यमाने शानस्त्यो भवति । वयो यौवनादिस्तत्र—कतीह शिखण्डं वहमानाः । कतीह कवचं पर्यस्यमानाः । यस्मिन् शिखण्डवहनादि भवति तदिह वयो गम्यते । शक्तिः सामर्थ्यं । तत्र—कतीह पचमानाः । कतीह समश्नानाः । कतीह पाके समासे च शक्ता इत्यर्थः । शील स्वभावः । तत्र—कतीहाजानाः । कतीह मण्डयमानाः । कतीहाजानादिशीला इत्यर्थः ।

१०३६ ॥ सुञ्द्विषर्हः सत्रिशत्र्वर्हे । २ । २ । १२४ । सुञ् द्विष् अर्ह इत्येतेभ्यः सत्यर्थे वर्तमानेभ्यो यथाक्रम सत्रिणि अरौ शस्ये च कर्त्तरि शतृत्यो भवति । सर्वे सुन्वतः सत्रिणो यजमाना इत्यर्थः । द्विषन् शत्रुरित्यर्थः । अर्हन् विद्यां । अर्हन् पूजां । विद्यार्यर्हतया प्रशस्यतः कर्त्तेत्यर्थः ।

१०३७ ॥ शीलधर्मसाधौ तृन् । २ । २ । १२५ । शीले धर्मे साधौ च सत्यर्थे वर्तमानाद्धोः तृन् इत्ययं त्यो भवति । शीलमुत्कार्थः । धर्मः कुलाचारः । साधुः शोभन । तत्र—शील—कर्त्ता कटं । वदिता जनापवादान् । करणं वदनं च शीलमस्येत्यर्थः । धर्मे—वधूमूढां मुण्डयितारः । के ते'श्राविष्ठायनाः । श्राद्धे सिद्धेऽन्नमपहर्तारः आह्वरकाः । मुण्डनाहरणादिरेव तेषामाचारानुप्रवृत्त इत्यर्थः । साधौ—कर्त्ता कटं । गंता खेडं । साधु करोति गच्छतीत्यर्थः ।

१०३८ ॥ भूभ्राज्यलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृधुवृतुसहचर इष्णुः । २ । २ । १२६ । भूवादिभ्य शीलादौ सत्यर्थे वर्तमानेभ्यः इष्णुस्त्यो भवति । भवनशीलो भवनधर्मा साधु वा भवतीति भविष्णुः । एवं—भ्राजिष्णुः । अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्द्धिष्णुः । वर्तिष्णुः । सहिष्णुः । चरिष्णुः ।

१०३९ ॥ शमष्टकाद्धिनिण् । २ । २ । १२९ । शमादिभ्योऽष्टभ्यो धुभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो घिनिण् भवति । घकारः कुत्वार्थः । इकारः उच्चारणार्थः । "न मोऽकमुवमुयमुम्रमुनमुगमुचम." इत्येषुप्रतिषेधः । शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी । कमी । प्रमादी ।

१०४० ॥ युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः । २ । २ । १३० ॥ दुहादिभ्यो धुभ्यः शीलादौ सत्यर्थे घिनिण् भवति । दोही । अनुरोधी । दोषी । द्वेषी । द्रोही । योगी । त्यागी । रागी । भोगी । अभ्याघाती । कल्याणभोगी । रञ्जेति निर्देशान्नखं ।

१०४१ ॥ रुचलार्थाद्धिरनः । २ । २ । १४३ । शब्दे चल कंपे इत्येतदर्थेभ्यो घिसञ्ज्ञकेभ्यो धुभ्यः शीलादौ सत्यर्थेऽनस्त्यो भवति । रवणः । आक्रोशनः । चलनः । चोपनः । घेरिति किं ? रविता श्लोक । चलिता मार्ग ।

१०४२ ॥ हलाद्यंतादन्त्यैदितोऽयसूददीपदीक्षणिङः । २ । २ । १४४ । ङकारेत ऐकारेतश्च हलादेर्हलंतात् घिसञ्ज्ञकाद्धोः शीलादौ सत्यर्थेऽनो भवति यकारांत सूद् दीप् दीक्ष् णीङ् इत्येतान्

वर्जयित्वा । वर्त्तनः । वर्द्धनः । स्पर्द्धनः । जुगुप्सनः । मीमांसनः ।

१०४३ ॥ निद्रातंद्राश्रद्धाशीङ्दयस्पृहिगृहिपतेरालुः । २ । २ । १५४ । तदादिभ्यः सत्यर्थे शीलार्थे वालुर्भवति । द्रै स्वप्ने । निद्रालुः । तंद्रालुः । ततो निपातनान्नत्वं । श्रत्पूर्वाद्धाञः–श्रद्धालुः । शयालुः । दयालुः । स्पृहयालुः । गृहयालुः । पतयालुः । एते चुरादिषु कथादयः । तत्रातः खं । तस्य " परेऽचः प्राचः " इति स्थानिवद्भावात् " ष्युकः एप् ", उकोऽत ऐप् न भवति ।

१०४४ ॥ सन्भिक्षाशंस्विदिच्छादुः । २ । २ । १६२। सन्नतात् भिक्षादेश्च सत्यर्थे शीलादौ उर्भवति । सन्–चिकीर्षुः । जिहीर्षुः । भिक्षि–यांचायां । भिक्षुः । आङः शसिड् इच्छायां । आशसुः । विद ज्ञाने । तस्य संनियोगे नकारागमः । विंदुः । इच्छेति इच्छतेः छकारः । इष इच्छायां । छकारो निपात्यते । इच्छुः ।

१०४५ ॥ त्रि-मत्यर्चार्थशीलादिभ्यः क्तः ।२।२।१८१। त्रिद्भ्यो मत्यर्थेऽर्चार्थेभ्यः शीलादिभ्यश्च धुभ्यः सति काले क्तस्यो भवति । ञिमिदा–मिन्नः । ञिक्ष्विदा–क्ष्विण्णः । मतिरिच्छा ज्ञानं च । तत्रेच्छार्थेभ्यः–राज्ञां मतः । राज्ञामिष्टः । ज्ञानार्थेभ्यः- राज्ञां बुद्धः । अर्चार्थेभ्यः–राज्ञामर्चितः । शीलादिभ्यः–

शीलितो रक्षितः क्षांतः आक्रुष्टो जुष्ट उद्यतः ।
श्रयितः शमितस्तुष्टो हृष्टो रक्षित आशितः ॥
कांतोऽभिव्याहृतो हृष्टो दृप्तस्तृप्तो द्दतःस्थितः ।
लिप्तोऽथ दर्पितः स्निग्ध इत्याद्याः सति संमताः ।

१०४६ ॥ उणादयो बहुलं । २ । २ ।१८२। उणादयस्त्याः सति काले वर्तमानेभ्यो बहुलं भवंति ।

१ ॥ कृवापाजिमिस्वदिसाध्यशूदसनिजनिचरीण्च-टिभ्य उण् । कृवा इत्येवमादिभ्यो धुभ्य उण् इत्यय स्रो भवति । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः । दारुः । सानुः । जानुः । चारुः । आयुः । चाटुः ।

२ ॥ गमेर्डोः । गम् इत्येतस्य धोर्डो भवति । गौः ।

३ ॥ भ्रमेश्च डूः । भ्रम इत्येतस्य धोः डूर्भवति । भ्रूः ।

४ ॥ इविस्तिपौ धुनिर्देशे । नदिः । विदिः । मिदिः । दरिः । भवतिः । जुहोतिः । अस्तिरित्यादयः । बहुलग्रहणाद् येभ्यो धुभ्यो यस्मिन्नर्थे ये यथादृश्यन्ते ते तेभ्यस्तस्मिन्नर्थे तथा भवंति । ध्वर्थकार्यनियमसिद्धो भवति ।

यत्र वाच्यलक्ष्मणा (ग्र) न्यासं सूक्ततत्र प्रयत्नतः ।
तत्प्रत्येयमिहोणादौ रत्नाकरमिवाखिलं ॥ १ ॥

१०४७ ॥ पदरुजो घञ् । २ । ३ । १६ । पदिरुजिभ्यां घञ् त्यो भवति ॥ च कर्त्तरि । पद्यतेऽसाविति पादः । रुज्यतेऽसाविति रोगः । विलात् कुत्व ।

१०४८ ॥ सृः स्थिररुग्मत्स्यबले । २ । ३ । १७ । सर्तेर्धोः स्थिरादिषु कर्तृषु घञ् भवति । सरतीति सारः । चदनस्य सारः-चदनसारः । एत-खदिरसारः । कालांतरस्थायी पदार्थ उच्यते । अतीसारो व्याधिः । "घविप्रायः" इति दीव्र । विसारो मत्स्यः । सार बलं ।

१०४९ ॥ भावे । २ । ३ । १८ । धोर्भावे घञ् भवति । भवनं भावः । पाकः । त्यागः । रागः । कृदभिधेयो भावो लिंगसंख्यावान् द्रव्यवत् भवति ।

१०५० ॥ अकर्त्तरि ।२।३।१९। कर्त्तुरन्यस्मिन् कारके धोर्घञ्

भवति । प्रास्यते तामिति प्रासः। प्रतुद्यतेऽनेन प्रतोदः। दास्यतेऽस्मै इति दासः। आहरति तस्मात्-इत्याहारः। भुज्यतेऽस्मिन्-भोगः। इत्यादि।

१०५१ ॥ इङः । २ । ३ । २० । इङो धोर्भावेऽकर्त्तरि घञ् भवति । अचोऽपवादः । अधीयते इति-अध्यायः । उपेत्याधीयतेऽस्मात् इत्युपाध्यायः । उपाध्यायी । उपाध्याया । वह्वादित्वाद्वा ङी ।

१०५२ ॥ इणोऽभ्रेषे । २।३।३३। गिपूर्वादिणो धोरभ्रेषे विषयेऽर्थे वर्तमानादकर्त्तरि घञ् भवति । भ्रेषः स्वरूपाचलनं । एणोऽत्र न्यायः । एतदत्र साधुरित्यर्थः । भ्रेषे-न्यय गतः पापः । विशेष्यलिंगवचनानिव विशेषणानां ।

१०५३ ॥ य्वृग्रहृवृदृगमृवशृरणोऽच् । २ । ३ । ५४ । इ उ ऋ इत्येतदतेभ्यो ग्रह् वृ दृ गम् वश् रण् इत्येतेभ्यश्च धुभ्यो भावेऽकर्त्तरि अच् स्यो भवति, घञोऽपवादः। इ-चयः। जयः। क्षयः। क्षपः। उ-नवः। स्तवः। पवः। लवः। ऋ-तरः। धरः। ग्रहादि-ग्रहः। वरः। आदरः। गमः। वशः। रणः।

१०५४ ॥ स्थादिभ्यः कः । २ । ३ । ७० । स्थाप्रभृतिभ्यो धुभ्यो भावेऽकर्त्तरि कस्यो भवति । प्रतिष्ठतेऽस्मिन्-इति प्रस्थः । संतिष्ठतेऽस्यामिति संस्था । व्यवतिष्ठतेऽनयेति व्यवस्था । प्रस्नांत्य-स्मिन्निति प्रस्नः। प्रपिबन्त्यस्मिन् इति प्रपा। विध्यतेऽनेनेति विधः। " व्यधिश्यधि- " इत्यादिना यण इक् । आविध्यतेऽस्मिन्निति-आविधः । विहन्यतेऽस्मिन्ननेन वा विघ्नः । आयुध्यतेऽनेनेति-आयुधः ।

१०५५ ॥ ड्वितः क्त्रिः । २।३।७४। डुशब्देतो धोर्भावेऽकर्त्तरि क्त्रिस्यो भवति । क्त्रयतस्य केवलस्याप्रयोगात् " भावादिमः क्त्रेः" इतीमपर एव प्रयुज्यते । डुपचौञ्-पाकेन निर्वृत्तमित्यस्व-पदेन विग्रहः । पक्त्रिमम् । डुवपीञ्-उप्त्रिमं । डुयाचृ-याचित्रिमं ।

डुधाञ्-विहित्रिमं । डुकृञ्-कृत्रिमं ।

१०५६ ॥ गौ धोः किः । २ । ३ । ७८ । गौ वाचि मुसङ्गकात् धोर्भावेऽकर्तरि किर्भवति । प्रधान प्रधीयते इति घटो धाजो वा-प्रधिः । एवं विधिः । निधिः । उपाधिः । समाधिः । आदान आदीयतेऽस्मात् इति दारूपाणां चतुर्ण्णामन्यतमस्मात् कि. । आदिः ।

१०५७ ॥ कर्मण्याधारे । २ । ३ । ७९ । कर्मणि वाचि भारकर्तरि आधारे किर्भवति । जल धीयतेऽस्मिन्निति जलधि. । शरधिः । इषुधिः । वारिधिः ।

१०५८ ॥ युजयवृविच्छमच्छस्वप्रसो नङ् । २ । ३ । ७६ । युज् यत् विच्छ् प्रच्छ् स्वप् इत्येतेभ्यो भावेऽ कर्तरि नङ् भवति । युजन—युञ्जः । यत्नः । विश्नः । प्रश्नः । स्वप्नः । रक्षणः । विच्छेरनेवर्थे क्विकरण ।

१०५९ ॥ याच्ञा । २ । ३ । ७७ । याच्ञेति स्त्रियां भावेऽकर्तरि नङ् निपात्यते । याचन—याच्ञा ।

१०६० ॥ स्त्रियां क्तिः । २ । ३ । ८० । स्त्रीलिंगे भावेऽकर्तरि वर्तमानाद्धोः क्तिस्त्यां भवति । घञादेरपवादः । दृष्-दृष्टि । सृज्—सृष्टिः । चितिः । कृतिः । भ्रातिः । शातिः । "कस्य श्रत्क्रयाः क्षिति " इति दाँत्र । कीर्णिः ।

१०६१ ॥ शीणविन्निषन्निपद्सृल्वुसमजः । २ । ३ । ८१ । शीप्रभृतिभ्योऽकर्तरि स्त्रियां खौ क्यप् भवति । शेरतेऽस्या-मिति शय्या । यंत्यस्यामनयेति वा इत्या । विदत्यस्या तया वा कर्मकामौ इति विद्या । निपदत्यस्या निपद्या । निपयतेऽस्यां निषद्या । मन्यतेऽनया मन्या । सुनोत्यस्या सुत्या । समजत्यस्या समज्या । सरीति ।

समितिः । विचिः । मतिः । सुतिः । इत्यादि बहुलवचनात् सिद्धं ।

**१०६२ ॥ संपदादिभ्यः क्विप्क्तिः । २ । ३ । ९१ ।** संपदादिभ्यो धुभ्यो भावेऽकर्तरि स्त्रिया क्विब्भवति क्तिश्च । सपत् । सपत्तिः । विपत् । विपत्तिः । आपत् । आपत्तिः । परिपत् । परिपत्तिः । आशीः ।

**१०६३ ॥ ण्यासश्रिदुश्रंथिघट्टिवंदोऽनः । २ । ३ ।९४।** णि आस् विद् श्रथि घट्टि वद इत्येतेभ्यः स्त्रिया भावेऽकर्तरि अनस्त्यो भवति । णि इति णिङ्णिचोः सामान्यग्रहण । भावना । कामना । कारणा । हारणा । योजना। लक्षणा । आसना । वेदना। श्रथना । घट्टना । वदना ।

**१०६४ ॥ स्यात् । २ । ३ । ९९ ।** त्यातेभ्यो धुभ्यो भावेऽकर्तरि स्त्रियामत्यो भवति । कित रोगापनयने ।

**१०६५ ॥ किद्गुप्तिजः सन् भिषज्यादिनिंदाक्षमे । २ । १ । ३ ।** किद् गुप् तिज् इत्येतेभ्यो यथासंख्य भिषज्यादौ निंदायां क्षमायां चार्थे वर्तमानेभ्यः सन् इत्ययं त्यो भवति स्वार्थे । चिकित्सा। गुप् रक्षणे। "गुपूधूपविच्छपनपणेराय" इत्यायः। गोपाया। चिकीर्षा । पुत्रीया । पुत्रकाम्या । लोलूया [illegible] । अदाव्या ।

१०६८ ॥ षिद्भिदादिभ्योऽङ् ३ । ३ । १०४ । षितः भिदादिभ्यश्च स्त्रियामङ् भवति । वासुदेवः पठति ।

१०६८ ॥ हलश्च्वेरप् ५ । २ । १४३ । दशः श्रवणान्तानां च गूनामाङि परतः षप् भवति । इंसप् । रतत्व । टाप् । जरा । त्रपूष्-त्रपा । क्षिप्-अयादेशः । क्षया । क्षमूष्-क्षमा । घटादयः षितः । घटैप्-घटा । व्यथैप्-व्यथा । प्रथैपि-प्रथा । भिदा विदारणे । भित्तिरन्या । भिदा द्वैधीकरणे । विदा विचारणे । वित्तिरन्या । क्षिपा प्रेरणे । क्षितिः । इत्यादि ।

१०६९ ॥ चिंतिपूजिकथिकुंबिचर्चः । २ । ३ । १०२ । चिंत्यादिभ्यो भावेऽकर्तरि स्त्रिया अङ्‌यो भवति । चिंत्यादयो हि चुरादिण्यताः । णेः ख । चिंता । पूजा । कथा । कुंबा । चर्चा । भूषि-मेधिस्पृहिडोलिदोलिभ्यश्चेति वक्तव्यं । भूषा । मेधा । स्पृहा । डोला । दोला ।

१०७० ॥ गावातः । २ । ३ । १०३ । आकारांताद्धो-र्भावेऽकर्तरि स्त्रियामङ्यो भवति । प्रज्ञायते अस्या-प्रज्ञा । प्रदीयते ऽस्या प्रदा । प्रधीयतेऽस्या प्रधा । उपधा । "इटि चात्व" इत्यात्व । टाप् ।

१०७१ ॥ करणाधारे चानट् । २ । ३ । ११२ । करणे आधारे च भावे च धोरनट् भवति । घञाद्यपवादः । टित्वात् स्त्रिया ङीः । वृश्च्यतेऽनेनेति व्रश्चन । इध्मना व्रश्चनः इध्मव्रश्चनः । शात्य-तेऽनेनेति शातनः । पलाशाना शातनः-पलाशशातन. । लूयतेऽन-नेति लवन. । श्मश्रुकर्तनः । आधारे-शेरतेऽस्मिन् इति-शयन । आस्यतेऽस्मिन्निति आसन । अधिक्रियतेऽस्मिन्निति अधिकरण । गोर्दु-ह्यतेऽस्यामिति गोदोहनी । तिलाः पीड्यतेऽस्यामिति तिलपीडनी । सक्तुधाना । भावे-हसन । जल्पन । शयन । आसन । वदन । भोजनं । चंदनानुलेपन ।

समितिः । वित्तिः । मतिः । सुतिः । इत्यादि बहुलवचनात् सिद्धं ।

१०६२ ॥ संपदादिभ्यः क्विप्क्तिः । २ । ३ । ९१ । संपदादिभ्यो धुभ्यो भावेऽकर्तरि स्त्रियां क्विन्भवति क्तिश्च । सपत् । सपत्तिः । विपत् । विपत्तिः । आपत् । आपत्तिः । परिषत् । परिषत्तिः । आशीः ।

१०६३ ॥ ण्यास्विद्श्रंथिघट्टिवंदोऽनः । २ । ३ ।९४। णि आस् विद् श्रथि घट्टि वद इत्येतेभ्यः स्त्रियां भावेऽकर्तरि अनस्त्यो भवति । णि इति णिङ्णिचोः सामान्यग्रहणं । भावना । कामना । कारणा । हारणा । योजना । लक्षणा । आसना । वेदना । श्रथना । घट्टना । वदना ।

१०६४ ॥ त्यात् । २ । ३ । ९९ । त्यातेभ्यो धुभ्यो भावेऽकर्तरि स्त्रियामस्त्यो भवति । कित रोगापनयने ।

१०६५ ॥ किद्गुप्तिजः सन् भिषज्यादिनिंदाक्षमे । २ । १ । ३ । किद् गुप् तिज् इत्येतेभ्यो यथासंख्यं भिषज्यादौ निंदायां क्षमायां चार्थे वर्तमानेभ्यः सन् इत्ययं त्यो भवति स्वार्थे । चिकित्सा । गुपू रक्षणे । "गुपूधूप्विच्छिपन्पणेराय" इत्यायः । गोपाया । चिकीर्षा । पुत्रीया । पुत्रकाम्या । लोलूया । कंडूया । अटाट्या ।

१०६६ ॥ सरोर्हलः । २ । ३ । १०० । सह रुणा वर्तमानात् हलंताद्धोः भावेऽकर्तरि स्त्रियामस्त्यो भवति । कुडिङ् दाहे । उपदेशावस्थायामेव " इदितोर्नुम् " इति नुम् । कुंडा । हुडिङ् सपाते । हुंडा । शिक्षा । भिक्षा । ईहा । ऊहा ।

१०६७ ॥ पिद्भिदादिभ्योऽङ् । २ । ३ । १०१ । पिद्भ्यो भिदादिभ्यश्च भावेऽकर्तरि स्त्रियां अङ्त्यो भवति । जृष्—।

१०६८ ॥ ष्टुरेण् ६ । २ । १४३ । ष्टोः श्रवणांताना च गूनामाङ परत एण् भवति । इलेप् । रतत्व । टाप् । जरा । त्रपूष्–त्रपा । क्षिप्–अयादेशः । क्षया । क्षमूष्–क्षमा । घटादयःपितः । घटैप्–घटा । व्यथैप्–व्यथा । प्रथैपि–प्रथा । भिदा विदारणे । भित्तिरन्या । भिदा द्वैधीकरणे । विदा विचारणे । विचिरन्या । क्षिपा प्रेरणे । क्षितिः । इत्यादि ।

१०६९ ॥ चिंतिपूजिकथिकुंबिचर्चः । २ । ३ । १०२ । चिंत्यादिभ्यो भावेऽकर्तरि स्त्रिया अङ्ग्यो भवति । चिंत्यादयो हि चुरादिण्यताः । णेः ख । चिंता । पूजा । कथा । कुबा । चर्चा । भूषि-भेषिस्पृहिडोलिदोलिभ्यश्चेति वक्तव्य । भूषा । भिषा । स्पृहा । डोला । दोला ।

१०७० ॥ गावातः । २ । ३ । १०३ । आकारांताद्धो-र्भावेऽकर्तरि स्त्रियामङ्ग्यो भवति । प्रज्ञायते अस्या–प्रज्ञा । प्रदीयते ऽस्या प्रदा । प्रधीयतेऽस्या प्रधा । उपधा । "इटि चात्त्व" इत्यात्त्व । टाप् ।

१०७१ ॥ करणाधारे चानट् । २ । ३ । ११२ । करणे आधारे च भावे च धोरनट् भवति । घञादपवादः । ढित्वात् स्त्रिया ङीः । वृश्च्यतेऽनेनेति व्रश्चन । इध्मना व्रश्चनः इध्मव्रश्चनः । शात्य-तेऽनेनेति शातनः । पलाशाना शातनः–पलाशशातनः । लूयतेऽने-नेति लवन । श्मश्रुकर्तनः । आधारे–शेरतेऽस्मिन् इति–शयन । आस्यतेऽस्मिन्निति आसन । अधिक्रियतेऽस्मिन्निति अधिकरण । गोर्दु-ह्यतेऽस्यामिति गोदोहनी । तिलाः पीड्यतेऽस्यामिति तिलपीडनी । सक्तुधाना । नन्भावे–हसन । जल्पन । शयन । आसन । वदन । भोजनं । चदनानुलेपन ।

१०७२ ॥ पुंखौ घः प्रायः । २ । ३ । ११३ । घोः पुल्लिंगे खौ करणाधारयोः घस्त्यो भवति प्रायः । कचिद्भवति कचिन्न भवतीत्यर्थः । घकारः " छादेर्घे " इत्यत्र विशेषणार्थः । करणे–प्रच्छाद्यतेऽनेनेति प्रच्छदः । " छादेर्घे " इत्युक्तः प्रः । उरश्छाद्यतेऽनेनेति उरश्छदः । दंताश्छाद्यतेऽनेनेति दंतच्छदः । प्लवतेऽनेनेति प्लावः । आखन्यतेऽनेनेति आखनः । करः । आधारे–एत्य कुर्वंत्यस्मिन् इति–आकरः । एत्य लुनंत्यस्मिन्निति आलवः । एत्य पुनंत्यस्मिन्–आपवः । पुंखाविति किं ? प्रहरणी दंडः । पुंग्रहणं किं ? प्रदानं । प्राय इति किं ? प्रासादनः ।

१०७३ ॥ खनेर्डडरेकेकवकाश्च । २ । ३ । ११५ । खनेर्डौः करणाधारयोः पुंखौ ड डर इक इकवक इत्येते त्या भवंति । चकारात् घश्च । आखन्यतेऽनेनास्मिन् वा–आखः । आखरः । आखनिकः । आखनिकवकः । आखनः ।

१०७४ ॥ घञ् । २ । ३ । ११६ । खनेः करणाधारेषु घञ् भवति । आखानः । पृथग्वचनमुत्तरार्थं ।

१०७५ ॥ तॄस्त्रोऽवे । २ । ३ । ११७ । तृ स्तृ इत्येताभ्यां अवशब्दे वाचि करणाधारे पुंखौ घञ् भवति । अवतारः । समवतारः । अवस्तारः ।

१०७६ ॥ हलः । २ । ३ । ११८ । हलंताद्धोः करणाधारयोः पुंखौ घञ् भवति । घापवादः । वेदः । चेष्टः । वेगः । नेगः । लेखः । गंडः । बंधः । सगः । निमार्गः । विमार्गः । अपामार्ग । " घञि प्रायः " इति दीः । आरामः । प्रासादः ।

१०७७ ॥ स्त्रीपद्दुसि कृच्छ्राकृच्छ्रे सः । २ । ३ ।

१२१ । करणाधारनिवृत्त । सु ईषत् दुस् इत्येतेषु कृच्छ्राकृच्छ्रार्थेषु वाक्षु धोः खो भवति घञापवादः । कृच्छ्रं दुःख । अकृच्छ्रं सुख । यथासंभवं विशेषण । सुखेन शय्यते इति सुशय भवता । ईषच्छय भवता । दुःखेन शय्यते इति दुःशय भवता । एवं-सुकरः । दुष्करः । ईषत्करः कटो भवता । सुबोध काव्य । ईषद्बोध नाटक । दुर्बोध व्याकरण ।

१०७८ ॥ कर्तृकर्मणोर्भूकृञ्भ्यां च्वौ । २ । ३ । १२२ । खीषद्दुस्सु कृच्छ्राकृच्छ्रार्थेषु वाक्षु कर्तृकर्मणोश्च च्व्यर्थे वर्तमानयोः वाचोर्यथासंख्य भूकृञ्भ्यां खो भवति । सुखेनानाढ्येन आढ्येन भाव्यमिति निग्रहे-खः । " खित्यचे कृति, मुमचः " इति मुम् । स्वाढ्यंभवं भवता । ईषदाढ्यंभवं भवता । दुराढ्यंभवं भवता । सुखेनानाढ्य आढ्यः क्रियते स्वाढ्यंकरो जिनदत्त. । ईषदाढ्यंकरः । दुराढ्यंकरो भवान् ।

१०७९ ॥ आतोऽनः । २ । ३ । १२३ । खीषद्दुस्सु कृच्छ्राकृच्छ्रार्थे वाचि धोराकारांतादनल्यो भवति । खापवादः । सुखेन ग्लायते इति सुग्लान । ईषद्ग्लान । दुर्ग्लान । सुज्ञान । ईषज्ज्ञान । दुर्ज्ञान तत्त्व ।

१०८० ॥ शासृयुधिधृषिमृषिदृशोऽते । २ । ३ । १२४ । पूर्वयोगापेक्षयाते दुसि कृच्छ्रार्थे वाचि शास् युध् धृष् मृष् दृश् इत्येतेभ्यो धुभ्योऽनल्यो भवति । दुःशासन. । दुर्योधन. । दुर्धर्षणः । दुर्मर्षण. । दुर्दर्शनो राजा ।

१०८१ ॥ निषेधेऽलंखल्वोः क्त्वा । २ । ४ । ४ । निषेधवृत्त्योरलंखलु इत्येतयोर्वाचोर्धोः क्त्वाल्यो वा भवति । अलं कृत्वा । खलुकृत्वा । अल बाले रुदित्वा रुदितेन रोदनेन । पक्षेऽनद् च ।

१०८२ ॥ परकालेकर्तृकात् । २ । ४ । ७ ।
पर कालो यस्याः सा परकाला क्रिया तयैकः कर्ता यस्य स तथा । तस्माद् सवधिशब्दात् पूर्वकालत्ववाचिनो धोः क्त्वात्यो भवति वा । स्नात्वा भुंक्ते । भुक्त्वा व्रजति । व्रजित्वा करोति । कृत्वा शेते ।

१०८३ ॥ मृद्मृदुगुधकुषक्लिश्वदवसः क्त्व । १ । १ । ९५ ।
मृडादीनां क्त्वात्ये परे किद्वत्कार्यं भवति नान्येषां ।

१०८४ ॥ रुद्विद्मुषग्रहस्वपप्रच्छां सनि च । १ । १।९७। रुदादीनां सनि क्त्वात्ये किद्वद् भवति। रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा । सुप्त्वा । पृष्ट्वा ।

१०८५ ॥ नोद्स्थफवञ्चिलुञ्च्यृतितृषमृषकृशः क्त्व । १ । १ । ११० । नकारोऽवस्थकारफकारातस्य धोर्वंचि लुचि ऋति तृषि मृषि कृश इत्येतेषां किद्वद् कार्यं भवति क्त्व परे। श्रथित्वा, श्रंथित्वा । गुफित्वा, गुंफित्वा । वचित्वा । वंचित्वा । लुचित्वा । लुंचित्वा । ऋतित्वा । अर्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा, कर्शित्वा ।

१०८६ ॥ व्युङोऽवो हलः सन्क्त्वोः । १ । १ । १११ ।
वकारोङ्गो धोरिकारोङ्क्षावकारातस्य हलादस्सेटि सनि क्त्वात्ये च किद्वद् भवति वा । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा ।

१०८७ ॥ नशजोर्वा । ४ । ४ । ३३ । नशो जकारस्य च गोरुङ्के वकारस्य ख वा भवति क्त्वात्ये परे । नष्ट्वा । नंष्ट्वा । भक्त्वा, भंक्त्वा ।

१०८८ ॥ वोदितः । ५ । १ । ११० । उदितो धोः परस्य क्त्वात्यस्य वा इट् भवति । देवित्वा । वर्चित्वा । श्वसित्वा ।

पक्षे-ऊटादिः । धूत्वा । शृत्वा । ध्वस्त्वा । "दोसोमास्थां ति कितोद्" इतीत्व । सित्वा । मित्वा । क्ते दद्मोः इति ददादेशः । दत्त्वा । "धात्रो हिः" हित्वा ।

१०८९ ॥ हाकः क्त्वि । ५ । २ । १६२ । हाको हिरादेशो भवति क्त्वाल्ये । हित्वा राज्यं । "क्तिल्येऽदो जग्धः" इति जग्ध्वा ।

१०९० ॥ प्यास्तिवाक्से क्त्वः । ५ । १ । ३१ । तिसे वाक्से क्त्वाल्यस्य प्यादेशो भवति । प्रस्तुत्य । प्रकृत्य । अधिकृत्य । उच्चैः कृत्याचष्टे । नानाकृत्य गतः । तिवाक्से इति किं ? अकृत्वा । परमकृत्वा ।

१०९१ ॥ प्ये । ४।४।४० । हनादीनां प्ये परे खं भवति । प्रहत्य । प्रमत्य । प्रतत्य । प्रवत्य ।

१०९२ ॥ वा मः । ४ । ४ । ४१ । मकारांतानां हनादीनां प्ये परे खं भवति वा । नियत्य, नियम्य । विरत्य, विरम्य । आगत्य, आगम्य ।

१०९३ ॥ प्ये च । ४ । ३ । २० । दोको नित्यमात्वं भवति प्ये एधिविषये च । उपदाय । अवदाय । उपदाता ।

१०९४ ॥ मिञ्मीञोरखाचि । ४ । ३ । ५० । मिञ् मीञ् इत्येतयोरात्व भवति प्ये खाज्वर्जिते एध्विषये च । निमाय गतः । प्रमाय गतः ।

१०९५ ॥ वा लीङ्लिङनात्योः । ४ । ३ । ५१ । लिङ्लिङनात्योः आत्वं भवति वा प्ये खाज्वर्जिते एध्विषये च । विलाय, विलीय ।

१०९६ । णेः । ४ । ४ । ५७ । णेः खं भवत्यगे । प्रकाश्य । उत्तार्य । उपभोज्य । अनुभाव्य । अध्याप्य । प्रस्थाप्य । प्रतिपाद्य ।

१०९७ ॥ ल्येऽप् यिपूर्वात् । ४ । ४ । ६० । यिपूर्वात् वर्णात् परस्य णेरयादेशो भवति ल्ये परतः । प्रविभिदय्य । प्रचिच्छिदय्य । प्रशमय्य । प्रतमय्य । प्रकथय्य । प्रगणय्य गतः ।

१०९८ ॥ पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ् । २ । ४ । ८ । पूर्व अग्र प्रथम इत्येतेषु वाक्षु आभीक्ष्ण्ये च ख्यर्थोपाधौ गम्यमाने परकालैककर्तृकाद्धो खमुञ् भवति । पूर्वभोज । पूर्वं भुक्त्वा । अग्रे भोज । अग्रेभुक्त्वा । प्रथमभोज । प्रथम भुक्त्वा व्रजति । आभीक्ष्ण्ये-

१०९९ ॥ प्राग्भृशाभीक्ष्ण्याविच्छेदे । ५ । ३ । ३ । क्रियायाः साकल्यमवयवक्रियाणां वा कार्त्स्न्यं भृशार्थः । पुन पुनरावृत्तिराभीक्ष्ण्य । सातत्यमविच्छेदः । एतेषु यत्पर वाक्य वा वर्तते तस्य प्रागातिशाङ्कादे सर्वस्य द्वे रूपे भवतः । भोजभोज । भुक्त्वा भुक्त्वा व्रजति । पाय पाय । पीत्वा पीत्वा व्रजति ।

ईक्षमीक्ष तदा बाले रोध रोध च मामनु ।
आयमाय निवृत्ता या जीवेदेकाकिनी कथ ॥

११०० ॥ कर्मण्याक्रोशे । २ । ४ । ११ । कर्मणि वाचि करोतेरेककर्तृकात् खमुञ् भवति आक्रोशे गम्यमाने । चारकार, चोर कृत्वा क्रोशति । चौरोऽसीत्याक्रोशतीत्यर्थः ।

११०२ ॥ कृत् कर्त्तर्यसंज्ञि: । २ । ४ । ४८ । शिवर्जिताः कृतः कर्तरि भवति । कारकः । कर्ता । कुम्भकारः । असंज्ञीति किं ? कर्तुं व्रजति । कर्तुमिच्छति । कारकाय व्रजति । अनिर्दिष्टार्थास्तु प्रत्ययाः स्वार्थे भावे भवति ।

११०३ ॥ जन्भुगो यो वा । २ । ४ । ५१ । जन्भू-गा इत्येतेभ्यो यत्यो वा कर्तरि भवति । जन्यो देवदत्तः । जन्यं देवदत्तेन । भव्यो देवदत्तः । भव्यं देवदत्तेन । गेयो देवदत्तः गाथानां । गेया गाथा देवदत्तेन ।

११०४ ॥ श्लिष्शीङ्स्थास्वस्जनरुहजृभ्यारम्भात् क्तः । २ । ४ । ५४ । श्लिषादिभ्य धुम्य आरमार्थेभ्यश्च यः क्तः स कर्तरि वा भवति । आश्लिष्टो भवान् कन्यां । आश्लिष्टा कन्या भवता । शीङ्—अतिशयितं गुरु । अतिशयितो गुरुर्भवता । स्था—उपस्थितो गुरुं भवान् । उपस्थितो गुरुर्भवता । आस्—उपासितो गुरुं भवान् । उपासितो गुरुर्भवता । वस्—अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । जन्—अनुजातः कन्यां भवान् । अनुजाता कन्या भवता । रुह्—आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । जृ—अनुजीर्णो वृषलीं भवान् । अनुजीर्णा वृषली भवता । आरम्भः—प्रकृतः कटं भवान् । प्रकृतः कटो भवता । प्रकृतं भवता ।

११०५ ॥ तयोर्व्यक्तखलार्थाः । २ । ४ । ५८ । तयोः कर्मभावयोः व्यक्तखलार्था भवति । कर्तव्यः कटः । कार्यः कटः । कृतः कटः । सुकरः । सुकरं तस्य भवता । भावे—शयितव्य । शयित । सुशयं । सुशयनं भवता । सकर्मकात् कर्मणि अकर्मकात् भावे यथा स्युरेव इति व्यक्तखलार्थस्तयोरिति । स्यानद्

१०९७ ॥ ण्येऽय् विपूर्वात् । ४ । ४ । ६० । विपूर्वात् वर्णात् परस्य णेरयादेशो भवति ण्ये परतः । प्रविभिदय्य । प्रचिच्छिदय्य । प्रशमय्य । प्रतमय्य । प्रकथय्य । प्रगणय्य गतः ।

१०९८ ॥ पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ् । २ । ४ । ८ । पूर्व अग्र प्रथम इत्येतेषु वाक्षु आभीक्ष्ण्ये च क्त्वर्थोपाधौ गम्यमाने परकालैककर्तृकाद्धोः खमुञ् भवति । पूर्वंभोज । पूर्वं भुक्त्वा । अग्रेभोज । अग्रेभुक्त्वा । प्रथमभोज । प्रथमं भुक्त्वा व्रजति । आभीक्ष्ण्ये–

१०९९ ॥ पुनर्भृशाभीक्ष्ण्याविच्छेदे । ५ । ३ । ३ । क्रियायाः साकल्यमवयवक्रियाणां वा कार्त्स्न्यं भृशार्थः । पुनः पुनरावृत्तिराभीक्ष्ण्यं । सातत्यमविच्छेदः । एतेषु यत्पदं वाक्यं वा वर्तते तस्य प्रागातिखाद्यकादेः सर्वस्य द्वे रूपे भवतः । भोजंभोजं । भुक्त्वा भुक्त्वा व्रजति । पायं पायं । पीत्वा पीत्वा व्रजति ।

ईक्षमीक्षं तदा बाले रोधं रोधं च मामनु ।
आयमायं निवृत्ता या जीवंदेकाकिनी कथं ॥

११०० ॥ कर्मण्याक्रोशे । २ । ४ । ११ । कर्मणि वाचि करोतेरेककर्तृकात् खमुञ् भवति आक्रोशे गम्यमाने । चौरंकारं, चोर कृत्वा क्रोशति । चौरोऽसीत्याक्रोशतीत्यर्थः ।

११०१ ॥ समर्थास्त्यर्थज्ञकृषघटारभलभक्रमसहार्हे तुम् । २ । ४ । ४७ । समर्थार्थेषु अस्त्यर्थेषु शकादिषु च वाक्षु धोस्तुम् भवति । समर्थो भोक्तुं । पर्याप्तो भोक्तुं । अस्ति भोक्तुं । भवति भोक्तुं । शक्नोति भोक्तुं । धृष्णोति भोक्तुं । जानाति भोक्तुं । ग्लायति भोक्तुं । घटते भोक्तुं । आरभते भोक्तुं । आलभते भोक्तुं । प्रक्रमते भोक्तुं । सहते भोक्तुं । अर्हति भोक्तुं ।

११०२ ॥ कृत् कर्तर्यसंज्ञिः । २ । ४ । ४८ । क्विवर्जिताः कृतः कर्तरि भवति । कारकः । कर्त्ता । कुम्भकारः । असंज्ञिरिति किं ? कर्तुं व्रजति । कर्तुमिच्छति । कारकार व्रजति । अनिर्दिष्टार्थास्तुमादयः स्वार्थे भावे भवति ।

११०३ ॥ जन्भूगा यो वा । २ । ४ । ५१ । जन्-भू-गा इत्येतेभ्यो यस्यो वा कर्तरि भवति । जन्यो देवदत्तः । जन्यं देवदत्तेन । भव्यो देवदत्तः । भव्यं देवदत्तेन । गेयो देवदत्तः गाथानां । गेया गाथा देवदत्तेन ।

११०४ ॥ श्लिष्शीङ्स्थासवस्जनरुहजृषारंभात् क्तः । २ । ४ । ५४ । श्लिषादिभ्यो धुभ्य आरभार्थेभ्यश्च यः क्तः स कर्तरि वा भवति । आश्लिष्टो भवान् कन्या । आश्लिष्टा कन्या भवता । शीङ्—अतिशयितो गुरु । अतिशयितो गुरुर्भवता । स्था—उपस्थितो गुरु भवान् । उपस्थितो गुरुर्भवता । आस्—उपासितो गुरुं भवान् । उपासितो गुरुर्भवता । वस्-अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । जन्—अनुजातः कन्यां भवान् । अनुजाता कन्या भवता । रुह्—आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । जृष्—अनुजीर्णो वृषली भवान् । अनुजीर्णा वृषली भवता । आरभ—प्रकृत कटं भवान् । प्रकृतः कटो भवता । प्रकृतं भवता ।

११०५ ॥ तयोर्व्यक्तखार्थः । २ । ४ । ५८ । तयो' कर्मभावयोः व्यक्तखार्थौ भवति । कर्तव्यः कटः । कार्यः कटः । कृतः कटः । सुकरः । सुखान तस्य भवता । भावे—शयितव्य । शयित । सुशय । सुग्लान भवता । सकर्मकात् कर्मणि अकर्मकात् भावे यथा स्युरेते इति व्यवस्थार्थस्तयोरिति । ग्लानद्

बहुलमिति बहुलवचनात् अन्यत्रापि ल्यानटो भवति। ज्ञानमावृणोति आव्रियतेऽनेनेति वा ज्ञानावरणीयं। एवं दर्शनावरणीयं। वेदनीयं। मोहनीयं कर्म। स्नानीयं चूर्णं। दीयतेऽस्मादिति दानीयोऽतिथिः। निरदति तदिति निरदनं। राज्ञा भुज्यंते राजभोजनाः शाल्यः। संप्रदीयतेऽस्मा इति संप्रदानं। अपादीयतेस्मादिति-अपादानं। अत एवान्येऽपि कृतोऽन्यत्रापि भवति। पादाभ्यां ह्रियते इति पादहारकः। गलेन चुप्यते गलचोपकः। अत्र कर्मणि ण्वुः। चरोऽड्डुक्तः। मनसि हृतोऽपि। मनोहरतीति मनोहारी।

इति प्रक्रियावतारे कृद्विधिः षष्ठः समाप्तः।
समाप्तेयं प्रक्रिया।



सत्सधिं दधते समासमभितः ख्यातार्थनामोन्नतं
निर्णीतं बहुतद्धितं कृमिहाख्यातं यशःशालिना।
सैषा श्रीगुणनंदितांनितवपुः शब्दार्णवं निर्णयं
नावत्याश्रयतां विविक्षुमनसां साक्षात् स्वयं प्रक्रिया॥१॥
दुरितमदेभनिशुंभकुंभस्थलभेदनक्षमोऽग्रनखैः।
राजन्मृगाधिराजो गुणनंदी भुवि चिरं जीयात्॥२॥
सन्मार्गे सकलसुखप्रियकरे सज्ञापिते सद्भने
प्राग्वासस्सुचरित्रदानमलकः कांतो विवेकी प्रियः।
सोयं यः श्रुतकीर्तिदेवयतिपो भट्टारकोत्तंसको,
रंरम्यान्मम मानसे कविपतिः सद्राजहंसश्चिरं॥३॥

